( ১৯ )

বাঁধুলি অপরাজিতা ঝাঁটি বক জবা
পাটলা প্রভৃতি আরও পুষ্পশোভা কিবা।
চিত্রিত—ছবির মত—রম্য সে উদ্যানে
দৃষ্টি যেন লীন—নাহি যায় অন্য স্থানে ॥

रूपं समन्तान्नयनाभिरामं
रसः प्रसूनेषु मधुस्रवेषु ।
पुष्पेषु जातीप्रमुखेषु गन्धः
स्पर्शो लतापुष्पनवच्छदेषु ॥ २० ॥

शब्दस्तथा भृङ्गविहङ्गसङ्घे
गुणैः परैः पञ्चभिरेभिरेव ।
भावान्तरास्तित्वमपह्नुवानं
लीलावनं न्यायनयं जिगाय ॥ २१ ॥
युग्मकम् ॥

( ২০-২১ )

চারি ধারে নয়নাভিরাম রূপ শোভা
মধুস্রব পুষ্পচয়ে রস মনোলোভা।
গন্ধ জাতি যূথী আদি কুসুম নিচয়ে
সুকোমল স্পর্শ পুষ্পলতা কিশলয়ে ॥

ভ্রমর বিহঙ্গ কণ্ঠে শব্দ কি সুন্দর
এই পঞ্চগুণে মুগ্ধ মানব-অন্তর,
বুঝিতে না পারে, 'অন্য বস্তুও যে আছে'
তাই হারে ন্যায় মত উদ্যানের কাছে ॥ *

रराज वृत्ता हिमबिन्दुमाला-
वतंसदूर्व्वामयगर्भभूमिः ।
मध्यस्फुरत्पुष्पितजातिकुञ्जा
मुक्तामयी मारकतीव कल्ये ॥ २२ ॥

( ২২ )

সেই উদ্যানের ঠিক মধ্যস্থলে রয়—
বৃত্তভূমি—হিম-বিন্দু-শীর্ষ দূর্ব্বাময়।
মরকত ভূমি যেন শোভে মুক্তামাঝে
প্রাতঃ কালে, কুসুমিত জাতি কুঞ্জ মাঝে ॥

* প্রচলিত ন্যায় শাস্ত্রের মতে, দ্রব্য গুণ ইত্যাদি সপ্ত পদার্থ, পৃথিবী জল ইত্যাদি দ্রব্য, রূপ, রস প্রভৃতি উক্ত পঞ্চগুণ ও তদ্ব্যতিরিক্ত সংখ্যা পরিমাণ সংযোগ বিভাগ ইত্যাদি আরও অনেক গুণ আছে। তদতিরিক্ত আরও পাঁচটি পদার্থ আছে, কিন্তু এই উদ্যান মানবকে এমনই মুগ্ধ করে, যে, এই উদ্যানের অপূর্ব রূপ, রস, গন্ধ, স্পর্শ ও শব্দ ব্যতীত আরও কিছু যে আছে তাহা সে বুঝিতেই পারে না। কাজেই তাহার নিকটে শাস্ত্র সম্মত অন্য পদার্থের অস্তিত্ব বিলুপ্ত—ইহাই উদ্যানের নিকট ন্যায়মতের 'হার'—পরাজয়।

प्रवालपुष्पाभरणाचिताङ्गी
पुष्पासना हेमसरोजरम्या ।
लावण्यलीलेव गृहीतमूर्त्ति-
र्विराजिता काचन तत्र कुञ्जे ॥ २३ ॥

( ২৩ )

অপূর্ব্বা রমণী এক সেই কুঞ্জমাঝে—
প্রবাল কুসুম ময় ভূষণে বিরাজে।
পুষ্পাসনা যেন স্বর্ণ কমলে গঠিতা
বুঝি তিনি মূর্ত্তিমতী লাবণ্য দেবতা॥

तां वीक्ष्य नारीमनवद्यरूपां
तेजोविशेषोदितपूज्यभावाम् ।
स्वयं प्रणामप्रवणेन मूर्द्ध्ना
संसेवितुं तत्पदमभ्यगच्छम् ॥ २४ ॥

( ২৪ )

সে অনিন্দ্য সুন্দরীর তেজের প্রভাব
বুঝাইল মোরে তাঁর পূজনীয় ভাব।
আপনিই নত হ'ল মস্তক আমার
সেবিতে গেলাম আমি চরণ তাঁহার॥

तथाविधायां मम सा तु देवी
स्विन्ना विवर्णा विमुखी कराला।
विम्लानपुष्पाभरणासना च
बभूव सद्यस्तमसीव मग्ना ॥ २५ ॥

( ২৫ )

তখনি বহিল তাঁর দেহে স্বেদধারা
বিবর্ণা বিমুখী তিনি ভয়ঙ্করাকারা।
ম্লান - পুষ্প-আভরণা ম্লান - পুষ্পাসনা
ঘোর অন্ধকারে যেন হ'লেন মগনা॥

विलूनमूलेव रसोज्झितेव
प्रोन्मूलितेवोन्मथितेव सद्यः।
निष्पीडितेवाग्निशिखाहतेव
निकुञ्जजाती सहसा शुशोष ॥ २६ ॥

( ২৬ )

হ'য়ে যেন ছিন্নমূল, রস-বিবর্জিত
উৎপাটিত কিংবা পুনঃ পুনঃ নিমথিত।
নিষ্পীড়িত, কিংবা অগ্নি শিখাহত প্রায়
তখনই হইল শুষ্ক জাতী-কুঞ্জ হায়॥

कुञ्जप्रसूनानि विकाशभाञ्जि
निपेतुरुर्व्व्यां मलिनीभवन्ति ।
निःशेषभुक्तोचितदेवलोका-
स्तारविशेषा इव पुण्यशेषे ॥ २७ ॥

( २१ )

সেই কুঞ্জে বিকসিত কুসুম নিচয়
ম্লান হ'যে, ধরাতলে লইল আশ্রয়।
ভোগে পুণ্য ক্ষয়ে স্বর্গ হ'তে নিপতিত
মর্ত্তভূমে ধূলিসাৎ নক্ষত্রের মত॥

प्रेतीभवच्छ्वेतकपोत-पोत-
मूर्द्धेव सा सा कलिका तदीया ।
विच्छायताधिक्रियमाणवर्णा
वृन्तांशभूमौ लुठति स्म सद्यः ॥ २८ ॥

( २৮ )

সদ্যোমৃত ধবল কপোত শাবকের
মুণ্ড সম দশা হেরি জাতী কোরকের।
ম্লান বৃন্ত-অংশে কান্তিহীন অধোমুখে
লুটায় বিবর্ণ হ'য়ে হায় মরি দুখে।

विशेषतः शुष्कलतान्त्रमाला
तेषामनेकेष्वपि लम्बमाना ।
प्रेतत्वबुद्धिं तरसा दधाना
तदास्पदं घोरतरीचकार ॥ ३३ ॥

( ৩৩ )

বিশেষে কতেক তরু রহে তা'র মাঝে
স্কন্ধে দোলে শুষ্কলতা অন্ত্রমালা সাজে ।
ভয়ঙ্কর প্রেত-জ্ঞান তাহাতে জনমি
আরও ভয়াবহ করে সে শ্মশান ভূমি ॥

सद्यः स्वनद्वायसवासतेयी
शाखावली शुष्कतरा तरूणाम् ।
जाताश्च वृक्षाः शतपत्रपत्रि-
चञ्चूखनिक्षतिरिक्तगर्भाः ॥ ३४ ॥

( ৩৪ )

কা-কা-রব করি কাকদল মন সাধে
অতি শুষ্ক বৃক্ষ ডালে বসি বাসা বাঁধে ।
শতপত্র পক্ষী* লৌহ চঞ্চুর প্রহারে
শুষ্ক বৃক্ষে ছিদ্র করি রিক্তগর্ভ করে ॥

* কাঠ-ঠোকরা পাখী ।

लुप्तं शरत्सारसशस्यहास्यं
समागतं शीतनिशीथदौस्थ्यम्।
लीना क्षणाद्द हर्षविकाशलीला
विषाददास्यं गतमेव विश्वम् ॥ ३५ ॥

( ৩৫ )

তিরোহিত শরতের শস্য হাস্য মুখ
আসিল শীতের ঘোর নিশীথের দুখ।
ফুরাল আনন্দলীলা সকলি তখন
বিষাদের কালিমায় ভরিল ভুবন॥

तमालनीलस्तमसां समूहोऽ-
ग्रसिष्ट शीर्णद्युतिपुष्पवन्तौ।
द्यावापृथिव्योरपि चान्तरालं
विलुप्तदृक्शक्तिकमध्यकार्षीत् ॥ ३६ ॥

( ৩৬ )

আসিল তমাল-নীল গাঢ় তমোরাশি
প্রভাহীন দিবাকর নিশাকর গ্রাসী।
স্বর্গমর্ত্ত্য অন্তরালে হ'ল দৃষ্টিলোপ—
অন্ধকার অধিকারে যেন দৈবকোপ॥

दूर्व्वाघनश्यामलवृत्तभूमिः
सा सद्य एवोपरतां मपेदे ।
महाविषाणामिव पन्नगानां
दग्धा विषश्वाससमीरणेन ॥ २९ ॥

( ২৯ )

সেই বৃত্তভূমি ঘন দূর্ব্বাশ্যাম কায
তখনি উবর হ'ল ঢাকা বালুকায ।
মহাবিষ আশীবিষ নিশ্বাসের বিষে
যেন দগ্ধ হ'ল হায চক্ষুর নিমিষে ॥

निःसौरभा निर्म्मकरन्दलेशा
गतप्रसूना कलिकाविहीना ।
अपेतभृङ्गा कलनादशून्या
निष्पल्लवा शुष्कपलाशवृक्षा ॥ ३० ॥

विलोचनक्लेशकरी समन्ता-
न्निःशेषलुप्ताखिलपूर्व्वभावा ।
ब्रह्माभिशापोपहतेव मध्यः
सोद्यानभूरेवमुपाजनिष्ट ॥ ३१ ॥

युग्मकम् ॥

( ৩০-৩১ )

না সৌরভ, নাহি বহে মকরন্দ লেশ-
পুষ্প চয়ে কলিকাও নাহি রহে শেষ।
নাহি গুঞ্জে অলি, নাহি পক্ষি কলরব
কিশলয় নয় হ'ল শুষ্কপত্র সব॥

যে দিকে নিরখি,-তুল্য ঝরে অশ্রুজল
স্মরিয়ে সৌন্দর্য্য পূর্ব্বে কি ছিল কি হ'ল।
যেন ঘোর ব্রহ্ম শাপে হ'য়ে উপহত
সে উদ্যান লভে আজ দশা এই মত॥

प्रेतैरिव क्षौणिरुहैरनेकैः
कङ्कालशेषानिव बाहुदण्डान्।
प्रसार्य्य शुष्कान् विटपान् परीता
बभूव सा घोरपरेतभूमिः॥ ३२॥

( ৩২ )

শুষ্ক বহু বৃক্ষ প্রেত প্রায় অস্থিসার
বাহু সম শুষ্ক শাখা করিয়ে বিস্তার।
দাঁড়াইয়া থাকি, লুপ্ত উদ্যানের স্থান
পরিচয় দেয় 'এ যে ভীষণ শ্মশান'॥

विशेषतः शुष्कलतान्त्रमाला
तेषामनेकेष्वपि लम्बमाना ।
प्रेतत्वबुद्धिं तरसा दधाना
तदास्पदं घोरतरीचकार ॥ ३३ ॥

( ৩৩ )

বিশেষে কতেক তরু বহে তা'ব মাঝে
স্কন্ধে দোলে শুকলতা অন্ত্রমালা সাজে ।
ভয়ঙ্কর প্রেত-জ্ঞান তাহাতে জনমি
আরও ভয়াবহ করে সে শ্মশান ভূমি ॥

सद्यः स्वनद्वायसवासतेयी
शाखावली शुष्कतरा तरूणाम् ।
जाताश्च वृक्षाः शतपत्रपङ्क्ति-
चञ्चूखनित्रक्षतिरिक्तगर्भाः ॥ ३४ ॥

( ৩৪ )

কা-কা-রব করি কাকবৃন্দ বন মাঝে
অতি শুষ্ক বৃক্ষ ডালে বসি বাসা বাঁধে ।
শতপত্র পক্ষী* লৌহ চঞ্চুর প্রহারে
শুষ্ক বৃক্ষে ছিদ্রকরি রিক্তগর্ভ করে ॥

* কাঠ ঠোকরা পাখী ।

लुप्तं शरत्सारसशास्यहास्यं
समागतं शीतनिशीथदास्यम्।
लीना क्षणाद् हर्षविकाशलीला
विषाददास्यं गतमेव विश्वम्॥ ३५॥

( ৩৫ )

তিরোহিত শরতের শস্য হাস্য মুখ
আসিল শীতের ঘোর নিশীথের দুখ।
ফুরাল আনন্দলীলা সকলি তখন
বিষাদের কালিমায় ভরিল ভুবন॥

तमालनीलस्तमसां समूहोऽ-
ग्रसिष्ट शीर्णाद्युतिपुष्पवन्तौ।
द्यावापृथिव्योरपि चान्तरालं
विलुप्तदृक्शक्तिकमध्यकार्षीत्॥ ३६॥

( ৩৬ )

আসিল তমাল-নীল গাঢ় তমোরাশি
প্রভাহীন দিবাকর নিশাকর গ্রাসি।
স্বর্গমর্ত অন্তরালে হ'ল দৃষ্টিলোপ—
অন্ধকার অধিকারে যেন দৈবকোপ॥

अस्तं गतः सर्व्वगतः प्रसादः
समासदत् कश्चन भीमभावः ।
मनो ममासीदतिभारखिन्नं
विश्वं विपर्य्यस्तदशं विलोक्य ॥ ३७ ॥

( ৩৭ )

ছিল যে প্রসন্নভাব সর্ব্বত্র সুন্দর
লুপ্ত হ'ল তাহা, আসে ভাব ভয়ঙ্কর।
এই রূপে বিশ্বে হেরি দশা বিপর্য্যয়
দুঃখভারে নু'য়ে পড়ে আমার হৃদয় ॥

आधारभूमिर्मम घूर्णमाना
मया समं निम्नमुखी बभूव ।
तृणादिना वेगवशीकृतेन
समं यथावर्त्तजलप्रवाहः ॥ ३८ ॥

( ৩৮ )

যেমন প্রবল বেগে ল'য়ে তৃণাদিকে
আবর্ত্ত সলিল রাশি ছুটে নিম্ন দিকে।
তেমতি আশ্রয় ভূমি হইয়ে ঘূর্ণিত
রসাতল পানে যায় আমার সহিত ॥

स्वेदः शरीरे वदने विशोषो
　　हृदि प्रकम्पश्च भिया निरर्थाः।
उद्धारचेष्टाश्च भवत्-कृपान्तात्
　　स्वप्नात् प्रबोधं विदधुर्ममाशु ॥ ३९ ॥

( ৩৯ )

ভয়ে স্বেদ বহে দেহে, বিশুষ্ক বদন,
দুরু দুরু কাঁপে হিয়া, উদ্ধারে যতন
বিফল সমস্ত হ'ল; আপনার দয়া-
আশাল'য়ে ভাঙ্গে স্বপ্ন, উঠিনু জাগিয়া ॥"

हर्य्यश्वसूनुरितिभीतिपरीतचेता
　　यं स्वप्नमिष्टविनिपातफलं बभाषे ।
पूर्व्वं प्रजापतिमलङ्घ्यविधिप्रदिष्टा
　　तस्याशुभा परिणतिः क्रमशः प्रवृत्ता ॥४०॥

( शिवलीलापक्षे ) हर्य्यश्वाः सूनवो यस्य सः दक्षः, ( दक्षस्य हर्य्यश्वा नाम पुत्रा आसन्, इति विष्णुपुराणम् ) प्रजापतिं ब्रह्माणम्। ( पक्षान्तरे ) हर्य्यश्वः हरिहयः इन्द्रः सूनुः पुत्रो यस्याः सा अदितिः। प्रजापतिं कश्यपम् ॥ ४० ॥

इति कविकुल-लालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये स्वप्नवर्णनं नाम चतुर्थः सर्गः ॥ ४ ॥

( ৪০ )

হর্য্যশ্ব জনক দক্ষ *
পূর্ব্বে যে স্বপন
সভয়ে করিলা
পিতৃপদে নিবেদন।
দৈবের বিধান মত—
ক্রমশ তাহার
অমঙ্গল ফল ঘটে
ইষ্টের সংহার ॥

( ৪০ )

যে স্বপ্ন অদিতি হেরি
হরিহয় - মাতা †
পতিপদে জানাইলা
হ'য়ে অতি ভীতা।
তারি ফল—ইষ্টহানি,
দৈবের লিখন
ইন্দ্রে মুনিশাপ—
স্বর্গে দৈত্য আক্রমণ ॥

ইতি 'সর্ব্বমঙ্গলোদয়' নামক দ্ব্যর্থকাব্যে 'স্বপ্নবর্ণন' নামক চতুর্থ সর্গ ॥

---

* দক্ষ প্রজাপতির 'অসিক্নী' নাম্নী পত্নীর গর্ভে 'হর্য্যশ্ব' নামে প্রসিদ্ধ পুত্রগণ জন্মিয়াছিলেন। (বিষ্ণুপুরাণ।)

† হর্য্যশ্ব—এই নামের অনুরূপ শব্দ 'হরিহয়' হরিহয় ইন্দ্রের একটি নাম। হরিহয় মাতা=ইন্দ্রের জননী অদিতি।

## पञ्चमः सर्गः ।

यदागतं भीमवलं द्विपद्वलं
बभूव तत्पूर्व्वत एव सर्व्वतः ।
विपर्ययोऽसावशुभस्य सूचको
विचुक्षुभे येन स नाकनायकः ॥ १ ॥

(शिवलीलापक्षे) यदा यस्मिन् काले, द्विपत् शत्रुभूत बलं बलवत् भीमबल भीमस्य रुद्रस्य बल सेना प्रमथवाहिनी आगतं दक्षपुरे उपस्थितम् तत्पूर्व्वतः, तस्मात् प्रागेव, सर्व्वतः चेतनेषु अचेतनेषु च अशुभस्य सूचकः असौ सः विपर्य्ययः भाववैपरीत्य बभूव. येन विपर्य्ययेण, सः पूर्व्वप्रक्रान्तः कः दक्ष, अकनाय कुटिलगतये न ( न+अकनाय कः, इतिच्छेदेन नाकनायक इत्यस्य पाठात् ) विचुक्षुभे समचलत् । कुटिल-गतिश्च कन्यामरणफलककर्म्ममार्गेण गमन तादृशयज्ञानुष्ठानमित्यर्थः । ( अक अग कुटिलाया गताविति अकधातोल्युॅट् प्रत्ययेन अकनमिति तस्मै, तदर्थम् ) एवं यज्ञानुष्ठानं मया क्रियते इत्येतदर्थं दक्षस्य विक्षोभो नासीत् सोऽपि विपर्यय एव, कथमन्यथा साक्षाद् ब्रह्मणः पुत्र स्वय प्रजापतिर्दक्ष एव कृत्वाप्यनुतप्तो नाभूदित्यर्थः ।, यद्वा अकन. कन्याया अभावकरण ( कन्याया अभावः अकन्यम् तत्करणम् इति करोत्याद्यर्थे सुबन्ताण्णिचि भावे घञ्प्रत्ययात् 'यस्य हल.' इति सूत्रेण यकार-लोपात् ) येन कर्म्मणा कन्याया. तस्याः अभावः दक्षालये तस्या अत्य-न्ताभावः तत्कर्म्म शिवहीनयज्ञानुष्ठानम्, नास्ति विध्वसते कन्या येन तत्कर्म्म करण शिवनिन्दनमिति वा; तदर्थं न विचुक्षुभे -न्निरर्तक-विक्षोभ-

युतो नाभूदित्यर्थः, सोऽपि विपर्य्यः अन्यथा ततस्तस्य निवृत्ति-र्भवेद् इति भावः। (पद्यान्तरे) यदा भीमबल भीपणबलसम्पन्न द्विपद्बल असुरवाहिनी आगत स्वर्गमाक्रान्तवत् तत्पूर्व्वतः तत्पूर्व्वकालमारभ्य सर्व्वतः भारते स्वर्गे च अथवा चेतनेषु अचेतनेषु च अशुभसूचको विपर्य्ययो बभूव, येन सः नाकनायकः इन्द्रः विचुक्षुभे, विक्षोभ व्याकुलता प्राप्तः। किमनिष्टं भविष्यतीति शङ्काकुलोऽभूदिति भावः॥ १॥

( ১ )

যখন আসিল রুদ্র-
বাহিনী প্রবল
সতী মৃত্যু হেতু দক্ষে
দিতে প্রতিফল।
তা'র পূর্ব্ব হ'তে নানা
দুর্নিমিত্ত হ'ল,
তবু দক্ষ বক্রপথ
ত্যাগ না করিল॥

( ১ )

ভীমবল দৈত্য সেনা
স্বর্গপুর যবে
আক্রমণ করে তা'র
পূর্ব্ব হ'তে সবে, *
অশুভ সূচক ঘটে
নানা বিপর্য্যয়;—
যা'তে হ'ন দেবরাজ
সশঙ্ক হৃদয়॥

सभारते यत्र सुरासुरक्षण-
क्षणः पुरैवस्यत पुण্यलक्षणे।
न रोगशोकौ न जरापराभवो-
ऽभवन्नरा दैन्यविडम्बितो जनः॥ २॥

* সবে=সর্ব্বে।

(शिव० पक्षे) सभारते सभाया परिषदि त्रैविद्यादिसमवाये रते अनुरक्ते पुण्यलक्षणे पवित्रस्वरूपे यत्र पुरे सुरासुराणाम् अदितिदिति-दनुनाम दक्षकन्या तनयाना क्षणस्य उत्सवस्य क्षणोऽवसरः अवेक्ष्यत तत्स्थानरथैरदृश्यत, न रोगशोकावित्युत्तरार्द्धं सुगमम् । (पक्षान्तरे) यत्र भारते, पुरे वा स्वर्गे च, वाकारः समुच्चये, सुराणाम् असु-रक्षणक्षण-प्राणरक्षणोत्सवः—यज्ञः, यज्ञभुजो हि देवाः, अमृतोद्भवात् पूर्व्वं यज्ञैनैव तेषां प्राणरक्षणम् अभूदित्यर्थः, यज्ञस्थानञ्च केवल भारतभूमिः अतस्तत्रैव तादृगुत्सव इति भावः । अथवा असु चित्तम् सुरेषु यदसुरक्षणं चित्त-स्थापन तस्योत्सवः, सोऽपि यज्ञः 'तां देवतां ध्यायेद्, वषट् करिष्यन्' इति श्रुतेः । स्वर्गपक्षे सुरैः आसमन्तात् सुरक्षणं तेन उत्सवः स एवोत्सव इति वा । ऐक्ष्यत स्वर्गवासिभिरिति शेषः । अन्यत् समानम् ॥ २ ॥

( २ )

যে-ই দক্ষ পুরে সুরা
সুর মহোৎসব
সহর্ষে দেখিত
পুরবাসী জন সব।
না রোগ, না শোক,
নাহি জরাপরাভব
দরিদ্রের নাহি ছিল
যেথা আর্ত্তরব ॥

( ২ )

যে ভারতে যে স্বরগে
দেবতার প্রাণ
রাখিতে উৎসব যজ্ঞ
ভোগের বিধান।
রোগ শোক নাহি ছিল—
জরাভয় আর
নাহি ছিল দীন হীন
জন হাহাকার ॥

**सदा सुधाधामसुधामहासिनीं सुधांशुधामद्युतिसन्ततिं सतीम् ।**
**विलोक्य लोका नयनाशितम्भवां भवस्य नाथीयुरधीयुरेव वा।३।**

( शिवलीलापक्षे ) लोकाः, सुधाधाम्नश्चन्द्रस्य सुधामानि निर्म्मलतेजांसि हसितुमुपहसितुं शीलमस्याः, ता चन्द्रतेजोऽधिकदिव्यतेजःशालिनीं सतीं यत्र पुरे वर्त्तमानामित्यर्थः नयनाशितम्भवा नेत्रतृप्तिदायिनी सुधाशुधामद्युतिसन्ततिं सुधैव लेपनविशेष एव अंशवः किरणा येषां तेषां धाम्ना सौधाना द्युतिसन्ततिं विलोक्य अथवा विमलज्योत्स्नावद्दशहास्यशालिनीं चन्द्रमौलेः शिवस्याधिकद्युतिकरीं सतीं दाक्षायणीं विलोक्य भवस्य संसारस्य न अधीयुः संसारं विस्मृतवन्तः अथवा भवस्य अधीयुरेव शिवं स्मृतवन्त एव आद्ये वर्णसाम्यात् अन्त्ये जायादर्शनादिति भावः । ( पक्षान्तरे ) सुधाधाम्नः कर्पूरस्य सुधामहासिनीं निर्म्मलकान्तिजयिनीं सुधाशुधाम्ना सुधायोरिव धाम तेजो येषां तेषां शुक्रादीनाम् सुधाशुधामानि चन्द्रमौलिव्यासदाश्रया एकादश रुद्राः तेषां वा द्युतिसन्ततिं विलोक्य । अन्यत्समम् ॥ ३ ॥

( ৩ )

যেথা সুনির্ম্মল জ্যোৎস্না
সম হাস্য-মুখী
দাক্ষায়ণী সতী হেরি
হ'ত সবে সুখী।
ভুলিত যে, ভবে (১) মনে
সে পুণ্য দর্শনে
কিংবা হেরি ভব (২) জায়া
ভবে পড়ে মনে॥

( ৩ )

যেথা সুধাকর দ্যুতি
বিজয়ী প্রভায়
উদ্ভাসিত সৌধমালা
কিবা শোভা পায়
যে লোক নিরখে তায়,
সেই ক্ষণে (১) ভুলে, (২)
অথবা ক্ষণের (৩) স্মৃতি
অন্তরে উথলে॥

(১) ভব—সংসার। সৌন্দর্য্য মুগ্ধ হইয়া সংসার ভুলিয়া যায়।
(২) ভব শিব। (৩) সমুজ্জ্বলবর্ণ সৌধমালা দর্শনে রজত-গিরি নিভ শিবের স্মৃতি—অন্তরে জাগিয়া উঠে।

सुखस्रवन्ती परितो विसारिणी ।
सदावगाहेऽपि निराकुलान्तरा
बभूव दुःखातपतापहारिणी ॥ ४ ॥

दक्षपुरपक्षे भारतपक्षे च सुरा सुखजनिका स्रवन्ती नदी सुरः स्वर्ग तस्य नदी गङ्गा इति वा। स्वर्गपक्षे सुखमेव स्रवन्तीति। नदीपक्षे प्रमोदलीलेव लहरीविलासस्तद्वती प्रमोदलीला इव लहर्यः ताभिर्विलासिनीति या, स्वर्गपक्षे प्रमोदलीला एव लहरीविलासास्तद्वती। अव गाह = नदीपक्षे आलोडनम्, स्वर्गपक्षे भोग ॥ ४ ॥

( ৪ )

আমোদ-প্রমোদ লীলা লহরী তুলিয়া—
যেথা সুখ তরঙ্গিণী যাইত বহিয়া।
সদা অবগাহনেও আবিল, না হয়—
দুঃখের আতপ তাপে, করিয়াছে ক্ষয় ॥ *

---

* এই ভাব দশপুর পক্ষে এবং ভারত ও স্বর্গ পক্ষে তুল্য বলিয়া পৃথক পদ্যদ্বারা বর্ণনা করা হইল না। সংস্কৃত টীকায় স্বর্গপক্ষে যে বিশেষ আছে, তাহা অনুবাদে না থাকিলেও তাদৃশ ক্ষতি নাই। তন্নিমিত্ত এক প্রকার বলিয়া ১৩ শ্লোক বাদে ১৮ শ্লোক পর্য্যন্ত এক একটি পদ্যই থাকিবে। ১৩ শ্লোকে একটু বিশেষ থাকাতে দুইটি পদ্য থাকিবে।

बभूव तस्मिन्ननिमित्तदर्शनम् ।
उपायती तेन विपद्‌ विनिश्चिता
यथा प्रवृष्टिस्तडितोन्मुखश्रिया ॥ ५ ॥

कलापकम् ।

उन्मुखश्रिया = ऊर्द्ध्वमुखस्फुरणया प्रवृष्टिः = प्रकृष्टा वृष्टिः न तु विन्दुमात्रवर्षणम् ॥ ५ ॥

( ৫ )

সেই পুণ্যময় স্থানে কিছুদিন হ'তে
দুর্নিমিত্ত দরশন লাগিল হইতে।
আসন্ন বিপদ তাহে হইল নিশ্চয়
উন্মুখ বিদ্যুতে বৃষ্টি অনুমান হয়॥

तडिद्विलासादिकदीपभास्वरे
न यत्र नक्तन्दिवभेदवेदनम् ।
महातमोराशिरनिश्चितागम-
श्चकार तत्रैव पदं क्षणे क्षणे ॥ ६ ॥

दशपुरे भारते च यद्‌ दुर्निमित्तमभूत्तद्‌ वर्णयति तडिदित्यादिना । वेदनं ज्ञानम् ॥ ६ ॥

( ৬ )

তাড়িত আলোক আদি দীপে জ্যোতির্ম্ময়
যেথায় রাত্রি কি দিন না হয় নির্ণয়।
তথায় তিমির রাশি আসে ক্ষণে ক্ষণে
কোথা হ'তে আবির্ভাব কেহ নাহি জানে॥

सुरालया दृष्टनिमित्तमन्तरा
क्रमादभज्यन्त विलोपलक्षणम् ।
विचित्रमेतत्तु सुरालयोच्चय-
स्तदैव तत्रोपचितो व्यलोक्यत ॥ ७ ॥

दृष्टनिमित्तं प्रबलवायुभूकम्पादिकारणम् अन्तरा विना । विलोपलक्षणं यथा स्यात्तथा अभज्यन्त भग्नाः । यादृशो हि भङ्गः देवालयसमूहस्य विलोपसूचकस्तादृशोऽभूदित्यर्थः । एवं सति तदैव सुरालयानाम् उपचयो विस्मयावह इत्याह—विचित्रमिति । समाधानन्तु उत्तरार्द्धे सुरालयः मद्यस्थान सुरायाः=आलयः, उत्पत्तिस्थान विक्रयस्थान च ॥ ७ ॥

( ৭ )

ঝড় জল নাহি কোন প্রত্যক্ষ কারণ,
একে একে দেবালয় হ'তেছে পতন।
লোপোন্মুখ সুরালয়, কিন্তু সুরালয়
প্রতিদিন কত কত লভে উপচয়॥

(১) বিনা মেঘে বজ্রাঘাতের ন্যায় দেবালয় সমূহ অকস্মাৎ

परश्रिया हृष्टतमा महोदया
दयामयान्तःकरणा निरन्तरम्।
शुचिस्मितोत्फुल्लविलोचनाम्बुजा
विभान्ति यस्मिन् सुमनः प्रजाः पुरा ॥ ८ ॥

सुमनः प्रजाः मनस्विन्यः प्रजाः ॥ ८ ॥

( ৮ )

যেথায় মনস্বী প্রজা দয়ার আধার
অন্যের সম্পদে লভি' আনন্দ অপার।
সতত সহাস্য আস্য প্রফুল্ল নয়ন
বিশেষ উন্নত পূর্ব্বে ছিল যত জন॥

परं परद्वेषविसूचिचक्षुषः
सुखोज्झिताः स्वेतरसम्पदागमे।
परोपतापप्रमदास्तदाश्रिता-
स्तदा सदासन्नसदाशया हि ताः॥९॥ युग्मकम्।

( शिव० पक्षे ) तदाश्रिताः तत्पुरवासिन्यः ताः प्रजाः हि एव असदाशया दुष्टाशयाः अभूवुरिति शेषः। मनस्विन्यः प्रजा अपि दुष्टाशया जाताः। अथवा तदाश्रिता. तत्पुरमाश्रिताः जना इतिशेषः,

---

ভাঙ্গিয়া পড়িতে থাকিল আর মদের দোকান ইত্যাদি বাড়িতে লাগিল। প্রথম সুরালয় শব্দের অর্থ, দেবালয়, দ্বিতীয় সুরালয় শব্দে সুরা+আলয়, মদের স্থান—মদের দোকান, মদের ভাটি ইত্যাদি।

समवायसम्बन्धेन ते सदिताः मिथः शत्रवस्त्वेति अनवायवार्दिताः । (पक्षान्तरे) तदाश्रिताः मारताश्रिता इत्यर्थः ॥ ६ ॥

( ৯ )

তথায় তাদের শত্রু ভাবের বাহুল্য,
পর দ্বেষ মাত্র নহি কুটিলতাময়।
অন্যের সম্পদে দুঃখী অসাধু-মানস
পর দুঃখে পায় তারা হর্ষ অতিশয়॥

तदाभवन् शत्रव एव बन्धवो
घटाः पयश्छन्नविषान्तरा इव ।
जुगुप्समानाः परमस्य सन्निधौ
सखित्वमुष्यं तमपीतरेष्विति ॥ १० ॥

अस्येति सन्निहितबोधकम्, यस्य बन्धवः पूर्व्वार्द्धे वर्णिताः स एव सन्निहितः । सखित्वमुष्य तम् अस्येति पदेन यो बोधितः, तमित्यर्थः इतिशब्दः प्रकारप्रदर्शनार्थः ॥ १० ॥

( ১০ )

অন্তরে শত্রুতা ল'য়ে বাহিরে বান্ধব
পয়োমুখ বিষকুম্ভসম যত সব।
অপর জনের নিন্দা তা'র কাছে করে,
সখা মুগ্ধ সেই জনে নিন্দে স্থানান্তরে॥

तदान्तरं प्राप्य परोक्षवर्त्तिनां
सतामलीकामभिशस्तिमङ्क्ष्यन् ।
प्रशस्यमानश्च परैस्तथाविधै-
रसद्गुणः सद्गुणतोऽत्यरिच्यत ॥ ११ ॥

( ১১ )

সাধুজন দূরে আছে এই অবকাশে
অলীক কলঙ্ক তা'র রটায় বিশেষে।
তাদৃশ—অপর খল বলে, 'বেশ বেশ'
পুষ্ট অসাধুর দল, সাধু লভে ক্লেশ ॥

असंस्तुतानामपि सम्पदो वरं
न संस्तुतानां नच मित्रमानिनाम् ।
इति स्म चिन्ताकुलमानसा जनाः
क्रमेण तत्राधिकतामुपागताः ॥ १२ ॥

( ১২ )

যা'র সনে পরিচয় নাহি রহে, তা'র
সম্পদ হোক না কেন? দুঃখ কি আমার।
বন্ধু কিংবা পরিচিতে যেন নাহি হয়—
এই চিন্তারত লোক বাড়ে অতিশয় ॥

निरन्यसः सत्त्वमहत्त्ववर्जिता
　　भयप्रमादाधिकताधरीकृताः ।
अनाप्तविश्वस्तभिदाविदस्तदा-
　　ऽभवन् भवक्लेशकृतो बत प्रजाः ॥ १२ ॥

(शिव० पक्षे) अनाप्तविश्वस्तभिदाविदः, अनाप्ता अविश्वस्ताः विश्वस्ताश्च तेषां भिदा न विदन्ति याः ताः, कस्तावदविश्वस्तश्छद्मचारी कश्च विश्वस्त इति भेदज्ञानरहिता इत्यर्थः । भवक्लेशकृतः शिवद्वेषिणः द्वेषस्य क्लेशपञ्चकान्तर्गतत्वात्, दक्षस्य इति यावत् । (पक्षान्तरे) प्रजाः जनाः भवक्लेशकृतः अमङ्गलपूर्णा इति यावत् अथवा संसार-क्लेशदायिन्यः अन्नहीनादयश्चाभवन् इत्यर्थः ॥ १२ ॥

( ১৩ )

নিরন্ন অসার রিক্ত
　　মহত্ত্ব বিহীন
ভয় ও প্রমাদ ভরে
　　অতিশয় হীন।
নাহি বুঝে কে বিশ্বাসী
　　কেবা অবিশ্বাসী,
হ'ল প্রজা শিব-দ্বেষী-
　　দক্ষ-পুর বাসী ॥

( ১৩ )

অন্নহীন, সত্ত্ব শূন্য
　　মহত্ত্ব বর্জ্জিত
ভয় ও প্রমাদ বৃদ্ধি
　　হেতু অবনত।
কে বিশ্বস্ত অবিশ্বস্ত
　　কে বা—নাহি জ্ঞান
হ'ল, প্রজা সংসারের
　　ক্লেশের নিদান ॥

अकारणक्रन्दननादसङ्कुलाः
क्षणे क्षणे शुश्रुविरे दिशो दश ।
सुमेरुशृङ्गाधिकपिङ्गभानुभिः
कृशानुभिश्चानशिरे निरिन्धनैः ॥ १४ ॥

( ১৪ )

ক্ষণে ক্ষণে কান্নাধ্বনি দশ দিকে হয়,
শুনে লোক, নাহি কিন্তু কারণ নির্ণয়।
হেমাদ্রি শিখর হ'তে উজ্জ্বল পিঙ্গল,
জ্বলি' উঠে বিনা কাঠে দিগ্‌ব্যাপী অনল॥

करालमालब्धुमयोग्यमित्वरं
कबन्धवृन्दं ददृशेऽन्तरान्तरा ।
शरीरबन्धोज्झित-मुण्डकुण्डग-
प्रचण्डहासा अपि पुस्फुरुः पुरः ॥ १५ ॥

( ১৫ )

গতিশীল ভয়ঙ্কর মুণ্ডহীন কায
স্পর্শের অযোগ্য মাঝে মাঝে দেখা যায।
দেখে আগে শুধু-মুণ্ড, কুণ্ডের আকার,
দেহহীন, অট্টহাস্য প্রচণ্ড তাহার॥

वितत्य पक्षद्वितयीमधोमुखः
क्रमावतीर्णः कृतमण्डलभ्रमिः ।
उपप्लवो मूर्त्त इवातिभीषणः
पपात पत्री किल सौधमूर्द्धनि ॥ १६ ॥

( ১৬ )

বিস্তারি'দুখানি পাখা অধোমুখ হ'য়ে
ঘুরপাকে নে'মে আসে অমঙ্গল ল'য়ে
মূর্ত্তিমান উপদ্রব সম ভয়ঙ্কর
পড়িছে শকুন কভু সৌধের উপর ॥

अनन्तरोत्पत्तिदुरीक्षकर्म्मणो
निरीक्षणे सङ्कुचितेव शङ्कया ।
कुहेलिकाजालदुकूलसंवृता
तदा सदैवाभवदम्बरस्थली ॥ १७ ॥

( ১৭ )

আসন্ন বিপদ যাহা না দেখা উচিত,
তা' হবে দেখিতে এই ভয়ে সঙ্কুচিত—
হ'য়ে যেন, অবিরত কুঝটিকা জালে
আবরে অম্বর নিজ বদন মণ্ডলে ॥

गृहे गृहेऽभूत् कलहोऽनिमित्तको
विषण्णभावः परितस्तरे भृशम् ।
न दम्पतिप्रीतिरपि स्थिराभवत्
न तातपुत्रेष्वनुरागिता तथा ॥ १८ ॥

( ১৮ )

অকারণ ঘরে ঘরে কলহ বাঁধিল,
সর্ব্বত্র বিষণ্ণভাব বিস্তৃত হইল।
পতি পত্নী হারাইল প্রীতি পরস্পরে
পিতা পুত্রে স্নেহ-ভক্তি না রহে অন্তরে ॥

धनं धनानामधिपं श्रुती श्रुतं
धियं महाधीश्च यशो यशस्विनम् ।
प्रसह्य तत्याज दशामिमां मिषन्
न वि-स्मयः कोऽपि ममेति विस्मयः ॥ १९ ॥

( ১৯ )

ধনেশ্বর ত্যজে ধন
শ্রুতি শ্রুতিধর,
বুদ্ধি ত্যজে সুধী,
যশ যশস্বীর পর।
এই বিপর্য্যয়ে হেরি
সহসা উদয়
দম্ভেরো গেল না গর্ব্ব !
মো'র এ বিস্ময় ॥

( ১৯ )

ধনীর না রহে ধন,
পণ্ডিতের জ্ঞান;
যশস্বীকে ত্যজে যশ
বুদ্ধি বুদ্ধিমান।
হেরিয়া সহসা এই
ভাব বিপর্য্যয়
গর্ব্ব না ত্যজিল কেহ
এ মো'র বিস্ময় ॥

न भारतं नाकपुरं तदुद्भवो
विपर्ययः किन्तु सदक्षदेवगम्।
अनिष्टमाहेति मतं वृथा तया
सदैवते कर्म्मभुवामिलन् मखे ॥ २० ॥

( शिव० पक्षे ) 'ना कपुरम्' इतिपदद्वयम् 'सदक्षदेवगम्' इत्यत्र स दक्षदेवगमिति 'सदेवते' इत्यत्र सः देवते इति च पदद्वयम्, अमिलत् मखे इत्यसहितरूपम्। कपुरं कस्य दक्षस्य पुरं न भारतं ना---ना इति नञर्थकः शब्दः, भारतमेव, द्वौ नञौ प्रकृत्यर्थं गमयत इत्युक्तेः, तस्मात्तदुद्भवः स विपर्ययः, तत्र घटितानि तानि दुर्निमित्तानि, विपर्ययत्वेनेकत्वात् विपर्ययः इत्येकवचनम्। किन्तु कथं नु दक्षदेवगम् दक्षनामा यो देवः, ब्रह्मनन्दनत्वात्, देवमातामहत्वात्, देवानां श्वशुरत्वाच्च देवत्वेन निश्चितः, तद्गतं तद्भोग्यमनिष्टमाह प्रकाशयतीति मतं ज्ञानं तर्करूपं वृथा अनर्थकम् ( यतः ) स दक्षः तया = भारतस्वरूपया, कर्म्मभुवा देवते देवतासम्बन्धिनि मखे अमिलत् सङ्गतो बभूव। यदि भारतसम्बन्धस्तस्य नाङ्गीक्रियेत, देवत्वमेव केवलं, तदा तस्य यज्ञाधिकारो न स्यात्, मनुष्याधिकारत्वात् शास्त्रस्य; वर्षान्तरीयत्वे च भारतातिरिक्तेषु तत्तद्देशेषु कर्म्मैव न सम्भवति कर्म्मभूमित्वविरहादिति दक्षनगरस्य भारतत्वात् दक्षस्यापि तदासदत्वेन मनुष्यधर्म्मत्वाभ्युपगमात् यथा तत्र दक्षस्य यज्ञानुष्ठानं तत्फलं, तथा तदुद्भूतदुर्निमित्तसूच्यमानानिष्टसम्बन्ध इति युक्तमेवेतिभावः।

( पक्षान्तरे ) नाकपुरमित्येकं पदं सदक्षदेवगमित्येकं पदम् सदैवते इत्यत्र सदा एव ते इति पदत्रयम्। अमिलन् मखे इत्यसहितपदद्वयम्।

नाकपुरं स्वर्गनगरं भारतं न भवति (अत:) तदुद्भवो विसर्य्यय: भारत-घटितानि दुर्निमित्तानि किन्तु सदद्वा: इन्द्रियाधिपतय: सन्ति अद्याणि येषां ते पञ्चमर्थ: स्वामित्वम् राज्ञ: पुरुष: इत्यादाविव, यद्वा सन्ति नित्यानि दीर्घकालस्थायीनि—(चिरस्थिरेऽपि वस्तुनि नित्यार्थकशब्दप्रयोगस्य श्रुत्यादौ दर्शनात्) मनुष्यापेक्षया उत्तमानि वा अद्याणि इन्द्रियाणि येषा ते इति देवविशेषणं मनुष्यवैलक्षण्यस्य स्पष्टाख्यानाय, तादृशदेवगामि अनिष्टम् प्रकाशयति इति तर्को वृथा, तत्र हेतु: ते देवा: यज्ञे सदैव नित्यमेव तया कर्म्मभुवा भारतेन सहार्थे तृतीया अमिलन् सम्बद्धवन्त:, तथा च देवा हि यज्ञभुज:, यज्ञश्च भारतमात्रसाध्या: इति भारताधीनभोगत्वाद्देवाना भारतदुर्निमित्तफलस्यापि तद्गामित्वं युक्तम् ; यज्ञविघटनस्य, यज्ञसम्बन्धविच्छेदस्य वा तेन सूचनादितिभाव: ॥ २० ॥

( २० )

দক্ষ পুর 'কনখল'
ভাবতেরই মাঝে
তা'র দুর্নিমিত্ত ফল
কেন দক্ষরাজে ?
তিনি তো দেবতা ;—হেন
তর্ক—নিবর্থক,
নব-ভাবে কর্ম্মভূমে
হয তাঁব মখ ৷৷ *

( ২০ )

ভাবত তো স্বর্গ নহে,
দেবতা স্বর্গের,
ভাবতের দুর্নিমিত্তে
অনিষ্ট তাঁদের—
কেন হ'বে ?—এই তর্ক
খাটে না; ভাবত—
যজ্ঞ-অন্ন দেয, তাহে
দেবতা সঙ্গত ৷৷

* মখ=যজ্ঞ। দক্ষ সাক্ষাৎ ব্রহ্মার পুত্র—দেবগণের মাতামহ দেবাদিদেবের শ্বশুর বলিয়া তাঁহাকে দেবতা বলিয়া ধরিলে, কনখলের—

अदित्यनःश्रीसुखकेतनोपमं
सुमेरुशृङ्गप्रकृति प्रसाधितम्।
विचित्ररत्नद्युतिभिर्विनात्यया-
दभजयत द्युस्थितिकान्तगोपुरम् ॥ २१ ॥

( शिवलीलापक्षे ) अदित्यनसः—अदितेरनसः मातुः दक्षपत्न्याः प्रसूतेः श्रियाः सम्पदः सुखस्य च पतिभाग्यजनितसुखस्य इति मिलितयोर्द्वयोरर्थं केतनेनोपम गृहसदृश सुमेरुशृङ्गस्य हेमाद्रिशिखरस्य प्रकृतिरिव स्वभाव इव प्रकृति. स्वभावो यस्य, देवप्रियतया स्वर्णमयत्वेन नानारत्नघटितत्वेन तुङ्गत्वेन च सुमेरुतुल्यत्वात्, तदुपपादनाय विशेषणान्याह—विचित्ररत्नद्युतिभि. = रत्नानामिन्द्रनीलपद्मरागस्वर्ण हीरकादीना द्युतय.

---

( ভারত বর্ষীয় দক্ষ নগরের ) দুর্নিমিত্তে দেবতার অনিষ্ট হইতে পারে না একপ উক্তি বা তর্ক সঙ্গত নহে, কারণ—তিনি যখন শিবহীন অথচ অপর দেবতার ভাগযুক্ত যজ্ঞ করিতে প্রবৃত্ত—অতএব তাহার অধিকারী, তখন তাঁহাতে নরধর্ম অর্থাৎ মনুষ্যভাব স্বীকার করিতেই হয়, মনুষ্যভাবে ভারতের সহিত সম্বন্ধ না থাকিলে যে যজ্ঞের অধিকার থাকে না। অতএব তাঁহাকে ভারতের মনুষ্য বলিয়া মানিতে হয়, তাই তাহার পুরের দুর্নিমিত্ত ফল তাঁহার লভ্য। পক্ষান্তরে, ভারতের—দুর্নিমিত্ত ফল দেবতারও লভ্য, ভারত যে তাঁহাদের 'ভাত-ঘর' ভারতের যজ্ঞই—তাঁহাদের আহার যোগায়। ভারতবর্ষে অনুষ্ঠিতযজ্ঞ যেমন তাঁহাদিগকে তৃপ্তি প্রদান করে, দুর্নিমিত্ত সেইরূপ—ভারত হইতেই—তাঁহাদিগের অনিষ্ট উৎপাদন করিবে ইহাই তো সঙ্গত। দেবতারা অধিকার চ্যুত হইলে বা ভারতে যজ্ঞ না থাকিলে, তাঁহারা যে, অন্নহীন হইবেন।

रत्नद्युतयः अतएव विचित्राः नानावर्णाः आश्चर्यहेतवो वा इति कर्मधारयः ताभिः, प्रसाधितम् अलङ्कृतम् द्युस्थिति दिवि गगने स्थितिर्यस्य तत् गगनस्पर्शीत्यर्थः कान्तगोपुर कस्य दक्षस्य अन्तगोपुरम्—अन्तम् अतिमनोहर तेन स्तम्भतोरणादिसाहित्यलाभः, यद्वा आन्त गोपुरमिति-च्छेदः, आन्त अन्तपर्यन्त सप्रान्त गोपुर स्तम्भतोरणादिसहितमित्यर्थः, अत्ययात् जीर्णतादिदोषाद् विना दृष्टदोषमन्तरेणेत्यर्थः अभज्यत भग्नमभूत्। (पक्षान्तरे) एतत्सर्गस्य प्रथमश्लोकोक्त भारतस्वर्गयोर्विपर्यय वर्णयितुमादौ भारतविपर्ययमुक्त्वा स्वर्गस्य त वर्णयति—अदित्यनसामदितिमातृकाणा देवानामित्यर्थः श्रिया लक्ष्म्याः स्वर्गलक्ष्म्याः सुखस्य आनन्दस्य च केतनोपम ध्वजायमान गोपुरदर्शनेनैव ज्ञायते लक्ष्मीस्थान सुखस्थानञ्चेदमित्यर्थ., सुमेरुशृङ्गप्रकृति सुमेरुशृङ्गमेव प्रकृतिरुपादान मस्य, सुमेरुशृङ्गेणैव निर्मितम्। द्युस्थितिकम् अन्तगोपुरमिति कर्म्मधारयः दिवि स्वर्गे स्थितिर्यस्य तद् द्युस्थितिक—वैकल्पिकसमासान्तत्वात्। अन्यत्तुमानम्। द्युस्थिति स्वर्गस्थ कान्त कमनीय गोपुरमिति वा ॥ २१ ॥

( ২১ )

অদিতি-মাতার লক্ষ্মী-
ভাগ্য নিকেতন
যাহার প্রকৃতি মেরু
শৃঙ্গের মতন।
দক্ষের গগন স্পর্শী
সু-উচ্চ গোপুর
রত্নোজ্জ্বল অকস্মাৎ
ভাঙ্গি হ'ল চূর ॥

( ২১ )

দেবতার শ্রী ও সুখ
সমৃদ্ধি নিশান
সুমেরু শিখর হ'তে
যাহার নির্ম্মাণ।
বিচিত্র রতন দ্যুতি
দীপ্ত অলঙ্কার
ভগ্ন হ'ল আচম্বিতে
স্বর্গে পুরদ্বার ॥

तदा तदारामचरोऽपि मारुतः
प्रलुब्धभृङ्गावलिसङ्गिरिङ्गणः ।
उपाहरन् सौरभसारशीकरान्
न तृप्तिपर्य्याप्तिकरो यथा पुरा ॥ २२ ॥

( ২২ )

তদীয়* সে উপবন সঞ্চারী পবন
গন্ধলুব্ধ ভৃঙ্গ যার সঙ্গী অনুক্ষণ।
আহরি সৌরভ সার শীতল পরশ
পূর্ব্বমত না দেয় তখন তৃপ্তি বস ॥

अथोद्धुनन् धूलिततीः सकर्करा
करालरूपोऽनियतस्पदः स्वनन् ।
सदैवपुर्य्या गुरुभीतिसूचकः
प्रवृद्धनिःश्वास इवाधिकं ववौ ॥ २३ ॥

( शिव० पक्षे ) प्रथमपादे सकर्कराः इत्यत्र सः कर्कराः इति पदद्वयम् तृतीयपादे सदैवपुर्य्याः इत्यत्र सदा एव इति पदद्वयम् पुर्य्या इति

* শিবলীলা পক্ষে তদীয় অর্থে—নন্দের, অপর পক্ষে অর্থ—স্বর্গের—স্বর্গের উপবন নন্দন কানন। এই পক্ষে, প্রথম শ্লোকে ভারত এবং স্বর্গপুর উভয় স্থানের যে সুনির্মিত উল্লিখিত হইয়াছে—৬ হইতে ১৮ পর্য্যন্ত ভারতের সেই সুনির্মিত বর্ণিত—তাহার পর ২১ হইতে স্বর্গের সুনির্মিত বর্ণিত। শিবলীলা পক্ষে এই সব সুনির্মিতও নন্দপুরেই হইয়াছে বুঝিবে।

पृथक् पदम्। अथ पक्षान्तरे तृतीयपादस्य विभिन्नपदत्वे प्रत्युत इति यावत्, सः = मारुतः पूर्व्वश्लोकप्रक्रमात्, धूलिततीः, धूलिभिस्ततिर्विस्तारो यासां ताः कर्क्कराः चूर्णशिलाखण्डानि उद्धुनन् उड्डाययन्, कराल‌भावः भीतिजनकप्रकारः, अनियतस्पदः, अस्थिरवेगः—स्वनन् सशब्दः पुर्य्याः दक्षपुर्य्यधिदेवतायाः गुरुभीतिसूचकः अचिरभाव्यमङ्गल-भयसूचक प्रवृद्धनिश्वास इव दीर्घतरश्वास इव अधिक यथा स्यात् तथा सदैव निरन्तरमेव ववौ। (पक्षान्तरे) प्रथमपादे सकर्क्करा इत्येक-पदम् तृतीयपादे सदैवपुर्य्या इत्यत्र सः इति दैवपुर्य्या इति पृथक् पदद्वयम् सकर्क्कराः कर्क्कराभिः सह वर्त्तमानाः धूलिततीः धूलिचयान्। सः मारुतः दैवपुर्य्याः देवानामियं दैवी सा चासौ पुरी चेति दैवपुरी देवपुरम् स्वर्गः स्वर्गाधिदेवीत्यर्थः, तस्या. प्रवृद्धनिश्वास इव अधिक ववौ अन्यत् समानम् ॥ २३ ॥

| ( ২৩ ) | ( ২৩ ) |
|---|---|
| পুরদেবী কিন্তু পেয়ে<br>গুরুতর ভয়,<br>ছাড়ে যেন দীর্ঘশ্বাস<br>এলোমেলো বয়—<br>তাই সদা ঝঞ্ঝা বায়ু,<br>উড়ায় কাঁকর<br>ধূলি,—তুলি হাহাবব<br>ভাব ভয়ঙ্কর। | অধিকন্তু কাঁকর<br>সহিত ধূলিচয়<br>উড়ায়ে অস্থির গতি<br>ভাবে লাগে ভয়।<br>অতিক্রান্ত সুরপুরী—<br>দীর্ঘশ্বাস প্রায়<br>সনসনি' অতিশয়<br>বহে ঝঞ্ঝা বায়। |

सुवर्णपङ्केरुहसंहतिस्फुरन्-
मराललीलानिलयः सुनिर्म्मला ।
निगूढदुःखादिव दिव्यदीर्घिका
शुशोष चक्रप्रमदः समं तदा ॥ २४ ॥

( शिवलीलापक्षे ) सुवर्णा शोभनवर्णा उज्वलश्वेतरक्तादिवर्णा पङ्केरुहसंहतिर्यत्र सा, संहतिरित्यन्तमेकपदं विसर्गस्य लोपः । दिव्यदीर्घिका दक्षपुरस्था दिव्या = उत्तमा दीर्घिका, चक्रप्रमदः चक्रवाकाणां प्रमदः आनन्दः समं शुशोष शुष्का । ( पक्षान्तरे ) सुवर्णं स्वर्णस्वरूपा सुवर्णस्य हेम्नो वा ये पङ्केरुहसंहतिस्फुरन्मरालाः तेषां लीला शोभा क्रीडा च तन्निलयः तत्स्थानम् । पङ्केरुहसंहतिश्च स्फुरन्मरालाश्चेति पङ्केरुहाणि च संहतिस्फुरन्मरालाश्चेति वा द्वन्द्वः । अन्तिमपक्षे संहतौ मध्ये संहत्या सङ्घेन वा स्फुरन्त इति तत्पुरुषः । पङ्केरुहाणि सुवर्णमयानि मरालाश्च सुवर्णमया इति भावः । मरालाः हंसाः । कानि पद्मानि के च हंसा इति विवेकार्थं स्फुरन्त इति संहतिस्फुरन्त इति वा हंसविशेषणम् स्फुरणं चलनं—जङ्गमत्वात् पद्महंसयोर्भेदग्रह इति भावः । लीला—पद्मपक्षे शोभा, मरालपक्षे क्रीडा च । दिव्यदीर्घिका सुरदीर्घिका मन्दाकिनीत्यर्थः । चक्राणां समूहानां प्रकरणाद् देवसमूहानाम् अवान्तरभेदमादाय बहुवचनम् । शुशोष कृशत्वमाप ॥ २४ ॥

| ( ২৪ ) | ( ১৪ ) |
|---|---|
| উত্তম বিবিধ বর্ণ<br>কমল কানন,<br>শোভে, স্বচ্ছ জলে যার<br>খেলে হংসগণ।<br>উত্তম দীর্ঘিকা সেই<br>গূঢ় দুঃখে যেন<br>শুষ্ক হ'ল চক্রবাক<br>বিষাদে মগন। | সুবর্ণ মরাল সনে<br>সুবর্ণ কমল<br>খেলে যেথা সেই, সুর-<br>দীর্ঘিকা* নির্ম্মল।<br>নিভৃত দুঃখেই যেন<br>হয় কৃশকায়া<br>দেবগণে নিপতিত<br>বিষাদের ছায়া। |

পিকাদয়ো মঞ্জুলকুঞ্জকূজনা
বিনৈব বর্ষাদিককালমেলনম্।
অসংস্তুতাং নীরবতামুপাগতা
নিতান্তচিন্তাকুলমানসা ইব ॥ ২৫ ॥

( ২৫ )

মঞ্জুল নিকুঞ্জবনে গানে সুরসিক
যত পাখী রহে মৌনে আদি যা'র পিক।
চিন্তিত অন্তরে যেন হ'য়েছে নীরব
বর্ষা-আদি সময়ের বিনা উপদ্রব ॥ †

---

* মন্দাকিনী।

† ২৫ পদ্য দক্ষপুরী ও স্বর্গ উভয় স্থানেই লাগিবে। উপবনের কথা পূর্ব্ব শ্লোকে গিয়াছে, সেই প্রসঙ্গেই পক্ষীর নীরবতা বর্ণিত।

द्युचारितेजांसि तदा दिने दिने
चिरोपपन्नां तदनन्तभावताम्।
त्यजन्ति सर्व्वस्य विनाशशीलता-
मुदीरयामासुरवाचकान्यपि ॥ २६ ॥

द्युचारीणि तेजांसि नक्षत्राणि, तदनन्तभावतां (तां प्रसिद्धाम् अनन्तभावताम् अनन्ते आकाशे भावः स्थितिर्येषां तत्ताम्) दिने दिने त्यजन्ति सन्ति अवाचकान्यपि वाक्शक्तिवर्जितान्यपि सर्व्वस्य अचिरोपपन्नां विनाशशीलताम् अचिरभाविविनाशम् उदीरयामासुः। सततनक्षत्रपातो हि बहुमृत्युसूचक इति प्रसिद्धिः। अथवा सर्व्वः शिवः शीघ्रमेव विनाशशीलो भविष्यतीति सूचयामासुरित्यर्थः। भावस्तु समानः। पक्षान्तरे,—द्युचारिणां देवानां तेजांसि प्रसिद्धाम् चिरोपपन्नाम् अनन्तभावताम् अनन्तः अक्षयः भावो येषां तत्तां त्यजन्ति सन्ति सर्व्वेषां नश्वरत्वं कथयामासुरिति। देवानामनन्ततेजांस्यपि तदा क्षीणानि इति दुर्निमित्तम्॥ २६ ॥

| ( ২৬ ) | ( ২৬ ) |
|---|---|
| কতকাল ছিল যারা<br>আকাশ আশ্রয়ে | যেই সব তেজ ছিল<br>দেবতার মনে |
| সেই তারা দিনে দিনে<br>পড়েছে খসিয়ে। | বহুকাল; তাহা ত্যজে<br>দেবে দিনে দিনে। |
| কথায় না বলিলেও<br>জানায় ইঙ্গিতে। | নাহি বা কহিল কথা<br>লক্ষণে প্রকাশ— |
| উদ্যত হয়েছেন রুদ্র<br>সংহার করিতে। | অচিরে হইবে বহু<br>জনের বিনাশ। |

विनिर्मिताः शोणितधारयेव
समार्ज्जनीबन्धविशीर्णशेषाः ।
नाराचदण्डा इव दैवदिष्टा-
स्तदोदिता व्योमनि केतुभेदाः ॥ २७ ॥

( ২৭ )

রক্ত ধারা দিয়া যেন হ'য়েছে নির্ম্মাণ
প্রান্তভাগে সম্মার্জনী-অগ্রের সমান ।
লৌহময় শরপুঞ্জ সম ধূমকেতু
আকাশে উদিল কত দুরদৃষ্ট হেতু ।

इति विविधविकारश्चेतनाचेतनानां
विपदमचिरभाव्यां सूचयामास पूर्व्वम् ।
स्वरविदिततदर्थः सोऽप्यथासीदधीशो
न खलु नियतिवश्ये जीवजातेऽनुयोगः ।२८।

( शिवलीलापक्षे ) प्रथमार्द्धं सुगमम् । 'स्वरवित् + इततदर्थः' इति 'स्वरविदिततदर्थः' इत्यत्र सन्धिवाक्यम् । स्वरवित् उदात्तादि-वैदिकस्वरवेदिता, एतेन तस्य शिवतत्त्वज्ञानाभावः सूचितः, इतः प्राप्तः तदर्थः तेषां दुर्निमित्तानामर्थः कश्चित् प्रतिपाद्यविषयः, दाक्षायणीदेहत्याग-रूपः येन, सः, अधीशः न विद्यते विरुध्यते वा धीर्यत्र सः ईशः शिवो यस्य, शिवतत्त्वानभिज्ञः, शिवविरुद्धबुद्धिर्वा । प्राप्तदुर्निमित्तफलस्तथापि शिवं न तुतुषे शिवविरोधं वा न जहातीति तात्पर्यम् । अनुयोगः

प्रश्न कथमेव जातमित्याकारक, न युज्यते, जीवाना नियतिवश्यत्वात् इति चतुर्थचरणतात्पर्यम् उभयपक्षे समानम् ।

(पक्षान्तरे) स्व + अविदिततदर्थ इतिच्छेद । स्व स्वर्गस्य, अस्य अधीश इत्यनेनान्वय, दिवस्पति इन्द्र इत्यर्थ । एतेषा दुर्निमित्ताना फल किमनिष्ट भविष्यतीति शङ्कायुक्तोऽपि अनिष्टस्वरूपावधारण कर्त्तु मसमर्थोऽभूत् । देवराजस्य कथमेवमक्षमत्वमित्याशङ्कानिवारक-श्चतुर्थ चरणार्थ, प्रागुपदाशत ॥ २८ ॥

( ২৮ )

প্রাণ অপ্রাণীর এই
বিবিধ বিকার
কাহে ঘোর বিপদের
আসন্ন সঞ্চার।
বুঝে না কেন্দ্র দক্ষ
করে শিব দ্বেষ।
নিয়তি অধীন জীব
প্রশ্ন নাহি শেষ ॥

( ২৮ )

জড় ও চেতনে এই
বিবিধ বিকৃতি।
জানাইছে বিপদের
শীঘ্র উপস্থিতি
স্বর্ণনাথ না বুঝিলা
বিপদ বিশেষে,
কেন ?—প্রশ্ন নাই,
তিনি নিয়তির বশে ॥

**निमित्तदृष्ट्या विमनायमानता**
**न तावदासीद्विबुधप्रजासु न ।**
**द्विपद्बले स्वस्थलमागते पुनः**
**सभीति चिन्ताजनि भीमविक्रमात् ॥ २९ ॥**

(शिवलीलापक्षे ) विबुधा पण्डिता या प्रजा तासु निमित्ताना

प्रागवर्णितानाम् अशुभसूचकानां दृष्ट्या दर्शनेन विमनायमानता वैमनस्यम् उद्वेगः न आसीत् इति न तावद् वाक्यालङ्कारे, समुदयेन इत्यर्थकस्य वा तावत् पदस्य नासीदिति ननर्यान्वितक्रिययान्वयः। दक्षं प्रति विश्वासेन उद्वेगोऽल्पोऽभूत् प्रजापतिरयं दुर्निमित्तसूचितममङ्गलं स्वप्रभावेण नाशयिष्यतीति मत्वेतिभावः। पुनः किन्तु द्विपद्गणे = द्विपति शत्रुस्वरूपे 'गणे' = प्रमथवाहिन्या स्वस्थलम् स्वं स्वकीयं स्थलम् आश्रयभुवं दक्षपुरमिति यावत् आगते सति भीमस्य रुद्रस्य विक्रमात् पराक्रमात् हेतोः सभीति चिन्ता अजनि। सभीतीति यौगपद्येऽव्ययीभावसमासः। भयं चिन्ता च युगपदभूतामित्यर्थः। (पक्षान्तरे) विबुधप्रजाः कर्म्मदेवाः स्वर्गप्राप्ता मानवाः। द्विपताम् असुराणां गणे स्वस्थलं स्वः स्वर्गः तत्स्थलम् तत्स्थानम्, आगते आगन्तुमारब्धे खर्परे शरि विसर्गलोपात् स्वस्थलमिति। भीमविक्रमात् तेषां भयावहाक्रमण निश्चित्य अन्यत् पूर्व्ववत्॥ २६॥

( २७ )

দুর্নিমিত্ত নিরখি
চিন্তিত সুধী প্রজা,
যদিও; না হয় ভীত
ভাবে দক্ষ রাজা।
স্বপুরে পশিতে হেরে
রুদ্রগণে যবে
রুদ্রের বিক্রম হেতু
অতি ভীত সবে।

( ২৭ )

হেরি দুর্নিমিত্ত চিত্তে
প্রজা-দেবতারা।
কিন্তু নহে ভীত ইন্দ্রে
আস্থা রাখে তারা।
দৈত্য সেনাগণ যবে
স্বর্গস্থলে আসে।
ঘোর আক্রমণ বুঝি
কম্পান্বিত ত্রাসে॥

हितवचनविशेषोद्बोधितेनापि पत्या
द्विपदविकलशक्तिः केन रोध्येति मत्वा ।
शिवदसवमहिम्ना योगयुक्तेन तस्थे
भवति हि मदमोहे श्रेयसामप्यबोधः ॥२०॥

( शिवलीलापक्षे ) पत्या तत्पुरपतिना केन दक्षेण हितवचनविशेषोद्बोधितेनापि = हितानां ब्रह्मादीनां वचनविशेषेण—नियतिफलमप्रकाश्य शिवद्वेषो न कर्त्तव्यः शिवे रुष्टे तदीयशक्तिप्रतिरोधः कर्त्तुं न शक्यत इत्येतावन्मात्रज्ञापकवाचा, हित इति वचनविशेषस्य विशेषणं वा उद्बोधितेन भविष्यदमङ्गलप्रतिरोधाय उद्बोधं प्रापितेनापि सता द्विपदविकलशक्तिः द्विपदः द्विपत्वेनाभिमतस्य शिवस्य अविकलशक्तिः पूर्णशक्तिः, शिवदसवमहिम्ना रोध्या इति मत्वा केन दक्षेण योगयुक्तेन योगे उपाये तद्रोधोपाये यत्न एव युक्तेन अवहितेन तस्थे स्थितम् । पूर्ववृत्तस्य वर्णनमिदमिति सर्गप्रारम्भे उक्तत्वात् । शिवदः शिवं द्यति खण्डयति निराकरोति शिवदः शिवभागहीन इति यावत् अथवा शिवदः शुभप्रदत्वेन निर्णीतः यः सवः यज्ञः तन्महिम्ना । मदमोहः मदेन मोहः वैचित्त्यम्, मदजनितो मोहः मद एव मोहः इति वा अबोधः बोधविरहः, तत्पुरुषात् । प्रजापतिर्दक्षोऽपि मदमोहाच्छन्नः शिवतत्त्वं न बुद्धवानिति भावः ।

( पक्षान्तरे ) दुर्निमित्तदर्शनानन्तरं हितानां बृहस्पतिप्रभृतीनां वचनविशेषेण उद्बोधितेन,—दुर्वासः शापस्य परिणामोऽयमित्युद्बोधं गमितेन शिवदसवमहिम्ना शिवदाः कुशलप्रदा सवाः यज्ञ क्रतवः

तैर्महिमा यस्य तेन शतक्रतुनेत्यर्थः। द्विषताम् असुराणाम् अनिरूल-शक्तिः येन प्रकारेण रोध्या इति मत्वा विविच्य योगे सन्नहने रणसज्जाया युक्तेन अवहितेन नियुक्तेन वा स्थितम्। कथम् इन्द्रस्य तथाविध-मज्ञान येनैव विषमपरिणामो दुर्व्वासःशापः इत्याशङ्कापरिहारायार्था-न्तरन्यासः, अज्ञानहेतुर्मोह. प्रमाद. स च मदाद् भवति इतिभाव: ॥२०॥

इति कविकुल-लालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः
श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये
दुर्निमित्तदर্শन नाम पञ्चमः सर्गः ॥ ५ ॥

( ৩০ )

হিতবাক্যে দক্ষ নাহি
হয় সাবধান
ভাবে রুদ্রপূর্ণ শক্তি
বোধের বিধান।
শিবহীন্ যজ্ঞে হ'বে
ভাবি, তায় রত
মদ দোষে উত্তমেরও
হয় বুদ্ধি হত। ,

( ৩০ )

গুরু আদি হিতবাক্যে
বুঝে শতক্রতু
দৈত্যপক্ষে শক্তিবৃদ্ধি
মুনিশাপ হেতু।
শক্তি বোধ তবে—ভাবি
রণ সজ্জা করে,
মদ মোহ প্রধানেরো
তথ্য বুদ্ধি হবে ॥

ইতি 'সর্ব্বমঙ্গলোদয়' নামক দ্ব্যর্থকাব্যে দুর্নিমিত্তদর্শন নামক পঞ্চম সর্গ সমাপ্ত ॥

# षष्ठः सर्गः ।

अथ प्रजापः सुरवृन्दवन्द्यः
प्रत्यर्थिनामागमनं निशम्य ।
प्रवृत्तमन्युः समराय योग्यं
समादिशत् स्वारतसैन्यसङ्घम् ॥ १ ॥

अथ अनन्तर रुद्रगणाना पुरप्रवेशानन्तर सुरवृन्दवन्द्य· ( अदितिर्दक्षकन्या, देवास्तावत् अदितिनन्दना, अत दक्षस्य सुरवृन्द वन्द्यतम् ) प्रवृत्तमन्यु , सम्पाद्यमानयज्ञ प्रजाप प्रजापतिर्दक्ष प्रत्यर्थिना शत्रूणामागमन निशम्य स्वारत आसम्यक् रतम् अनुरक्त स्वस्मिन् आरत स्वारत स्वानुरक्त योग्य सैन्यवृन्द स्वा. स्वजनाश्च आरतसैन्यानि च तेषा वृन्द वा समराय समादिशत् । ( पक्षान्तरे ) प्रजाप राजा इन्द्र इन्द्रस्य देवराजतया सुरवृन्दवन्दितत्व सिद्धमेव । प्रवृत्त मन्यु प्रकर्षेण जातो मन्यु क्रोधा यस्य तादृश सन् स्वारत स्वर्गानुरक्त स्वर्गशुभार्थीत्यर्थ तच्च तत् सैन्यवृन्द चेति कर्म्मधारय ॥ १ ॥

तैर्महिमा यस्य तेन शतक्रतुनेत्यर्थः। द्विषताम् असुराणाम् अविकलशक्तिः येन प्रकारेण रोध्या इति मत्वा विविच्य योगे सन्नहने रणसज्जायां युक्तेन अवहितेन नियुक्तेन वा स्थितम्। कथम् इन्द्रस्य तथाविधमज्ञानं येनैव विषमपरिणामो दुर्व्वासःशापः इत्याशङ्कापरिहारायार्थान्तरन्यासः, अज्ञानहेतुर्मोहः प्रमादः स च मदाद् भवति इतिभावः ॥३०॥

इति कविकुल-ललितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः
श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये
दुर्निमित्तदर्शनं नाम पञ्चमः सर्गः ॥ ५ ॥

( ৩০ )

হিতবাক্যে দক্ষ নাহি
হয় সাবধান
ভাবে রুদ্রপূর্ণ শক্তি
বোধের বিধান।
শিবহীন্ যজ্ঞে হ'বে
ভাবি, তায় রত
মদ দোষে উত্তমেরও
হয় বুদ্ধি হত।

( ৩০ )

গুরু আদি হিতবাক্যে
বুঝে শতক্রতু
দৈত্যপক্ষে শক্তিবৃদ্ধি
মুনিশাপ হেতু।
শক্তি বোধ তবে—ভাবি
রণ সজ্জা করে,
মদ মোহ প্রধানেরো
তথ্য বুদ্ধি হবে॥

ইতি 'সর্ব্বমঙ্গলোদয়' নামক দ্ব্যর্থকাব্যে দুর্নিমিত্তদর্শন নামক পঞ্চম সর্গ সমাপ্ত॥

उदीयमानेऽसमधाम्नि पूष्णि न युज्यते तामससम्प्रसारः ।
कुबेरदिग्वर्त्तिमरुत्प्रवृत्तौ न तद्वद्घनध्वानपरम्परापि ॥ ३ ॥

कृतान्तदिग्वर्त्तिनभस्वदाप्तौ जाड्यं समेषामपयाति नूनम् ।
यादःपतौ सन्निहिते न वारिव्याघातभीरस्त्यमृतस्थितीनाम् ।४।

(शिवलीलापक्षे) युष्मासु सङ्ग्रामपरायणेष्वित्यादि वचनस्य समर्थनाय दृष्टान्तमाह,—असमतेजसि पूष्णि सूर्य्ये उदीयमाने सति तमोविस्तारो न युज्यते । उत्तरवायुसञ्चारारम्भे तादृशमेघध्वनिपरम्परापि विलीयत एव । कुबेरदिक्—उदीची, कृतान्तदिक्—दक्षिणा । दक्षिणवायुसमागमे सर्वेषां जाड्यं, शीतत्वं शिशिरऋतुकृतमिति यावत् अपगच्छत्येव । यादःपतौ समुद्रे सन्निहिते वारिव्याघातभयमपि जलाभाववशादपि जलचराणां न सम्भवति एतदन्त दृष्टान्तविषयोल्लिखितम् । अथ च पूषादयो देवा दक्षेण युद्धाय नियुज्यन्ते । तामसाः रुद्रतदनुचराः । कुबेरदिग्वर्त्तिषु कैलासस्य कुबेराश्रयतया तद्दिग्वर्त्तिषु तन्निदेशकारिषु तद्भृत्येष्वप्यधिक्षेपः ; मरुत्प्रवृत्तौ मरुतां देवानाम् युष्माकं प्रवृत्तौ युद्धार्थोपसर्पणे । तेषामुल्लासशब्दपरम्परा गालवाद्यकद्वाद्यादिरूपा न स्थास्यतीति भावः । कृतान्तदिग्वर्त्तिना यमादेशकारिणा नभस्वता देवानाम् सैनिकानामित्यर्थात् आप्तौ प्राप्तौ सत्यां समेषां सर्व्वेषाम् अस्मत् सैन्यानां जाड्यं कर्म्मवैमुख्यम् अपयाति अपयास्यति वर्त्तमानसामीप्ये लट् । यादःपताविति या अदःपताविति च्छेदः । अमुष्मिन् अमीषां वा पत्नी कृतान्ते सन्निहिते । अमृतस्थितीनां देवानां या वा या च अरिव्याघातभीः सा नास्ति न भविष्यतीत्यर्थः । रुद्रगणेभ्यो या च

( ১ )
অনন্তর সুরবৃন্দ-
বন্দ্য যজ্ঞে ব্রতী
শুনি 'গণ আগমন
দক্ষ প্রজাপতি।
অনুবক্ত সৈন্য আব
আত্মীয় স্বজন—
যোগাপাত্রে আজ্ঞা দিলা
আবস্থিতে বণ।

( ১ )
অনন্তব দেবগণ-
পুজ্য অধিপতি
শুনি' দৈত্য আগমন
স্বর্গপুর প্রতি।
সরোষে আদেশ দে'ন
সমবে কুশল
স্বর্গ রক্ষা পরায়ণ
চতুরঙ্গ বল।

**मा भैष्ट मा भैष्ट सतामभीष्टा**
**दुष्टात्मनां विक्रममीक्षमाणाः ।**
**युष्मासु संग्रामपरायणेषु**
**यत् सत्यमेते प्रपलायितारः ॥ २ ॥**

( ২ )
শৌচহীন ভূত প্রেত
বিক্রম দর্শনে।
হ'ওনা হ'ওনা ভীত
অণুমাত্র মনে।
হে শুদ্ধ সজ্জন প্রিয়,
বণে তোমা সবে
প্রবৃত্ত হেবিলে তাবা
অবশ্য পলা'বে।

( ২ )
দুবাত্মা অসুব গণে
বিক্রম হেবিযে।
এ'নোনা, এ'নোনা ভয
কদাচ হৃদযে।
বণক্ষেত্রে তোমাদেব
হইলে উদয
পলাইবে দৈত্যগণ
নাহিক সংশয়।

उदीयमानेऽसमधाम्नि पूष्णि न युज्यते तामससम्प्रसारः ।
कुबेरदिग्वर्त्तिमरुत्प्रवृत्तौ न तद्घनध्वानपरम्परापि ॥ ३ ॥

कृतान्तदिग्वर्त्तिनभस्वदाप्तौ जाड्यं समेषामपयाति नूनम् ।
यादःपतौ सन्निहिते न वारिव्याघातभीरस्त्यमृतस्थितीनाम् ।४।

(शिवलीलापक्षे) युष्मासु सङ्ग्रामपरायणेष्वित्यादि वचनस्य समर्थनाय दृष्टान्तमाह,—असमतेजसि पूष्णि सूर्ये उदीयमाने सति तमोविस्तारो न युज्यते । उत्तरवायुसञ्चारारम्भे तादृशमेघध्वनिपरम्परापि निलीयत एव । कुबेरदिक्—उदीची, कृतान्तदिक्—दक्षिणा । दक्षिणवायुसमागमे सर्वेषां जाड्य, शीतत्व शिशिरऋतुकृतमिति यावत् अपगच्छत्येव । यादःपतौ समुद्रे सन्निहिते वारिव्याघातभयमपि जलाभावशङ्कापि जलचराणां न सम्भवति एतदन्त दृष्टान्तविषयोल्लिखितम् । अथ च पूषादयो देवा दक्षेण युद्धाय नियुज्यन्ते । तामसाः रुद्रतदनुचराः । कुबेरदिग्वर्त्तिषु कैलासस्य कुबेरराज्यतया तद्दिग्वर्त्तिषु तन्निदेशकारिषु तद्भृत्येष्वित्यधिदोषः ; मरुत्प्रवृत्तौ मरुतां देवानाम् युष्माकं प्रवृत्तौ युद्धार्थापसर्पणे । तेषामुल्लासशब्दपरम्परा गालवाद्यकस्वाद्यादिरूपा न स्थास्यतीति भाव. । कृतान्तदिग्वर्तिना यमादेशकारिणा नभस्वता देवानाम् सैनिकानामित्यर्थात् आसौ प्राप्तौ सत्यां समेषां सर्व्वेषाम् अस्मत् सैन्यानां जाड्यं कर्मवैमुख्यम् अपयाति अपयास्यति वर्त्तमानसामीप्ये लट् । याद.पताविति या अद.पताविति च्छेदः । अमुष्मिन् अमोघा या पत्यौ कृतान्ते सन्निहिते । अमृतस्थितीनां देवानां या या या च अरिव्याघातभीः सा नास्ति न भविष्यतीत्यर्थः । रुद्रगणेभ्यो या च

व्याघातभीः याधामय वर्त्तते सा सेनापतौ यमे सन्निहिते यमसैन्यभूत-देवाना न स्थास्यतीति तात्पर्यम् । दक्षस्य यम प्रति नियोगश्च दौहित्र-पुत्रत्वेन, यदि तन्न रोचते, प्रथमार्थ एवास्य श्लोकस्यान पक्षोऽपि ग्राह्यः ।

(पक्षान्तरे) सूर्य्ये युद्धस्थलमवतीर्णे, तामसानामसुराणा सप्रसारो विक्रमप्रकाशो न युज्यते, न योदयते, इति वर्त्तमानसामीप्ये वर्त्तमाननिर्देशः। कुवेरदिग्वर्तिना कुवेरादेशवर्त्तिना मरुता देवाना प्रवृत्तौ युद्धारम्भे तेषा रिपूणा घनध्वानपरम्परा निविडसिंहनादधारापि न युज्यते इत्यनुकर्ष.। कृतान्तस्य यमस्य आदेशवर्त्तिना नभस्वता देवानाम् आप्तौ युद्धभूमिप्राप्तौ सत्या समेषा सर्वेषा स्वपक्षाणामिति शेषः जाड्य कर्म्माप्रवृत्तिः अपयाति अपगमिष्यति नूनम् । मरुन्नभस्वच्छब्दौ वायुवाचकौ देवतावाचकौ च । यदि पतौ वरुणे सनिहिते वा समुच्चये, अरिभ्याघातभीः अरिभ्यो व्याघातभय देवाना नास्ति ॥३-४॥

( ৩ )

উদিত হইলে মহাতেজা দিবাকর,
থাকিতে পারে না যথা তিমির নিকর,
উত্তরদিকের বায়ু বহিলে যেমন,
থাকিতে পারে না ঘনা-জলদ গর্জ্জন। *

* বিপক্ষ সৈন্যের পলায়নের উপমারূপে দক্ষ এবং ইন্দ্র উভয়ের উক্তি রূপেই ৩য় শ্লোক যে অর্থে ব্যবহৃত হইতে পারে তাহা দেখান হইল। অতঃপর ঐ ৩য় সংস্কৃত শ্লোকের আর এক অর্থ হইতে পারে তাহার জন্য পৃথক পদ্যানুবাদ প্রদত্ত হইতেছে। চতুর্থ শ্লোকের অপর অর্থ সংস্কৃত টীকায় দ্রষ্টব্য।

( ৩ )

মহা তেজা 'পুষা' সূর্য্য *
উঠিলে সমরে,
তামস রুদ্রের দল
থাকিতে না পারে?
রুদ্রের আশ্রিত 'গণে'
দেব আক্রমণ
নিবারিবে তাঁ'সবার
সে ঘন গর্জ্জন ॥

( ৩ )

ভাস্বর অসম তেজা—
বিক্রমে প্রচুর।
গেলে যুদ্ধে না রহিবে
তামস অসুর।
রুদ্রের ও তাঁ'র দিকে
মিলিলে পবন
নাহি র'বে অসুরের
উল্লাস গর্জ্জন ॥

( ৪ )

প্রবাহিত হ'লে যথা
দক্ষিণ পবন
নিশ্চয় সবা'র শীত
করে পলায়ন।
কিংবা সিন্ধু সন্নিধানে,
জলের বিহনে
ভয় যথা নাহি রহে
জলচর গণে।

( ৪ )

যমের নেতৃত্বে দেব-
সেনা গেলে রণে।
আলস্য পাসরি সবে
বল পাবে মনে।
সেনাপতি রূপে যম
থাকিলে নিকটে।
দেবতার শত্রু ভয়
কখনও না ঘটে।

---

* দ্বাদশ মাসে দ্বাদশ সূর্য্যের উদয় হয়। এই দ্বাদশ সূর্য্যই অদিতির গর্ভজাত। অদিতি দক্ষের কন্যা। দ্বাদশ সূর্য্যই দক্ষের দৌহিত্র, এবং দ্বাদশ সূর্য্য মধ্যে পূষা অন্যতম। এই পূষা নামক সূর্য্যকে ডাকিয়া দক্ষ যুদ্ধ করিতে বলিলেন। পূষা দক্ষের হইয়া শিব সেনার সহিত বিরোধ করিয়াছিলেন, তাহাতে তাঁহার দশন নষ্ট হইয়া যায়।

गत्वा द्रुतं शूरमुखाप्रधृष्य-
वृन्दारका धूनयतारिवर्गम् ।
समीरणो वेगबलप्रवृत्तो
यथा चयं भस्मरजस्तृणानाम् ॥ ५ ॥

(शिव॰ पक्षे) हे शूरमुखाप्रधृष्यवृन्दारका. हे वीरश्रेष्ठा अप्रधृष्यश्रेष्ठाश्च । अथ च पूषभगाख्यसूर्य्यप्रमुखाप्रधृष्यदेवाः । (पक्षान्तरे) हे सूर्य्यप्रभृत्यजेयदेवाः । शूरशब्दस्तालव्यादिः सूर्य्यवीरयोर्वाचकः । मुखमाद्ये प्रधाने च । वृन्दारकशब्द देववाचकः श्रेष्ठार्थकश्चेति ॥ ৫ ॥

( ৫ )
পূষা আদি দুর্দ্ধর্ষ
দেবতা বীরবর!
অজেয় ববেণ্য সেনা!
উৎসারণ কর
দ্রুত অরি বর্গে; যথা
উড়াইয়া লয়,
বেগবান বায়ু, ধূলি-
ভস্ম তৃণ চয়।

( ৫ )
হে সূর্য্য প্রমুখ
অজেয় দেবগণ,
অরিবর্গে অবিলম্বে
কর বিতাড়ন।
যথা বহমান
বেগবান্ সমীরণ
রজ ভস্ম তৃণ চয়ে
করে উৎসারণ।

सज्जोऽहमप्येष कृशानुबन्धु-
　　र्मा विक्रमं प्राकृतिकं जहीत ।
अस्याशिवत्वं सशिवत्वमाहो
　　राज्यस्य युष्मद्भुजदण्डलीला ॥ ६ ॥

( शिव० पक्षे ) कृशानुबन्धुः यज्ञाग्निसहायः अहमप्येष सज्जः जयलाभार्थम् उद्युक्तः । (यद्भवतु) अस्य राज्यस्य शिवहीनत्वं शिवयुक्तत्वं च युष्माकं भुजदण्डलीलामेवापेक्षते ; युष्मासु यथाप्राणं युध्यमानेषु शिवपराजयो भविष्यत्येव नत्वन्यथेति तात्पर्य्यम् । (पक्षान्तरे) अहमग्निना सह सन्नद्ध एव, यूयमग्रेसरा भवत । स्वर्गराज्यस्य मङ्गलामङ्गलयोर्यूयमेव मूलमिति भावः ॥ ६ ॥

( ৬ )

আমিও সজ্জিত,—যজ্ঞ-
　　অগ্নি বন্ধু মম ;
ত্যজিও না নিজ
　　স্বাভাবিক পরাক্রম।
তোমাদেরি ভুজবল-
　　লীলার প্রকার
রাজ্যে রুদ্র রহিবার
　　কিংবা অধিকার।”

( ৬ )

সজ্জিত আমিও
　　সঙ্গী আমার অনল ;
ছাড়িও না প্রাকৃতিক
　　দেব-বাহুবল ।
এই স্বর্গরাজ্যে যে-ই
　　মঙ্গলামঙ্গল
তোমাদেরি বাহু-
　　বল পরীক্ষার মূল ।”

तद्वृयोधवृन्दारकवृन्दमेवं द्युनायकेनोदितमभ्यमित्रम् ।
बभूव वीरत्वमदातिरेकात् तृणाय मत्वाहितसर्व्वलोकान् ॥७॥

( शिव० पक्षे ) योधवृन्दारकवृन्दम् योधाः स्वसैन्यतया स्थिता मानुषा योद्धारश्च वृन्दारकाः पूपादयो देवाश्च तेषां वृन्दं समूहः । योधश्रेष्ठवृन्दं युद्धनियुक्तदेवश्रेष्ठवृन्दश्चेत्यर्थो वा द्युनायकेन ( दिवं स्वर्गं नयति प्रापयति न तु मोक्षम् इति द्युनायः सकामकर्म्ममार्गी स चासौ कश्चेति द्युनायकः तेन ) एवम् उक्तप्रकारम् उत्साहवचनम् उदितम् कथितं सत् वदधातोर्द्विकर्म्मकत्वात् । अहितसर्व्वलोकान् ,-अहितान् शत्रून् सर्व्वलोकान्—सर्व्वस्य शिवस्य लोकान् गणान् अहितः शत्रुः शिवः तस्य लोकानिति वा तृणाय मत्वा अभ्यमित्रं बभूव शत्रूणामभिमुखं बभूव । ( पक्षान्तरे ) योधा ये वृन्दारकाः देवाः तेषां वृन्दं द्युनायकेन दिवस्पतिना इन्द्रेण । अहितसर्व्वलोकान् अहिताः ये सर्व्वलोकाः तान् तृणाय मत्वा । शेषं पूर्व्ववत् ॥ ७ ॥

| ( ৭ ) | ( ৭ ) |
|---|---|
| কাম্যকর্ম্মী দক্ষের এ' বাক্যে দ্রুতগতি। | এই দেবরাজ বাণী শুনিয়া অমর- |
| যোদ্ধৃবর বর্গ ধায় রুদ্র'গণ' প্রতি। | বীরগণ ধায় রিপু সম্মুখে সত্বর। |
| বীরত্ব গর্ব্বের মাত্রা অধিক তাদের | দৈতেয় দানব দলে যত সব অরি— |
| তৃণ সম গণি 'গণে' বিপক্ষ-রুদ্রের। | তা সবে বীরত্ব মদে তৃণ জ্ঞান করি। |

तूर्य्यस्वनास्फालितवीरघोषं
सेनापतेराश्रवतामुपेतम् ।
सवर्णवर्म्मापिहितं विशेष-
चिह्नेन संसूचितपक्षभेदम् ॥ ८ ॥

( ৮ )

সিংহনাদ সম্মিলিত রণবাদ্য বাজে
সেনাপতি আজ্ঞাকারী সৈন্যগণ সাজে
একবর্ণ পরিচ্ছদ পরিধান করে
বুঝা'তে আপন পক্ষ ভিন্ন চিহ্ন ধরে

त्रिशूलकुन्तैर्द्विषतां कृतान्तै-
र्नाराचखड्गैर्जितवीरवर्गैः ।
धनुःकलम्बैः प्रथितावलम्बै-
रस्त्रैर्गदाद्यैर्वृतमप्यभेद्यैः ॥ ९ ॥

( ৯ )

ধরি' অরি-যম সম কুন্ত ও ত্রিশূল,
নারাচ কৃপাণ—যাহে হারে বীরকুল।
প্রসিদ্ধ আয়ুধ আর শর-শরাসনে
সুসজ্জিত গদা আদি দৃঢ় প্রহরণে॥

तद्ब्योधवृन्दारकवृन्दमेवं द्युनायकेनोदितमभ्यमित्रम् ।
बभूव वीरत्वमदातिरेकात् तृणाय मत्वाहितसर्व्वलोकान् ॥७॥

( शिव० पक्षे ) योधवृन्दारकवृन्दम् योधाः स्वसैन्यतया स्थिता मानुषा योद्धारश्च वृन्दारकाः पूषादयो देवाश्च तेषां वृन्दं समूहः । योधश्रेष्ठवृन्दं युद्धनियुक्तदेवश्रेष्ठवृन्दञ्चेत्यर्थो वा द्युनायकेन ( दिवं स्वर्गं नयति प्रापयति नतु मोक्षम् इति द्युनायः सकामकर्म्ममार्गी स चासौ कश्चेति द्युनायकः तेन ) एवम् उक्तप्रकारम् उत्साहवचनम् उदितम् कथित सत् वदधातोर्द्विकर्म्मकत्वात् । अहितसर्व्वलोकान्,—अहितान् शत्रून् सर्व्वलोकान्—सर्व्वस्य शिवस्य लोकान् गणान् अहितः शत्रुः शिवः तस्य लोकानिति वा तृणाय मत्वा अभ्यमित्रं बभूव शत्रूणामभिमुखं बभूव । ( पक्षान्तरे ) योधा ये वृन्दारकाः देवाः तेषां वृन्दं द्युनायकेन दिवस्पतिना इन्द्रेण । अहितसर्व्वलोकान् अहिताः ये सर्व्वलोकाः तान् तृणाय मत्वा । शेषं पूर्व्ववत् ॥ ७ ॥

| ( ৭ ) | ( ৭ ) |
|---|---|
| কাম্যকর্ম্মী দক্ষের এ' বাক্যে দ্রুতগতি । | এই দেবরাজ বাণী শুনিয়া অমর- |
| যোদ্ধৃবর্গ ধায় রুদ্র'গণ' প্রতি । | বীরগণ ধায় রিপু সম্মুখে সত্বর । |
| বীরত্ব গর্ব্বের মাত্রা অধিক তাদের | দৈতেয় দানব দলে যত সব অরি— |
| তৃণ সম গণি 'গণে' বিপক্ষ-রুদ্রের । | তা সবে বীরত্ব মদে তৃণজ্ঞান করি । |

श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तदूर्द्धं कुलकं मतमित्युक्त्या, एकवाक्यतापन्नचतुःश्लोक्याः कलापकम् इति संज्ञा ॥ ११ ॥

( ১১ )

ঘন ঘোষে উৎকণ্ঠি' ময়ূরে চলে রথ
বৃংহিতে শঙ্কিত সিংহ করিবর কত।
হ্রেষারবে' বৃংহিত বিজয়ী অশ্বদল
উৎকৃষ্ট পদাতি—শোভে চতুরঙ্গ বল॥

तद्व्यत्ननैपुण्यविशेषयोगाद्
व्यूहं दुरूहं निबबन्ध सद्यः ।
घोरात्ययाद् विस्मृतमान्त्रिकास्त्रं
न्यधात् पुरश्चायतनालिकानि ॥ १२ ॥

( शिव० पक्षे ) घोरात्ययात् = घोर शिव तस्य अत्ययः अतिक्रमः, तस्मात्; अत्यय, दण्ड, शिवदत्तदण्डः, तस्माद् वा । ( पक्षान्तरे ) घोरः भयानकः, भयानकदोषात् दुर्वासोऽवमानना‍रूपात् , यद्वा घोरः दुर्वासाः शिवांशत्वात्, तस्मात्तिस्मात् । आयत-नालिकानि वृहन्नालिकानि, नालिकयन्त्रार्थो वक्ष्यते ॥ १२ ॥

उद्गायतां चारणपुङ्गवानां
वीर्य्यावदानोज्ज्वलकीर्त्तिगाथाम् ।
सत्त्वेन सञ्चिन्वदपूर्व्वभाव
वृन्द तरूणामिव मूलसेकात् ॥ १० ॥

अवदान वृत्तं कर्म्म ॥ १० ॥

( ১০ )

পূর্ব্বকৃত পরাক্রম যশে সমুজ্জ্বল
গাথা গায় উচ্চ কণ্ঠে চারণের দল। *
মূলে জলসেক হেতু তরুরাজি প্রায়
হইয়ে সতেজ—নব বলে বলী তায়॥

रथैरवोत्कण्ठितनीलकण्ठैः
कण्ठीरवत्रासकरैः करीन्द्रैः ।
हयैर्गजोद्गगर्ज्जनतर्ज्जिहेषैः
वभौ वल पत्तिभिरग्रियैश्च ॥ ११ ॥ कलापकम् ॥

नीलकण्ठो मयूर । रथघोष मेघनिर्घोष शङ्कमाना मयूराणा मुत्कण्ठा जातेतिभाव । कण्ठीरव सिंह । द्वाभ्या तु युग्मक प्रोक्त त्रिभि

* এইস্থল চারণ' কথার অর্থে দুইপক্ষে একটু প্রভেদ আছে—দক্ষ সৈন্য পক্ষে চারণ—এক প্রকার জাতি রাজপুতানা প্রভৃতি স্থানে প্রসিদ্ধ। দেবগণ পক্ষে চারণ।দেবযোনি বিশেষ। তৃতীয় সর্গে এই চারণের কথা আছে।

लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात्तदूर्द्धं कुलकं मतमित्युक्तया, एकवाक्यतापन्नचतुःश्लोक्याः कलापकम् इति संज्ञा ॥ ११ ॥

( ১১ )

ঘন ঘোষে উৎকণ্ঠি' ময়ূরে চলে রথ
বৃংহিতে শঙ্কিত সিংহ করিবর বত।
হ্রেষারবে' বৃংহিত বিজয়ী অশ্বদল
উৎকৃষ্ট পদাতি—শোভে চতুরঙ্গ বল॥

तद्यत्ननैपुण्यविशेषयोगाद्
व्यूहं दुरूहं नियबन्ध सद्यः।
घोरात्ययाद् विस्मृतमान्त्रिकास्त्रं
न्यधात् पुरश्चायतनालिकानि ॥ १२ ॥

( शिव॰ पक्षे ) घोरात्ययात् = घोर शिवः तस्य अत्ययः अनिक्रमः, तस्मात्; अत्ययः दण्ड. शिवदत्तदण्डः, तस्माद् वा। ( पक्षान्तरे ) घोरः भयानकः, भयानकदोषात् दुर्वासोऽवमाननारूपात्, यद्वा घोरः दुर्वासाः शिवायत्वात्, तस्यातिक्रमात्। आया-न[illegible] [illegible]नालि-कानि, नालिकशब्दार्थो वक्ष्यते ॥ १२ ॥

( ১২ )

বিশেষ নৈপুণ্য সহ যত্ন পুরঃসর
রচিল দুর্ভেদ্য ব্যূহ সমরে সত্বর।
ঘোরাত্যয়ে অস্ত্র-মন্ত্র হয় বিস্মরণ
ব্যূহমুখে রবে বড় নালিক স্থাপন॥*

শোকাঙ্কশঙ্কাচকিতাশ্চ দিব্য-
স্ত্রিয়ো বিমানোচ্ছ্রিতকক্ষসংস্থাঃ।
কাশ্চিদ্ গবাক্ষান্তরিতাশ্চ কাশ্চিদ্
যথেচ্ছমৈক্ষন্ত মহাজিসজ্জাম্॥ ১২॥

( ১৩ )

সতী শোকে, শিব ভয়ে
কাতর রমণী-
গণে যাঁরা দেবী তাঁরা
বিমান চারিণী—
হ'য়ে উচ্চ কক্ষে বসি,
লুকায়ে অপরে
গবাক্ষে বা ইচ্ছা মত
রণ সজ্জা হেরে।

( ১৩ )

শোকাঙ্কিত শঙ্কাকুল
কোন কোন দেবী
বিমানোচ্চ কক্ষে
বসি, বিষাদের ছবি।
প্রাসাদে গবাক্ষ জালে
আবরিয়া দেহ
অন্যে দেখে, রণ সজ্জা;
ইচ্ছা মত কেহ।

---

(১) (শিবলীলা পক্ষে) ঘোরাত্যয়ে=ঘোর—শিব, অত্যয়—দণ্ড বা দোষ, ঘোরাত্যয় শিবদত্ত দণ্ড, বা শিবের নিকটে দোষ করায়,—

**तद्भीमसैन्यं दितिभूतिवित्तं माप्तां विलोक्यादितिजन्मसेनाम् ।**
**हासेन रोषेण तथा परीतं स्वबाहुलीलां प्रकटीचकार ॥१४॥**

( शिव० पक्षे ) भीमस्य शिवस्य सैन्यं दितिभूती खण्डनभस्मनी वित्तं धनं येषाम् अदितिजन्मा दक्षः अदितेर्जन्म यस्मात् सः । ( पक्षान्तरे ) भीम भयानक सैन्य दितिभूत्या दितेे गर्भजतया वित्तम्, दैत्यत्वेन ख्यातम् । अदितिजन्मानो देवाः अदितेर्जन्म येषां ते ॥१४॥

( ১৪ )

ভস্ম ও বিবন ধন
কদ্র সেনা গণ
হেরি দক্ষ-বাহিনীর
রণ-আয়োজন ।
করিয়ে বিকট হাস্য
রোষে প্রজ্বলিত
নিজ-নিজ ভুজ বল
করে প্রকাশিত ।

( ১৪ )

দৈত্য নামে খ্যাত সৈন্য
অতি ভয়ঙ্কর ;
দেখে দেব সৈন্য
আসে সমরে তৎপর ;
পরিপূর্ণ ক্রোধ ভরে
করি' উপহাস
নিজ বাহুবল লীলা
করিল প্রকাশ ।

---

দশসেনা অস্ত্র মন্ত্র বিস্মৃত হইল। (পক্ষান্তরে) ঘোর=ভীষণ, ভীষণ রোষে—দুর্ব্বাসার অপমানে। মন্ত্রপূত অস্ত্র প্রয়োগ বিস্মরণ—দুর্ব্বাসার অপমান ফলেই দেব সেনার হইয়াছিল। বলাবাহুল্য, কামান যুদ্ধ বর্ণনা কবি কল্পনামাত্র। বড নালিক—কামান। নালিক দ্বিবিধ—ক্ষুদ্র ও বৃহৎ, ক্ষুদ্র—বন্দুক, বৃহৎ—কামান। (শুক্রনীতি) অর্থাৎ মন্ত্র প্রয়োগে অস্ত্র চালনার অভাবে কামান পাতিতে হইল।

द्विषां बृहन्नालिकरन्ध्रमुक्ता-
नलोज्ज्वलामायसपिण्डकोटिम् ।
निष्क्रान्तिनादक्षतदर्पवज्रा-
मुपेक्षमाणाग्रमितोग्रसेना ॥ १५ ॥

( शिव० पत्ते ) उग्रस्य शिवस्य सेना । नालिकम् आग्नेयास्त्रभेदः । तद् द्विविधम्, क्षुद्रं बृहच्च । ( इति शुक्रनीतिः ) बन्दूक कामान इति तयोरनुवादः । बृहन्नालिक कामान इत्यर्थकम् । ( पक्षान्तरे ) उग्रा दारुणा सेना, समानमन्यत् ॥ १५ ॥

( ১৫ )

বজ্র দর্পহারী ঘোর গর্জ্জন সহিত
বৃহৎ নালিক-অস্ত্র বক্রে নিঃসারিত
অসংখ্য জ্বলন্ত লৌহ পিণ্ডে না মানিয়া
উগ্র সেনাপতি সেনা চলে আগাইয়া ॥ *

* উগ্র=মহাদেব, সেনাপতি ও সেনা সকলেই তাঁহার সেনা, এই কারণ—মূলে 'উগ্র সেনা' থাকিলেও অনুবাদে 'উগ্র সেনাপতি সেনা' এই রূপই করা হইয়াছে। অপর সেনা পক্ষে উগ্র শব্দের অর্থ দারুণ,—কোপন-স্বভাব। উগ্রের সেনা বা উগ্রস্বভাব সম্পন্ন সেনা—দুই প্রকার অর্থই হইতে পারে,।

परिज्वलच्चूर्णविशेषगर्भान्,
चलन्महोल्का इव ऋद्धवेगान्।
अयोगुडांश्छिद्रवतो विलङ्घ्य
तदस्त्ररन्ध्राणि रुरोध कीलैः ॥ १६ ॥

( ১৬ )

জলন্ত বারুদ গর্ভ অতি বেগে ধায়
পড়ে যেন মহাউল্কা এমতি দেখায়।
স-রন্ধ্র আয়স গোলা বৃষ্টি হ'য়ে পার
খিল আঁটে অস্ত্ররন্ধ্রে করি অধিকার॥

क्षणात् कृपाणेषु तडिद्विलासः
क्षणाज्झणत्कारखातिरेकः।
क्षणाद्बभूवाग्निकणावभासो
भङ्गः क्षणाद्वा रुधिरौघसङ्गः ॥ १७ ॥

( ১৭ )

নিমেষে কৃপাণে যেন খেলে সৌদামিনী
বাড়িল তখনি সেই অস্ত্রে ঝনঝনি।
ঘাত প্রতিঘাতে ক্ষণে অগ্নি কণা উঠে
ক্ষণে অস্ত্র ভঙ্গ কিবা রক্ত ধারা ছুটে॥

सम्माननार्हं विमलावभासं
कृपाणधारामणिहारसारम् ।
कश्चिद्दृढं सज्जयितुं परस्य
कण्ठोपकण्ठोपनतं चकार ॥ १८ ॥

(कृपाणधारापक्षे) सम्माननाशब्द हिंसनार्थः, तदर्हं तत्र योग्य तत्साधनोपयुक्तम् । (हारपक्षे) सम्माननार्हं पूजार्हम् आदरयोग्यम् ॥ १८ ॥

( ১৮ )

সম্মাননে উপযুক্ত অসিলতা ধার
নির্ম্মল প্রকাশ যেন শ্রেষ্ঠ মণি হার।
দৃঢ় ভাবে সংলগ্ন করিতে কোন ভট
আনিল সত্বর পর-কণ্ঠের নিকট ॥ *

* অসি পক্ষে—'সম্মাননে'=বধকার্য্য সাধন করিতে। নির্ম্মল প্রকাশ—শাণদেওয়া হেতু চাকচিক্যময়। ভট=যোদ্ধা। পর কণ্ঠের=পর—শত্রু তাহার কণ্ঠের। হারপক্ষে সম্মাননে=আদৃত হইবার। নির্ম্মল প্রকাশ=উজ্জ্বল। পর=প্রধান। অর্থাৎ আদরণীয় উজ্জ্বল মণিময় উৎকৃষ্টহার প্রধান ব্যক্তির কণ্ঠ পরাইবার জন্য কণ্ঠ নিকটে আনয়নের ন্যায় বধকার্য্যে উপযুক্ত শাণ দেওয়া ধারাল খড়্গ শত্রুর কণ্ঠ সমীপে কোন যোদ্ধা আনয়ন করিল। শত্রু সমস্ত বীরের এই রূপ আঘাত প্রাপ্তি মণিময় দিব্য হার প্রাপ্তির ন্যায় আকাঙ্ক্ষণীয় ইহাই তাৎপর্য্য।

दृढोपरुद्धत्सरुमुष्टिसृष्ट-
स्वेदाम्बुभिर्दन्तुरितं द्विपोऽसिम् ।
कृपाणसञ्चालनकौशलेन
चकार कश्चिद्विफलप्रयोगम् ॥ १९ ॥

( ১৯ )

ধৃত-মূল দৃঢ় মুষ্টি বদ্ধ বিগলিত
স্বেদ জল ধারা যা'বে করে দন্তুরিত।
প্রতিপক্ষ কৃত সেই কৃপাণ প্রয়োগে
ব্যর্থ করে কোন বীর নিজ অসিযোগে ॥

दोर्दण्डकोदण्डशरत्रिशूल-
भल्लादिभिश्चोल्वणमल्लयुद्धैः ।
प्राणापहाराय भटेषु तावद्
द्वौ द्वौ व्यधत्तां विकराललीलाम् ॥ २० ॥

( ২০ )

প্রকাণ্ড কোদণ্ড বাণ ভল্ল ত্রিশূলাদি
অস্ত্রে অস্ত্রে মল্লে মল্লে তুল্য প্রতিবাদী।
ভয়ঙ্কর দ্বন্দ্ব যুদ্ধ করে যোদ্ধৃগণ
একে অপরের প্রাণ লইবার পণ ॥

विच्छिद्यमानस्य पदातिसादि-
तुरङ्गमातङ्गगणस्य नादः
प्राणावसानक्षणलब्धजन्मा
संग्रामभूमिं स्थगयाञ्चकार ॥ २१ ॥

( ২১ )

মাতঙ্গ তুরঙ্গ সাদী পদাতি যে সব
হ'তেছিল ছিন্ন, তাহাদের আর্ত্তরব।
আসন্ন মরণ কালে উঠিয়া চৌদিকে
আচ্ছন্ন করিল সেই সমর ভূমিকে ॥

एको विभिन्दन्नपरो विभिन्नः
परो विभिन्दन्नपि भिद्यमा
रणस्थली शोणितपूरमग्ना-
मेवं समस्ताः सममेव चक्रुः ॥ २२ ॥

( ২২ )

একে করি অস্ত্রঘাত, অন্যে ছিন্ন হ'য়ে,
পরে ছেত্তা এবং ছিন্ন দুই রূপ ল'য়ে।
এই রূপে এক যোগে সৈনিক সকল
রুধির প্রবাহে মগ্ন করে রণস্থল ॥

न्छलेन दृश्यमानः दक्षस्य स्वर्गवद्रमणीयपुरमाकुलयाञ्चकारेति तात्पर्य्यम् ।
( पक्षान्तरे ) दितिसूतिभर्त्तुः दितिसूतीना दितिमातृकाणां दैत्याना राज्ञः रौद्रः दारुणः प्रतापः रक्तप्रवाह इति यो व्यपदेशः संज्ञा तद्भागी तेन सङ्केतितः सन् स्वरन्त स्वर्गस्वरूप पुरम् आकुलयाञ्चकार ॥ २४ ॥

( ২৪ )

স্বর্গ হ'তে ছিল যাহা
অতি মনোহর,
রুদ্রের প্রতাপ—
সেই দক্ষের নগর—
রুধির প্রবাহ রূপে
হ'য়ে দৃশ্যমান,
আকুল করিল যবে,
করি অনুমান ॥

( ২৪ )

দৈত্যরাজ প্রতাপ যে
অতি ভয়ঙ্কর,
মনে হয় সেই বুঝি
দৃশ্য - কলেবর
রুধির প্রবাহ নামে
হ'য়ে পরিচিত,
যবে রম্য স্বর্গপুরী
করে আকুলিত ॥

अथ क्षणेनादितिजन्मयोधा-
स्ते हीनसत्त्वा द्विपदुग्रपक्षात् ।
पश्चात्पदा यावदभीतियार्त्तं
कृशानुतुल्यैरधिपाटमृण्वन् ॥ २५ ॥

मिलितयोरेकनक्षत्राधिदेवतात्वदर्शनात्, साहचर्यं वर्णितम्। विशाखा नाम नक्षत्रपुञ्जं शक्राग्निदेवताकमिति ज्योतिःशास्त्रम् । अभिषात् इन्द्रात्; यावद्देवसेनाः पराजिताः पश्चात्पदा भवितुं प्रवृत्ताः, तावदग्निना सहित इन्द्रः समरभुवमवतीर्य अभयवादमकरोत्, तत्र तेऽ-भ्युदयन्निति भावः ॥ २५ ॥

| ( ২৫ ) | ( ২৫ ) |
| --- | --- |
| অনন্তর ক্ষণ মধ্যে | অতঃপর অল্পকালে |
| দক্ষ সৈন্য দল | দেব সৈন্য চয় |
| বিপক্ষ রুদ্রের পক্ষ | দারুণ অসুর রণে |
| হ'তে হীন বল। | হীন বীর্য্য হয়। |
| পিছু হটে রণস্থলে— | রণে ভঙ্গ দিবে হেন |
| এমন সময় | কালে অগ্নি সনে |
| হুত বহ্নি—রাজ বাণী | ইন্দ্রের অভয় বাণী |
| শুনে 'নাহি ভয়'॥ | তা'রা সব শুনে॥ |

तदाग्निदत्ता बहुसंख्य-योधाः
प्रोत्साहयन्तः परिभूतसेनाः ।
समं समापेतुरसह्यवीर्या
द्विषामभावाय समुद्यतास्त्राः ॥ २६ ॥

(शिव० पक्षे) अग्निदत्ताः—यज्ञियानलेनार्पिताः । (पक्षान्तरे) इन्द्रसहचरेण अग्निना दत्ताः युद्धार्थं समर्पिताः ॥ २६ ॥

( ১৬ )

তখন বঙ্গীয় অগ্নি
হ'তে সমুত্থিত
মহাবীর বহু সৈন্য;
করি উৎসাহিত,
রণে পরাজিত সৈন্যে,—
তাদের সহিত,
উদ্ধার—রিপু বধে
হয় উপস্থিত॥

( ২৬ )

সে সময়ে অগ্নিদত্ত
বহু সংখ্য সেনা
প্রচুর বিক্রমে
ল'য়ে প্রহরণ নানা
হীন বল সৈন্য দলে
উৎসাহিত করি
তা'সবা সহিত ধায়
বিনাশিতে অরি॥

सेनाभिरन्याभिरपि प्रवृद्धा
सा वाहिनी पूर्णतमा बभूव ।
कुल्यागिरिग्रामपुराद्युपेतै-
र्वर्षाम्बुभिः प्रावृषि निम्नगेव ॥ २७ ॥

*अन्याभिः अग्निदत्तातिरिक्ताभि पराजितातिरिक्ताभिश्च ॥ २७ ॥*

( ১৭ )

মিলিল অপর সেনা তাদের সহিত
বিশাল বাহিনী হয় পূর্ণ—উপচিত।
নদী যথা পরিপূর্ণ হয় বর্ষাকালে
গিরি পুর গ্রাম খাল বাহি নীত জলে॥

ततः पुनरपीतरेतरजयैषिणोः सेनयो-
र्बभूव तुमुलो रणः सकलविश्वविस्मापनः ।
सदक्ष-सुरपक्ष-भागजनि जन्ययोगस्तया
यथारिगणविक्रमः क्षणमुपागमत्क्षीणताम् ॥२८॥

( शिव० पक्षे ) दक्षश्च सुराश्च, तेषां पक्षाः सहायाः अनिन्द्यबाधा एवं रणयुक्ता अमथन् येन रुद्रगणाना विक्रमः क्षणं क्षयमवापेत्याह स इति सः प्रसिद्धः जन्यस्य युद्धस्य योगः सन्नद्धन जन्ये युद्धे योगः चित्तैकाग्र्यं जन्येन योगः सम्बन्धो वा तथा अजनि अभूत्, यथा अरिगणविक्रमः अरयो ये गणाः प्रमथाः तेषां विक्रमः क्षणं क्षणकाल व्याप्य क्षीणतामुपागमत् । ( पक्षान्तरे ) सदक्षाः सदिन्द्रियसम्पन्नाः सुराः तेषां पक्षः चतुरङ्गबलं, जन्य समरः तत्र योग इत्यादिकं पूर्व्ववत् ॥ २८ ॥

( २৮ )

পরস্পর জয়াকাঙ্ক্ষী
সেই পক্ষ দ্বয়
তুমুল সংগ্রাম করে
বিশ্বের বিস্ময় ।
হইল প্রবল দক্ষ-
পক্ষ অতিশয়
ক্ষণকাল রুদ্র সেনা-
বিক্রমের ক্ষয় ॥

( ২৮ )

জয় আশে পরস্পর
করে ঘোর রণ
দেব ও অসুর ; বিশ্ব
বিস্ময়ে মগন ।
দেব পক্ষ সেই রণে
হইলা প্রবল
ক্ষণে ক্ষীণ শক্তি-হয়
অসুরের দল ॥

तदुग्रगणनायकः प्रकटयंस्तदा विक्रमं
स्वपक्षदृढतां तथा परचमूसमुत्सादनम् ।
क्षणेन विदधद् रवि-प्रभृति-देवतानां जयी
बलात्प्रवर्त्तते रिपुप्रियवितानविध्वंसने ॥२९॥

( शिव० पक्षे ) ते क्षीणविक्रमाः उग्रगणाः महादेवस्य प्रमथाः तदुग्रगणाः तेषां नायको वीरभद्रः । रविप्रभृतिदेवतानां रविः पूषा भगश्च तत्प्रभृतीनां युद्धायागतानां देवतानां जयी जेता सन् । रिपोर्दक्षस्य प्रियो यो वितानः शिवाप्रदीनो यज्ञः तद्विध्वंसने समारोहे प्रवर्त्तते । विपयत्वं स्पष्टमर्थः । (पक्षान्तरे) ते पूर्व्वप्रक्रान्ताः उग्रा असुरा उग्रत्वात् । तेषां गणः समूहस्तन्नायकः असुरराजः । रविप्रभृतिदेवतानाम् सूर्य्यचन्द्रादिदेवतानां जयी तान् विजयमानः रिपुप्रियाणां देवप्रियाणां ब्राह्मणादीनां वितानः समूहः तद्विध्वंसने यद्वा रिपुप्रियाः देवप्रिया ये वितानाः यागाः देवसम्भूता यज्ञाः तेषां विध्वंसने विध्वंसं कारयितुं सैन्यादिप्रेरणेन तद्विलोपनाय प्रवर्त्तते । विध्वंसन इति णिजन्तगर्भः प्रयोगः भारतवर्षप्रभावानां जनानां विलोपार्थं सेनाः प्रेरयामास यज्ञविलोपेन देवा निरशना बभूवुरित्यभिप्रायः ॥ २६ ॥

( २९ )

[illegible]

( २९ )

[illegible]

করি' পরসৈন্য বধ
পূষা আদি জয় ;
ধায় দক্ষ-প্রিয় যজ্ঞ
করিবারে ক্ষয় ॥

দিবাকর আদি সবে
পরাজয় ক'রে
কহে সৈন্যে দেবভোগ্য
যজ্ঞ নাশিবারে ॥

**स्वस्थेम-संरक्षणतत्परेण दक्षेण पत्येष्टहुताशनेन ।**
**प्रभूतशक्त्याथ समेधितस्य वीरस्य तस्याजनि सन्निकर्षः ॥२०॥**

( शिव०पक्षे ) अथ ( यज्ञध्वंसविषयकप्रवृत्त्यनन्तरम् ) प्रभूतशक्त्या ( प्रकृष्टा ये भूताः प्रमथाः तेषां शक्त्या ) समेधितस्य ( वर्द्धिततेजसः ) तस्य वीरस्य ( वीरभद्रस्य ) स्वस्थेम-संरक्षणतत्परेण ( स्वेषां स्वकीयानां योद्धृपुरुषाणामन्येषाञ्च स्थेम्न: स्थिरतायाः संरक्षणतत्परेण, मन्त्रशक्त्या सम्यग् रक्षार्थं प्रयतमानेन, भूतैरेषां निग्रहो माभूदिति तन्निवारकमन्त्रादिप्रयोक्त्रा ) इष्टहुताशनेन ( इज्यमानवह्निना, आग्नेययागमाचरता ) पत्या ( तत्स्थानस्वामिना गृहपतिना प्रजापतिना वा ) दक्षेण ( सहार्थे तृतीया ) सन्निकर्षः ( अव्यवहितसम्बन्धः ) अजनि ( जातः ) । यज्ञध्वंसप्रवृत्तिमान् वीरभद्रः प्रमथश्रेष्ठैः समन्वितो दक्षमुपाजगामेत्यर्थः । ( पक्षान्तरे ) अथ ( यज्ञविघाताय भारते सैन्यप्रेरणानन्तरम् ) प्रभूतशक्त्या ( प्रचुरसामर्थ्येन ) समेधितस्य ( देवगणापेक्षया वृद्धिं नीतस्य ) तस्य वीरस्य ( असुरराजस्य ) स्थेम संरक्षणतत्परेण ( स्थेम्नः स्थिरतायाः संरक्षणे, सैन्यशृङ्खलास्थापने तत्परेण निरतेन ) इष्टहुताशनेन ( इष्टः सङ्गत हुताशनो येन, 'यज'-धातोः सङ्गत्यर्थकत्वात् ) दक्षेण ( रणकुशलेन ) स्वः ( लुप्तषष्ठीक पृथक् पदम् , स्वर्गस्य, स्वः स्थेमेति खर्परे शरि विसर्गलोपात् ) पत्या

( दिवस्पतिना इन्द्रेण, सहार्थे तृतीया ) सन्निकर्षः ( योद्धृप्रतियोद्धृरूपेण मेलनम् ) अजनि। अग्निमिलितेन्द्रेण महासुरराजस्य युद्धं प्रवृत्तमिति भावः ॥ ३०॥

( ৩০ )

আপন পক্ষের স্থৈর্য্য
রক্ষণে তৎপর
যজ্ঞতৃপ্ত অগ্নি-বলে
দক্ষ শক্তি-ধর।
ভয়হীন সে কারণে
জয় আশা মনে
সন্নিকর্ষ হ'ল তা'র
বীরভদ্র সনে॥

( ৩০ )

স্থির রাখিবারে সবে
অগ্নি সহচর
রণদক্ষ সুররাজ
বহু-শক্তি-ধর।
আপনি আসেন রণে
দেব রিপুগণ—
নিকটে আসিয়া তাঁর
করে আক্রমণ॥

ख्यातिप्रियस्त्वदितिधृतिपतिश्च तेन
तूलीकृतः प्रकटितप्रचुरस्मयोऽप्या।
प्रायो गुरोरपि भवेल्लघुतातितापान्-
मानं हि तापवति वारिणि बाष्पभावः ॥३१॥

( हिम॰पक्षे ) ख्यातिप्रियः भृगुः (ख्यातिरिति भृगुपत्न्या नामेति विष्णुपुराणम्) तु ( पक्षान्तरे ) अदितिधृतिपतिः ( अदितिधृत्योः [illegible] [illegible], [illegible] [illegible] अदित्यादिकन्यानां [illegible] श्रीमद्भागवतादिपुराणम्। अत्र [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] ) । तेन = वीरेण [illegible] [illegible]

यावत् तूलीकृतः लघूकृतः, निगृहीत इत्यर्थः । तत्र हेतुः प्रवर्टित-प्रचुर-स्मयोष्मा, प्रकाशितप्राज्यगर्व्वजनितोष्णभावः । अत्रोष्णभावः क्रोधः । प्रायइत्यर्थान्तरन्यासः, तापशब्दस्य श्लेषात्, सामान्यस्य तस्य दृष्टान्तेन दृढीकरणं मानमितिचतुर्थपादेन ।

( पक्षान्तरे ) तु पुनः ख्यातिप्रियः यशःप्रियः, अदितिसूतपतिः अदितिसूतीनाम् अदितिमातृकाणां देवानां पतिः राजा देवराजः तेन शत्रुप्रधानेन । अन्यत्पूर्ववत् ॥ ३१ ॥

( ৩১ )

প্রজাপতি দক্ষ
ও পুরোধা ভৃগুমুনি,
প্রচুর গরবে উষ্মা
প্রকাশি' তখনি,
শত্রুর নিগ্রহ পায় ;
তাপ বৃদ্ধি হ'লে
গুরুরো লাঘব হয়
বাষ্প যথা জলে॥

( ৩১ )

খ্যাতি প্রিয় দেবরাজ
প্রচুর গরবে,
দেখাইয়া উষ্ণ ভাব,
রিপুর প্রভাবে
হ'ল, বিক্ত; তাপে
গুরুও যে লঘু হয়
প্রত্যক্ষ প্রমাণ—
জল হয় বাষ্পময়।

कान्तं स्वरापसवनान्तमथेतिकृत्वा
दृष्टं बलं सितबलं द्विपदीश्वरस्य ।
दम्भानुबन्धनविलङ्घितपूज्यपूजाः
किं भुञ्जते फलमिति प्रथयाम्बभूव ॥३२॥

( शिव० पक्षे ) अथ अनन्तर दक्षेण सन्निकर्षानन्तर 'इति'

एवंप्रकारेण पूषप्रभृतिदेवतात्रयादिकर्म्मणा सितबलं रुधिरितसैन्यं दक्षं द्विषत् ईश्वरस्य शिवस्य बलं सैन्यं प्रमथवाहिनी, स्वरापसवनान्तं स्वरः = अरः अविलम्बितः, सु ( उत्कृष्टः ) अरः स्वरः शीघ्रतर इत्यर्थः अरादिशब्दस्य विशेष्यगामित्वेनात्र पुलिङ्गता, अपसवनान्तः येन तं कान्तमिति विशेष्यपदम् ( अपकृष्टं शिवभागहीनत्वात् निन्दितं यत्सवनं यज्ञः तदपसवनं तस्य अन्तः नाशः, ध्वंसः अपसवनान्तः ) कान्तं कस्य दक्षस्य ( के ब्रह्मणि समीरात्मयमदक्षेष्विति मेदिनीकोषात् श्रीमद्भागवते बहुशः प्रयोगाच्च ) अन्तं नाशम् कृत्वा दम्भानुबन्धनेन दम्भपरम्परया दम्भानुसरणेन वा, ( दम्भः = अभिमानः गर्व्वः ) विलङ्घिता अतिक्रान्ता पूज्यपूजा यैः तादृशा जनाः किं फलं भुञ्जते, कीदृशं परिणामं प्राप्नुवन्ति तत्प्रथयाम्बभूव प्रथितं चकार। अत्र पूज्यपूजालङ्घनम् सर्व्वलोकपूज्यस्य भगवतो महेश्वरस्य अवहेलनम्।

(पक्षान्तरे) अथ अनन्तरम् इन्द्रपराजयानन्तरम् सितबलं विनाशितबलासुरं बलारातिम् इन्द्रं द्विपदीश्वरस्य द्विषताम् ईश्वरस्य इन्द्रारीणाम् असुराणां राज्ञः, ( चैत्रस्य गुरुकुलमिति शरैः शातितपत्रक इति मूर्त्तिं भजद्भगवत इति चैवमादिवत् सापेक्षत्वेऽपि गमकत्वात् समासः। ) अथवा सितबलं शातशक्तिकं द्विपदीश्वरस्य शत्रुराजस्य बलमित्यर्थकविशिष्टान्वयः। दक्षं रणकुशलं बलं सेनां कान्तम् आकाङ्क्षितं सवनान्तं नन्दनकाननसहितं ( वनान्तो वनेषु अन्तः अतिमनोहरः नन्दनकाननम्। ) यद्वा वनान्तो वनभागः नन्दनकाननं ( इन्द्रवनस्य नन्दनत्वात् प्रकरणात् सामान्यवाचकशब्दस्य विशेषपरत्वात् ) तेन सह स्वः स्वर्गम् आप प्राप अधिचकार इत्यर्थः। इति कृत्वा = एवं कर्म्मणा,

दम्भानुबन्धन-विलङ्घित-पूज्यपूजाना कीदृक्फलभोगस्तत्प्रथयामास।' इति पूर्ववदर्थः। अत्र पूज्यपूजाविलङ्घन शङ्करस्य दुर्वाससं. प्रत्यनादरः इति विशेष ॥ ३२ ॥

इति कविकुल-लालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये पूज्यपूजाव्यतिक्रमफल नाम षष्ठः सर्गः ॥ ६ ॥

| ( ৩২ ) | ( ৩২ ) |
|---|---|
| দক্ষ-বৈরী রুদ্রসেনা, | পরে কর্ম্মদক্ষ |
| কবি সৈন্য ক্ষয় | দৈত্যরাজ সেনাগণ |
| শিবহীন যজ্ঞ পণ্ড | লভে স্বর্গ আকাঙ্ক্ষিত |
| যা'তে শীঘ্র হয়,- | স-নন্দন বন। |
| হেন রূপে নাশি দক্ষে | পূজ্য পূজা নাহি মানে |
| জগতে ঘোষিল, | যা'বা দম্ভ বশে |
| দর্পে পূজ্য পূজাত্যাগী | তা'দেব এরূপ ফল— |
| লভে যে কিফল॥ | বিশ্বমাঝে ঘোষে॥ |

ইতি 'সর্ব্বমঙ্গলোদয়' নামক দ্ব্যর্থকাব্যে 'পূজ্যপূজাব্যতিক্রম ফল' নামক ষষ্ঠ সর্গ সমাপ্ত॥

---

## सप्तमः सर्गः ।

मौलिमूलमिलदञ्जलिगुञ्जा-
पुञ्जरागरुचिराम्बुजमुद्राः ।
आपनेतुमथ कामयमाना-
स्तं शिवस्य विषमात्ययभावम् ॥ १ ॥

अस्तुवन्नदितिभूमुनिमुख्याः
सारसासनसनाथसमाजाः ।
तद्गतेन हृदयेन समेत्य
क्षीरसिन्धुशुचिधामभवेशम् ॥२॥ युग्मकम् ॥

( शिव० पक्षे ) अथ अनन्तरम् दक्षनिधनतद्यज्ञध्वसाद्यनन्तरम् । 'सारसासनसनाथसमाजाः' । सारसासनेन कमलासनेन ब्रह्मणा सनाथः सहितः सारसासनसनाथः समाजः समूहो येषां ते 'अदितिभूमुनिमुख्याः' अदितिभूः अदितेर्भूः उत्पत्तिस्थानम् अदितेर्भूः उत्पत्तिः यतः इति वा सा दक्षपत्नी प्रसूतिः सा च मुनिमुख्या मरीच्यादयश्च

'शिवस्य' महेश्वरस्य 'तं' तथाविधं पूर्व्वोक्तप्रकारं 'विषमात्ययभावम्' विषमः = दुःसहः अत्ययः = अनिष्टम् यस्मात् तस्य भावं = तत्ताम् आपनेतुम् आ = सम्यक् अपनेतु = दूरीकर्तुं कामयमानाः अभिलषन्तः 'मौलिमूलमिलदञ्जलिगुञ्जापुञ्जरागरुचिराम्बुजमुद्रा.' मौलिमूले = शिरःसम्मुखभागे, मिलन् = बध्यमानः यः अञ्जलिः सैव गुञ्जापुञ्जरागरुचिराम्बुजमुद्रा येषा ते, ( गुञ्जापुञ्जस्य यो रागः रक्तता तेन रुचिराणि अम्बुजानि—रक्तकमलानीत्यर्थः तेषां मुद्रा मुद्रणावस्था, कुड्मलावस्थेति यावत् रक्तकमलकुड्मलसदृशमञ्जलि शिरःपुरोभागे बध्नन्त इत्यर्थः ) सन्तः 'समेत्य' मिलित्वा, समेषां सर्वेषाम् इत्थं गम्यं गतिस्थानं वा क्षीरसिन्धु शुचिधाम क्षीरसिन्धुवत् शुचि शुभ्रं धाम तेजो यस्य तं भवं भवशब्दवाच्यमीशं महेश्वरं ( समेत्यश्चासौ क्षीरसिन्धुशुचिधाममवेशश्चेति द्वितीयकल्पे कर्म्मधारयः, क्षीरसिन्धुशुचिधामा चासौ भवेशश्चेति भवो भवशब्दवाच्य ईशो भवेश इति च कर्म्मधारयसमासद्वय कल्पद्वये समानम् ) तद्गतेन हृदयेन तदेकाग्रेण मनसा अस्तुवन् ।

( पक्षान्तरे ) अदितिः भूः उद्भवहेतुः, उत्पत्तिक्षेत्रं वा येषां ते अदितिभुवो देवाः । ते च मुनयश्च तेषां मुख्याः, सर्व्वेषां तत्समीपं गमनेऽनधिकारादित्याशयः । 'तं' प्रागुपवर्णितं 'शिवस्य' मङ्गलस्य 'विषमात्ययभावं' विषमः दुःसहः अत्ययः अवसानं यस्य तद्भावं तं दुःसहमङ्गलध्वंसं—लक्ष्मीभ्रंशमारभ्यासुराणां स्वर्गाधिकारपर्यन्तम्, आपनेतुं कामयमानाः क्षीरसिन्धुः क्षीरोदसागरः स एव शुचिधाम पवित्रं भवनं समेत्य सम्यग् यथाहमुदाचारम् एत्य प्राप्य भवेशं भवस्य

संसारस्य ईश सृष्टिस्थितिसंहरणसमर्थं—शिवस्य प्रभुं वा नारायणम् अस्तुवन्। पद्यद्वये शारसाधनसनाथइति समाजनिरोपयम् स्तवस्य ब्रह्मणा रचितत्वस्यान्येषां तदनुवादकत्वस्य च सूचनायेति बोध्यम्॥ १–२॥

( ১।২ )

অদিতি জননী যার
মুনিবরগণ—
অগ্রবর্ত্তী তাঁহাদের
কমল-আসন।

মৌলি মূলে মিলাইয়া
বিনয়ে অঞ্জলি
যেন গুঞ্জাপুঞ্জ রক্ত
শতদল কলি।

. বের সংহার ভাব
দূর করিবারে
তদগত হৃদয়ে সবে
স্তব করে তাঁরে।

ক্ষীরোদ সাগর সম
শুভ্র যাঁর জ্যোতি
তিনিই ঈশ্বর ভব
সকলের গতি॥

( ১।২ )

অদিতি তনয়—দেব
সহ মুনিবর
মণ্ডল, হলেন ব্রহ্মা
তাহে পুরঃসর।

শিরোদেশে বক্ষা করি
দুই যুক্তপাণি
গুঞ্জারক্ত পদ্মকলি
ব'লি যায় মানি।

পরাজয়—অমঙ্গল
প্রতীকার তরে
উপস্থিত পূত ধাম
ক্ষীরোদ সাগরে।

প্রভু বলি যে হরিকে
প্রণমেন ভব
একাগ্র হৃদয়ে তাঁরে
সবে করে স্তব।

अष्टसंख्यगुणशालिनि यस्मि-
न्नास्ति कश्चन गुणव्यतिषङ्गः ।
तं नमाम भुवनत्रयधारा-
बीजभूतपरमात्मपदार्थम् ॥ ३ ॥

अष्टसंख्यगुणा.—ज्ञानेच्छाप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागाः तैः शालते शोभते तस्मिन्,—'गुणव्यतिषङ्गः' गुणानां सङ्गव्यतीहारः, नहि गुणास्तत्र सजन्ति नापि गुणेषु तस्य सङ्गो वा; (सङ्गः ममामी गुणा इति स्वीयत्वबुद्धिः) इति विरोधः, द्वितीयगुणपदेन सत्त्वादिगुणत्रयग्रहणात् तत्परिहारः; न्यायमते सत्त्वादिगुणत्रयम् अदृष्टविशेषः,–सर्व्वेषामेव शुभाशुभमिश्रादृष्टानां तत्राभावाद् अदृष्टस्य ईश्वरे न व्यतिषङ्गोऽस्ति। 'भुवनत्रयधारा' भुवनत्रयस्य = स्वर्गमर्त्यपातालक्लोकस्य धारा प्रवाहः, अनादिः सृष्टिप्रवाहः, तथापि सर्व्वस्यामेव सृष्टौ भुवनत्रयस्य बीजभूतः परमात्मा तेन सृज्यमानत्वात्। परमात्मपदेन कथमपि जीवात्मा न लभ्यते किन्तु तद्विलक्षणो नित्यज्ञानादिमान् इति पदार्थशब्दोल्लेखो न्यायसिद्धान्तबोधनाय। इमं श्लोकमारभ्य सप्तमश्लोकपर्य्यन्त शिवपदे विष्णुपदो चेकार्यकं निराकारभावे द्वयोरैक्यात् इति ध्येयम् ॥ ३ ॥

( ৩ )

অবিনাশী জ্ঞান ইচ্ছা আদি অষ্টগুণ
যাঁ'তে সদা বিদ্যমান তথাপি নির্গুণ।
সেই পরমাত্মা তাঁরে করি নমস্কার
অনাদি ত্রিলোক-ধারা মূলে স্থিতি যাঁর॥

क्लेशकर्म्मजननादिमलानां
योऽभिमर्शकलुषेण न लिप्तः ।
यो जगद्गुरुतमः प्रणवार्थ-
स्तं नुमः पुरुषभेदममेयम् ॥ ४ ॥

क्लेशकर्म्मजननादीत्यादिपदेन आयुर्भागयोर्वासनानाञ्च ग्रहणम् । सर्व्वेषाम् तेषाम् मलस्वरूपत्व हेयत्वात् । क्लेशा अविद्यादय अविद्यास्मितारागद्वेषाभिनिवेशा । देहादिषु आत्मत्वज्ञानम् अविद्या, ऐश्वर्याद्यभिमान अस्मिता, विषयकामना राग, इष्टविषयव्याघातके प्रतिकूलभावा द्वेष, अभिनिवेशो मरणादिभीति एते पञ्च क्लेशा जीव सन्ति मुक्तौ तदपगमेऽपि पूर्व्वं तत्सत्वात् तै स्पर्शो जात, ईश्वरे तु-तत्स्पर्श कदापि नास्ति, अभिमर्श = स्पर्श —सम्बन्धविशेष । कर्म्म धर्म्माधर्म्माख्यम् जननादि—जन्म आयुर्भोगश्च, धर्म्माधर्म्मफल —तथा वासना संस्कारस्तेषाम् अतीतानागतवर्त्तमानाख्ये कालत्रये येन सम्बन्धो नास्ति, स इत्यर्थ सर्व्वोपदेशकत्वाद् यो जगतामाद्यो गुरु अतएव सर्व्वेषु गुरुषु श्रेष्ठ, गुरुतम, प्रणवप्रतिपाद्यश्च तम् अमेयम् अपरिच्छेद्य पुरुषविशेषं जीवस्वरूपस्य पुरुषेभ्यो भिन्न पुरुष चेतन स्तुम । पातञ्जलमतमिदम् ॥ ४ ॥

( ৪ )

অবিদ্যাদি পঞ্চক্লেশ, কর্ম্ম, তা'র ফল—
এসবের স্পর্শশূন্য শাশ্বত নির্ম্মল।
অপ্রমেয় সর্ব্বগুরু বাচক-প্রণব
পুরুষ। বিশেষ যিনি তাঁ'র করি স্তব ॥

गृह्यसे न मनसा न च वाचा
　　ते त्वयैव परिकल्पितकृत्ये ।
वाचकोऽपि भगवंस्त्वदधीनः
　　कस्तव स्तवविधानविभुः स्यात् ॥ ५ ॥

'न तत्र चक्षुर्गच्छति न वाग्गच्छति न मन.' इति श्रुते', मनसा वाचा वा ग्रहीतु न शक्यसे इत्याह गृह्यस इति प्रथमपादेन । तत्र हेतुमाह —ते इति ते मनोवाचौ, त्वयैव परिकल्पितकृत्ये विषयविशेषपरिग्रह-सामर्थ्यवन्तौ कृते,—तत्तत्कृत्यप्रयोजकशक्तिः मनसि वाचि च त्वयैव दत्ते, त्वदधीने ते त्वा ग्रहीतु कथ प्रभवेतामिति भाव. । न साधनमेव केवल त्वदधीन किन्तु कर्त्तापीत्याह वाचक इति, स्तोता जीव इत्यर्थः, 'एष सर्व्वेश्वरः' इतिश्रुतेः, साधनसामर्थ्यविरहात्कर्त्तुश्च पारतन्त्र्यात् त्वा स्तोतु कः समर्थ इत्याह क इति चतुर्थचरणेन ॥ ५ ॥

( ৫ )

বাক্য-মন-অগোচর তুমি ; বাক্য মন
তোমারি শক্তিতে করে স্বকার্য্য সাধন।
স্তবকর্ত্তা জীব সে-ও অধীন তোমার,
স্তব করিবারে—দেব ! স্বাতন্ত্র্য কাহার ?

वाचि तावककथामृतसङ्गः सर्व्वथैव कथकन्तु पुनीते ।
अंशतः कतकचूर्णकयोगः कुम्भसम्भृतमिवाखिलमम्भः ॥६॥

तत्कथ स्तूयते इत्यत्राह—नायं स्तव.. किन्त वागिन्द्रिये त्वत्कथायाः

सम्बन्धमात्रमिदम्, स हि सम्बन्धः देहेन्द्रियादिसङ्घातावच्छिन्नजीवरूपं कथकं वाचकं सर्व्वथैव वागिन्द्रियमिव तत्-तद्व्यतिरिक्तेन्द्रियबुद्धिदेहादि-सर्व्वावच्छेदेनैव पुनीते । तत्रोपमानमाह अशत इति जलपूर्णकुम्भस्य क्वचिदंशे,—स्वल्पं चूर्णं चूर्णकं कतकस्य 'निर्म्मल' इति प्रसिद्धस्य फलवीजविशेषस्य चूर्णकं तस्य योगः, यथा कुम्भसम्भृतं कुम्भपूरित-मखिलमेव जलं पुनीते स्वच्छं करोति तद्वत् ॥ ६ ॥

( ৬ )

স্তব নহে ; তব কথা, যুটিলে কিঞ্চিৎ
কণ্ঠে,—হয় সর্ব্বদেহে শুচিতা সঞ্চিত।
পূর্ণকুম্ভে এক পাশে 'নির্ম্মল' চূরণে
সব জল যথা স্বচ্ছ হয় তা'র গুণে ॥

**नित्यनिर्गुणनिरञ्जनरूपः**
**स्वानुभावरचिताखिललोकः ।**
**चेष्टसे नट इव प्रतिकल्पं**
**भूमिकां बहुविधामवलम्ब्य ॥ ७ ॥**

ननु तर्हि–निराकार एवेश्वरः स्तूयते न तु शिवो वा विष्णु-र्वेत्याशङ्क्यते चेत् तत्समाधानपरः साकारत्वं स्थापयन् स्तुतिप्रकारमाह नित्येति । नित्यम् अविनाशि निर्गुणं सत्त्वादिगुणरहितं निरञ्जनं निर्लेप रूपं स्वरूपं यस्य तथाविधोऽपि स्वानुभावेन स्वप्रभावेण स्वशक्त्या सृष्टाखिलभुवनः, प्रतिकल्पं कल्पे कल्पे बहुविधां भूमिकां विविधपात्र-

रानुकारम् अवलम्ब्य नट इव शैलूष इव चेष्टसे लीलाभिनयं करोषि। रङ्गभूमौ शैलूषः स्वरूपतोऽन्यः एकोऽपि यथा विविधपात्रवेषम् अवलम्ब्याभिनयति तथा स्वरूपतो निराकार एकोऽपि त्वं विविधाकारान् आश्रित्य लीलां करोषीत्यर्थः ॥ ७ ॥

( ৭ )

নিত্যবোধ নিরাকার তুমি নিরঞ্জন,
আপন প্রভাবে সৃজ নিখিল ভুবন।
রঙ্গমঞ্চে নানাবেশে অভিনেতা মত
প্রতিকল্পে নানারূপে কর লীলা কত।

**मीनकेतनतनुक्षयकर्म्मा-**
**म्नायभृन्मनु-कृपामृतवर्षी ।**
**एकभृङ्गमहिमाहितचित्र-**
**स्त्वं श्रिये भव भवस्थितिहेतुः ॥ ८ ॥**

लीलाप्रकारमाह—मीनेत्यादिभिः । (शिवपक्षे) हे भव शिव, मीनकेतनस्य मदनस्य तनुक्षयः देहदाहः मीनकेतनतनुक्षय कर्म्म यस्य सः मदनदेहदाहकृत् यद्वा मीनकेतना तनुर्दृश्यमूर्त्तिर्यस्य स. मनसिज कामः तस्य क्षयो ध्वंसो यस्मात् तत् कामनाशकमित्यर्थः कर्म्म सेवादिकं यस्य, यस्य सेवाद्यनुष्ठानेन कामक्षयो भवति सः, आम्नायाः पूर्व्वाम्नायादि-नामभिः प्रसिद्धा आगमशास्त्रभेदाः तान् बिभर्त्ति पुष्णाति यः तत्सम्प्रदायप्रवर्त्तकः, मनुभिः मन्त्रैः कृपामृतवर्षी करुणास्वरूप-

ममृत वर्षितु लोकेभ्यः समर्पयितु शीलं यस्य मनवः मन्त्रा एव कृपामृत तद्वर्षी तदुपदेशकः इति वा, आम्नायशास्त्रप्रवर्त्तनेन विविधान् मन्त्रानुपदिश्य लोकान् प्रति करुणामृतमेव त्वया वृष्टमित्यर्थः। एकः अद्वितीयः *शृङ्गमहिमा शृङ्गस्य* प्रभावस्य महिमा महत्त्व यस्य, अथवा एकौ अनन्यसाधारणौ शृङ्गमहिमानौ यस्य सः, अनन्यसाधारणेन प्रभावेण महिम्ना च युक्त इत्यर्थः, हितचित्रः हित धृत चित्र चित्ररूप येन, *कण्ठे नीलरूपस्य करचरणयोः रक्तस्य वपुषि सर्वत्रान्यत्र श्वेतरूपस्य च* सत्त्वात्, स्थितिहेतुः सहत्त्व भाव परित्यज्य रक्षकः सन्, त्व श्रिये सौभाग्याय भव। ( विष्णुपक्षे ) मीनस्य केतन चिह्न मीनकेतनम्। मीनकेतनानि तनुक्षयकर्म्माणि यस्य, यस्य तनुः = शरीर क्षय. = वास. स्थान—जल कर्म्म = जलसञ्चरणादिक तानि मीनभावप्रकाशकानीति मीनस्यैव चिह्नानि एतेन मत्स्यावतार उक्तः; आम्नायभृत् = वेदरक्षक, प्रलयपयोधिजले धृतवानसि वेदमिति जयदेवः, मनुः वैवस्वतमनुः तस्मिन् कृपामृतवर्षी, वैवस्वतमनुमेव क्षुद्रमत्स्यरूपेणात्मानं दर्शयन् क्रमेण सागरप्रमाण स्वशरीरमुपदर्श्य भाविन प्रलय तत्र तद्रक्षणोपायञ्च विष्णुः कृपया कथयामासेति *पुराणवार्त्ता। एकशृङ्ग इति सम्बोधनपदम्, मत्स्यावतारे तस्य एक* शृङ्गमासीत् यत्र निबद्धा नौः सृष्टिबीजवाहिनी जातेति च पुराणम्। महिमाहितचित्र, महिम्ना क्षुद्रक्षुद्रपरिमाणान्यपास्य सद्यःप्राप्तवृहत्परिमाणेन आहितम् अर्पित चित्रम् विस्मयो येन, तथाहि मत्स्यपुराणकथा, तर्पणपात्रे क्षुद्रमत्स्यरूपेण दृष्ट, रक्षाप्रार्थनया कुम्भ मणिकपल्वल सरो-वापी-नदी समुद्रेषु क्रम-वर्द्धमानशरीरः स्थापितो मनुना, तस्य विस्मयमादधाविति। भवस्थितिहेतु. भवस्य ससारस्य भुवनस्येति यावत्

स्थितिहेतुः भगस्य मङ्गलस्य स्थितिहेतुर्वा त्वं श्रिये भव प्रनष्टेन्द्र-लक्ष्मी-समानयनेन संसारं रक्ष इति लक्ष्मीप्रंशेन देवानां यदमङ्गलं दैत्यकर्त्तृक स्वर्गाधिकार पर्य्यन्तम्, लक्ष्मीसमानयनेन तद्-विनाशं कुरु इति वा प्रार्थना ॥ ८ ॥

( ৮ )

হে ভব! সেবায় তব
কার ক্ষয় পায়।
কৃপামৃত মন্ত্রদাতা
রাখো পঞ্চাম্নায়।
মহিমা প্রভাবে
অদ্বিতীয়, চিত্রধর। *
স্থিতি হেতু হ'য়ে তুমি
সৌভাগ্য বিতর॥

( ৮ )

আকারে আচারে দাসে
দীনের লক্ষণ,
মনুপ্রতি কর কৃপা-
অমৃত বর্ষণ।
একশৃঙ্গ! ক্ষণে বৃদ্ধি
তব হেরি সবে।
বিস্মিত, উদ্ধারি দেব-
লক্ষ্মী রাখো ভবে॥

यः परं किल निमीलनकालात्
कूर्म्म इत्यभिहितो मरुदीशः ।
पृष्ठतः प्रकुरुतेऽखिललोकान्
उग्रमोग्र स भवान् वरदोऽस्तु ॥ ९ ॥

(शिवपक्षे) हे उग्र ! निमीलनकालात्परम् उन्मीलने, इत्यर्थः यः, कूर्म्म इति अभिहित. कूर्म्मनामा, य महत् वायुः यत्तदोर्नित्यसम्बन्धात्,

* চিত্র—নানাবর্ণ, ধারণ করিয়া থাক,—কণ্ঠে নীল, হস্ত পদতলে রক্ত এবং দেহের অন্যত্র শুভ্র।

स: इति प्राप्तम्, भवान्,—किल शास्त्रप्रसिद्धौ, निश्चये वा, शास्त्रञ्च 'उन्मीलने स्मृतः कूर्म्मः' इति चक्षुरुन्मीलनकरो वायुः कूर्म्मइति स्मृत इत्यर्थः। उग्राय वायुमूर्त्तये नमः इति तिथितत्त्वधृतं भविष्यपुराणञ्च। हे उत्तम! भवान्लोकान् पृष्ठतः प्रकुरुते प्रकर्षेण पश्चात् कुरुते—सर्व्वेषा लोकाना पुरतो वर्त्तमानत्वादितिभावः। स ईशो भवान् वरदोऽस्तु, वरं ददातु। भवानित्यस्य वाक्यत्रय एव सम्बन्धः। (विष्णुपक्षे) निमीलनकालात् प्रलयकालात् परं यो मरुदीशः देवेश्वरः कूर्म्म इत्यभिहितः सन्लोकान् पृष्ठतः प्रकुरुते कूर्म्मरूपेण पृथिव्यादि लोकान्, पृष्ठे वहति। उत्तमः अग्र इति विष्णोः सम्बोधनपदद्वयम्। तमस उद्गतः, तमः पारे व्यवस्थित इत्यर्थः। यद्वा उद्धृतं तमो येन इति। उभयत्र तमः शब्दोऽज्ञानवाची गुणविशेषवाची वा, द्वितीयार्थे दुःखवाची वा, अग्र हे प्रधान ॥ ६ ॥

| ( ৯ ) | ( ৯ ) |
|---|---|
| চক্ষুরুন্মীলনে হয়<br>যা'র কূর্ম্ম নাম,<br>সেই বায়ু মূর্ত্তি তব<br>গতি অবিরাম।<br>হে উগ্র, পশ্চাতে তব<br>বহে সর্ব্বজীব।<br>উত্তম! ঈশ্বর তুমি<br>নমি তোমা শিব!॥ | লুপ্ত চরাচর মহা-<br>প্রলয়ের পর,<br>সর্ব্বদেবেশ্বর তুমি<br>পৃষ্ঠে বিশ্বস্তর।<br>সেই অবতারে তব<br>হয় কূর্ম্ম নাম।<br>তমোতীত হে প্রধান,<br>তোমারে প্রণাম ॥ |

कोलतामधिगतो भवसिन्धौ
त्वं कुलोकमपि रक्षसि मग्नम् ।
यस्य नाथ दशनाम्बरबद्धं
नाम तेऽमृतपदं त्रिपुरारेः ॥ १० ।

(शिव० पक्षे) हे नाथ ! त्रिपुरारेस्ते तव अमृतपदम् अमृतवस्तु
भूत नाम नामामृतमित्यर्थः यस्य दशनाम्बरे दशनवाससि ओष्ठे बद्ध लग
कुलोकं कुजनमपि भवसिन्धौ भवनद्या मग्न त कोलताम् उडुपत्व
अधिगतः प्राप्तो रक्षसि । भवसिन्धुमग्नः कुजनोऽपि त्वन्नामोच्चारणा
उडुपायमानेन त्वया रक्ष्यते इत्यर्थः । (विष्णुपक्षे) हे नाथ !
अभव ! हे जन्मरहित ! यस्य ते तव नाम त्रिपुरारेः शिवस्य अमृतपद
अमृतमिव पद वस्तु—शिवस्य मृत्युञ्जयत्वे हेतुः, अमृततुल्य प्रिय वा
स त्व कोलतामधिगतः वराहत्व प्राप्तः वराहरूप गृह्णन् सिन्धौ मग्नमा
अन्तर्जलमलक्ष्यमाणावस्थितिकमपि दशनाम्बरबद्ध दशनरूप यदम्ब
तेन बद्ध तस्मिन्बद्ध वा कुलोक पृथिवीं रक्षसि । रक्षणस्यातीतानागत
धारान्तर्गतत्वात् लट् प्रयोगः, एवमन्यत्रापि । प्रसिद्ध हि लोके
मग्नस्योद्धारो वस्त्रबन्ध दत्त्वा क्रियत इति ॥ १० ॥

| ( ১০ ) | ( ১০ ) |
|---|---|
| ত্রিপুরারি তব নাম | প্রলয় সাগরে মগ্ন |
| অমৃত আশ্রয় | ধরা বিশাধার। |
| যা'র ওষ্ঠে রহে | বক্ষে বাঁধি যেন, দন্তে |
| সে যদিও দুষ্ট হয়, | বিঁধিয়া উদ্ধার, |

| | |
|---|---|
| ভব-নদী-মগ্ন-তাবে<br>তবু ভেলা প্রায<br>হ'যে রক্ষা কর,<br>নাথ ! উদ্ধার উপায ॥ | করে'ছ বরাহ রূপী<br>হযে ঘৃণা জীব<br>যে-তোমার নামগুণে<br>মৃত্যুঞ্জয়ী শিব ॥ |

**नारसिंहवपुरार्द्दयदाद्यो-**
**देववर्य्यमतिभक्तिवशो यः ।**
**शारभेण वपुषा परिरक्षा-**
**कारणं तमनघं प्रणमामः ॥ ११ ॥**

( शिवपक्षे ) आद्यः आदौ वर्त्तमानः नित्य इत्यर्थः, यः देववर्य्याणां ब्रह्मादीनामतिभक्त्योर्ज्ञानभक्त्योर्वशीभूतः सन् शारभेण महसा शरभस्याष्टापदहिंस्रश्वापदविशेषस्येदं शारभं यन्महः तेजः तेन नारसिंहवपुरार्द्दयत् नृसिंहशरीरं हिंसितवान् परिरक्षाकारणं जगत्संरक्षणहेतुभूतं तमनघं प्रणमाम ।

*हिरण्यकशिपुवधानन्तरं नृत्यपरायणस्य श्रीनृसिंहस्य पादप्रहा*रेण पृथिव्या रसातलगमनसम्भावनायां ब्रह्मादिदेवगणैः स्तुतो भगवाञ्छिवः शारभदेहमवलम्ब्य नृसिंहवपुर्नाशितवानिति पुराणम् ।

(विष्णुपक्षे) य आद्यः अतिभक्तिवशः अतिभक्ते. (अतिप्रगाढा भक्तिर्यस्य सः प्रह्लादः तस्य ) वशः आयत्तः भक्ताधीनो हि भगवानित्युक्तेः, शारभेण ( शाराय हिंसायै भाति प्रकाशते सुबन्तोपपदभाधातोः कर्त्तरि कः, यद्वा शारस्य हिंसायाः भा प्रकाशो यत्र तत्शारभं तेन ) महसा तेजसा ( उपलक्षणे तृतीया ) उपलक्षितः असुरहन्तृतेजाः

इत्यर्थः नारसिंहवपुः नरसिंहयोरिदं पादादि कटिपर्य्यन्तं नरस्य तदूर्द्ध्वं सिंहस्येत्यर्द्धद्वयेनैक नारसिंहं वपुर्यस्य सः सन् ( आद्यः अदेववर्यम् इत्यकार प्रश्लेषात् ) अदेववर्यं ( अदेवाः असुराः तेषु वर्यम् असुर-प्रधानम् ) हिरण्यकशिपुमित्यर्थः । आर्द्दयत् हिंसितवान् । शारभेण महसा हिंसोपपादकतेजसा आर्द्दयदित्यन्वयो वा ( तृतीया करणे ) सर्व्वशक्तेरीश्वरस्य विविध हि सामर्थ्यं, तत्र हिंसासामर्थ्येन हिरण्यकशिपुं जघानेत्यर्थः ॥ ११ ॥

| ( ১১ ) | ( ১১ ) |
|---|---|
| ব্রহ্মা-আদি সুববব- | প্রহ্লাদেব ভক্তিবশে |
| জ্ঞানভক্তি বশে, | নবসিংহ-বপু |
| ভীষণ শবভ রূপ | হিংস্র তেজ পূর্ণ—ধবি' |
| ধবি অবশেষে। | হিবণ্যকশিপু, |
| নৃসিংহে নিগ্রহ কব | বধিয়াছ, বক্ষা তবে |
| বাখিতে ভুবনে | দেব অধিকাব |
| অনাদি অনব! নমি | হে আত্ম অনঘ, নমি |
| তোমাব চরণে ॥ | চবণে তোমাব ॥ |

दैवतेषु कृपयातिमहत्या
खर्व्वविग्रहजुषा भवता प्राक् ।
यद्व्यधायि बलिदैत्यपुरान्त-
स्तत्कथा हरतु नो दुरितानि ॥ १२ ॥

( शिवपक्षे ) प्राक्पूर्व्वं दैवतेषु देवान्प्रति अतिमहत्या कृपया अखर्व्वविग्रहजुषा ( अतिमहत्या अखर्व्वविग्रहजुषा इति सन्धिः, अखर्व्वं दीर्घं महान्तं विग्रहं युद्धं जुषते सेवते क्विप्प्रत्ययः, तेन ) भवता बलिना बलवता दैत्यानां मयादीनां यानि पुराणि तेषामन्तो नाशो यद् व्यधायि अकारि तत्कथा तद्विधानकथा नः अस्माकं दुरितानि पापानि हरतु। दुःखस्य मूलं पापं तन्नाशे दुःखनाशो भविष्यतीति तत्प्रार्थनम्।

( विष्णुपक्षे ) खर्व्वविग्रहजुषा वामनमूर्तिधारिणा ( विग्रहः शरीरं ) बलिनाम्नो दैत्यस्य पुरान्तः पुरनाशः, तदीयस्वामित्वनाशात् तत्स्वामित्वविशिष्टस्वर्गपुरस्यापि नाशः 'शिखी विनष्टः पुरुषो न नष्टः' इत्यादिवत्, राज्यहरणात् तत् स्वामिकपुरस्य नाशइति तात्पर्यम् यद्वा अन्तशब्दोऽत्र निश्चयवाची—बलिदैत्यस्य पुरान्तः नगरनिश्चयः, रसातलं ते पुरं भविष्यतीति निश्चयः। वामनावतारे असुरराजस्य बलेः राज्यनाशो रसातलप्रेरणं वा भवता कृतम् इति तात्पर्य्यम्। शेषं पूर्व्ववत् ॥ १२ ॥

| ( ১২ ) | ( ১২ ) |
|---|---|
| অমর নিকরে তব<br>করুণা অপার,<br>অন্যের অসাধ্য যুদ্ধ<br>করিয়া স্বীকার।<br>বলিষ্ঠ দৈত্যের—ধ্বংস<br>করেছ ত্রিপুর,<br>সে' আখ্যানে আমাদের<br>পাপ হোক্ দূর ॥ | মহতী করুণা তব<br>দেবগণ প্রতি<br>কারণ, ধারণ করি<br>বামন মূরতি<br>হরণ করিলে বলিরাজ<br>অধিকার<br>সে কাহিনী হরুন<br>মোদের পাপভার ॥ |

य: सहस्रभुजवर्द्धनरक्त-
स्थापितक्षितिभृदर्द्दनलेखः ।
पर्शुपाणिरसमेक्षणभीमः
स प्रसीदतु भरुः करुणाब्धिः ॥ १३ ॥

( शिवपक्षे ) यः सहस्रभुजो बाणः तस्य वर्द्धने अभ्युदय साधने रक्तः अनुरागी, अतएव क्षितिभृदर्दनः—गोत्रभित् इन्द्रः स च लेखाः देवाश्च स्थापिताः स्थिरीकृता येन इन्द्रादयो देवाः बाणासुर वधाय नोद्यम चक्रुरित्युद्यमकरणाभाव एव स्थिरत्वं, देवानां बाणवधाय उद्यमाभावश्च शिवरक्षितोऽयं बाण इति बुद्ध्यैवेति भावः। पर्शुपाणिः परशुहस्तः, परशुमृगवराभीतिहस्तामिति ध्यानमन्त्रात्। असमेक्षण भीमः असमानि त्रीणि ईक्षणानि यस्य सः भीमः भीमशब्दप्रतिपाद्यः। करुणाब्धिः भीमशब्दप्रतिपाद्योऽपि वस्तुतः करुणासागरः सः भरुः शिवः ( भरुः हरिर्हरश्चेत्युणादि कोषे ) प्रसीदतु।

( विष्णुपक्षे ) सहस्रभुजः कार्त्तवीर्यः तस्य वर्द्धनस्य स बाहुसङ्घ-तच्छेदनस्य यद्रक्त रुधिरधारा तेन स्थापितः प्रवर्तितः क्षितिभृता राज्ञा मर्द्दनलेखः हननलिपिर्येन । परशुरामेण एकविंशतिकृत्वो यः क्षत्रियवधः कृतः कार्त्तवीर्यवध एव तत्र प्रथम इति भावः। पर्शुपाणिः भार्गवरामस्य परशुप्रहरणप्रियत्वात् परशुराम इति संज्ञा प्रसिद्धा । कुठारः स्वधितिः पर्शुरितिकोष.। असमेक्षणः ऋषिजनोचितसमदर्शन-रहितः क्षत्रियजातिद्वेषकत्वात् अतएव भीमः भीतिस्थानम्। परशुरामा-वतारे करुणापरिचयाभावेऽपि वस्तुतो यः करुणासागरः स भरुः विष्णुः

प्रसीदतु । यद्वा सहस्रभुजवर्धनइति कर्त्तरिप्रयोगाद् रक्तस्थापितक्षिति-भृदर्द्दनलेशः इत्यनेन तस्य विशेषणकर्म्मधारयः, रक्तैः स्थापिताः स्थितिं प्रापिताः क्षितिभृतामर्द्दनलेशाः हिंसाश्रेण्यो येन, स्यमन्तपञ्चके क्षत्रियरुधिरह्रदपञ्चकसम्पादनेन वधाना पर्यायः प्रदर्शित इतिभावः। शिवपक्षे वृधु वृद्धौ इति भौवादिकवृधधातोर्णिचि ल्युटप्रत्ययाद् विष्णुपक्षे च चुरादिवृधधातोश्छेदनार्थे प्रयोगात् ततो ल्युटप्रत्ययात् वर्द्धन-पदसिद्धिः ॥ १३ ॥

( ১৩ )

বাণাসুর অভ্যুদয়ে
অনুরাগ ভরে
রাখেন সুস্থির যিনি
ইন্দ্রাদি অমরে।
ত্রি-নেত্র পরশু-হস্ত
ভীম সেই হর
প্রসন্নতা প্রাপ্ত হোন্—
করুণা সাগর॥

( ১৩ )

কার্ত্তবীর্য্য কর্ত্তনের
রুধির ধারায়;
ক্ষত্রবধ মুখ-বক্ষ
লিখিলা ধরায়।
ভীষণ পরশুরাম
বিষম দর্শন
যিনি, সে-দয়ালু হরি,
সুপ্রসন্ন হোন॥

सेतुबन्धनकृतावनुभावो
यस्य रावणमदोन्मथनस्य ।
रामनाम भजमानमनार्दिं
तं त्रिलोकशरणं प्रणमाम ॥ १४ ॥

( शिवपक्षे ) रावणमदोन्मथनस्य रावणभुजबलदर्प-नाशकस्य

भुजबलमदात् कैलासोत्पाटनप्रवृत्तेन रावणेन कम्पिते कैलासे भगवता महादेवेन पादाङ्गुष्ठनिपीडनेन कैलासः स्थिरीकृतः रावणोऽपि परिभूतः इति पुराणवार्त्ता। यस्य 'सेतुबन्धनकृतौ' श्रीरामस्य समुद्रसेतुबन्धन कार्य्ये,–'अनुभावः' प्रभावः, येन प्रभावितम् इत्यर्थः रामेश्वर शिव प्रतिष्ठाप्य श्रीरामस्य सेतुबन्धनादिति भावः रामनाम भजमान रामनाम-जपपरायणम् एतेन शिवरामयोरन्योन्याराधनमुक्तमभेदबोधनाय तम् अनादि त्रिलोकशरणम् ईश्वरम् प्रणमाम।

( विष्णुपक्षे ) रावणमदोन्मथनस्य रावणनिहन्तुर्यस्य सेतुबन्धन-कर्म्मणि अनुभाव. प्रभावः, शरपातभीतेन समुद्रेण सेतुबन्धनाय प्रार्थित त्वात् प्रभावो व्यक्त इति भावः अत्रापि कर्त्तरि षष्ठी। 'रामनाम' राम इति सञ्ज्ञा भजमानं प्राप्नुवन्तं तमित्यादि पूर्ववत् ॥ १४ ॥

| ( ১৪ ) | ( ১৪ ) |
|---|---|
| যাঁর বল রাবণের<br>দর্প চূর্ণ করে,<br>যাঁর কৃপা হেতু সেতু-<br>বন্ধন সাগরে।<br>রামনাম ভজনে<br>সতত যাঁর রতি,<br>সেই লোকপাল আগু<br>শিবে করি নতি॥ | অজেয় রাবণ বধ<br>ঘোষে যাঁর যশ,<br>সেতুবন্ধ সহে সিন্ধু<br>যাঁর শরে বশ।<br>'রাম' এই মাত্র নাম<br>যাঁহারে বুঝায়,<br>অনাদি ভুবন ত্রাণ<br>নমি তাঁর পায়॥ |

तालयोगकृतलक्षणहाला-
मुख्यवृत्तिहलसंहितवर्णम् ।
रौहिणेयपदभाजमनन्त त्वां
तुषारधवलं प्रणमामः ॥ १५ ॥

( *शिवपक्षे* ) हे *अनन्त ! अन्तरहित मृत्युञ्जय इत्यर्थः ताल योगकृतलक्षणः तालशब्दस्य यो योगः अवयववृत्तिः तेन कृतलक्षणः* अनुमापितः, तालशब्दस्य अवयवस्ताइति ल इति च शब्दद्वयं तत्र ता शब्दः शिवताण्डवपरः ल शब्दः पार्व्वतीलास्यपरः, तथा च तालशब्दावयवो यत्पुरुषसम्बन्धि नृत्यबोधकः स शिव इति शिवस्य लक्षण भवति, यद्वा ताशब्दलशब्दयोर्योगः मिलन तेन कृतं सम्पादित लक्षण ज्ञापक यस्य सः, तदुभयशब्दयोगात् ताल शब्दस्योत्पत्तिः तत्प्रतिपाद्यस्य हरगौरी नृत्यक्रियापरिच्छेदरूपतया प्रादुर्भावात् हरसम्बन्धित्वेन एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति नियमेन हरविषयक स्मरणात्मकज्ञान भवति एव ज्ञापकत्व तालयोगस्य भवतीति । तालयोगकृतलक्षणश्चासौ हालामुख्यवृत्तिहलसहितवर्णश्चेति कर्मधारयः, हालामुख्या 'हाला' शब्दप्रधाना वृत्तिः स्थितिर्यस्य स 'हल.' हलशब्दो यस्मिन् सप्तम्यर्थो वाच्यत्वसम्बन्धेन वृत्तित्वं तेन हालाहलशब्दो यदर्थवाचक इति फलितम्, हालाहल विषविशेषः तेन सहितः योजितो वर्णोयस्य, कण्ठेकालत्व ततएव यस्य जात सः त रौहिणेयो वृषस्तत्र पदभाज स्थानभागिनम् वृषारूढ तुषारधवल त्वा प्रणमाम ।

( विष्णुपक्षे ) हे अनन्त शेषावतार, वलरामो हि श्रीविष्णोः,

शेषरूपधराशस्यावतार इति पुराणम्। तालयोगकृतलक्षणः तालस्य योगेन ध्वजसम्बन्धेन कृतं लक्षणं चिह्नं यस्य स तालाङ्क इत्यर्थः। हालायाः मद्यस्य मुख्यवृत्तिः मुखमदो व्यवहारः पानमित्यर्थः हल लाङ्गल मायुध ताभ्यां सहितो मिलितो वर्णो वर्णनं यस्य—हालापानेन हलायुधधत्वेन च यस्य वर्णनं पुराणप्रसिद्धम्। रौहिणेय पदभाज रोहिणीनन्दनत्वेन रौहिणेय पदप्रतिपादितम्। अन्यत् पूर्ववत्॥ १५॥

| ( ১৫ ) | ( ১৫ ) |
|---|---|
| তালের উৎপত্তি হেতু | রথ-ধ্বজে তাল চিহ্ন |
| যিনি, হলাহল | মদিরা গ্রহণ— |
| পানে যাঁর শুভ্র দেহে | লাঙ্গল আয়ুধ বলি' |
| কণ্ঠ নীল হ'ল। | যাঁহার বর্ণন। |
| বাহন বৃষভ যাঁর | অনন্তের অবতার |
| মৃত্যুঞ্জয় নাম | রৌহিণেয় নাম |
| সেই হিম-গৌর | তুষার ধবল কান্তি |
| শিবে মোদের প্রণাম॥ | তাঁহাকে প্রণাম॥ |

वासवमुखदेवविजेता
येऽजयद्व विधिमपीपुनिपातात्।
तस्य निग्रहकरः कुसुमेषोः
सर्व्ववित्स भगवान् शरणं नः॥ १६॥

( शिवपक्षे ) वासवप्रभृतिदेवाना इन्द्रचन्द्रादिदेवाना विजेता

इन्द्रस्याहल्याहरणं चन्द्रस्य गुरुदारागमनञ्च कामकर्त्तृकपराजयलक्षणम् , यः ( कुसुमेषुः ) इषु निपातात् = इषुनिपात इषुक्षेपं विधाय ल्यप् लोपे पञ्चमी विधिमपि ब्रह्माणमपि अजयत् । सर्व्ववित् सर्व्वज्ञः—कृशानुरेताः सर्व्वज्ञ इत्यमरः। यद्यपि मीनकेतनेत्यादि श्लोके मदननिग्रह उक्तस्तथापि तत्र तनुक्षयरूपकर्मत्वेन, अत्र च निग्रहत्वेनेतिभेदात् पृथगुक्तिः वस्तुतः मीनकेतनेत्यादिश्लोकाशस्य यद्वेत्यनेन व्याख्यान्तरप्रतिपादनान्न पुनरुक्तयाशङ्कतिध्येयम् ।

( विष्णुपक्षे ) बुद्धदेवेन मारो जित इति तस्य 'मारजित्' इत्यपि नाम, तस्य सर्व्वज्ञ इति भगवान् इति च नामद्वयम् 'सर्व्वज्ञः सुगतोबुद्धो धर्म्मराजस्तथागतः समस्तभद्रो भगवान् इत्यमरोक्तेः । अर्थस्तु पूर्व्ववत् ॥ १६ ॥

| ( ১৬ ) | ( ১৬ ) |
|---|---|
| ইন্দ্র চন্দ্র দেব গণে<br>কবি পরাজয়,<br>সাহসে ব্রহ্মারে হানি'<br>শর, জয়ী হয়।<br>যাঁহার দৃষ্টিতে দগ্ধ<br>সেই পুষ্প বাণ<br>মো'দের শরণ—<br>সেই শিব ভগবান॥ | ইন্দ্র আদি দেবজয়ে<br>হ'য়ে মত্ত মদে<br>শরাঘাতে ব্রহ্মাকেও<br>ফেলিল বিপদে।<br>হারিল যাঁহার কাছে<br>এ হেন মদন।<br>সেই ভগবান বুদ্ধ<br>মোদের শরণ॥ |

यो हि विष्णुयशसः सुमतेश्च
प्रेक्ष्यमूर्त्तिरजनिक्षयहेतुः।
दुर्द्धियां कलिभुवां स गतिस्त्वं
स्तुत्यवाह शितशस्त्र नमस्ते ॥ १७ ॥

( शिवपक्षे ) हि प्रसिद्धौ अवधारणे वा विष्णु शुद्धं यशो यस्य सः विष्णुयशाः शुद्धकीर्त्तिः तस्य, विष्णुशब्दस्यात्र शुद्धवाचकत्वात् ; सुमतिः सद्बुद्धिसम्पन्नः तस्य च ; कर्म्म ज्ञानञ्च यस्य प्रकृष्ट तस्येत्यर्थ. कर्त्तरि षष्ठी यः प्रेक्ष्यमूर्त्तिः दृश्यरूप., 'अजनिक्षयहेतुः—जनिक्षययोः जन्ममरणयोर्हेतुः अदृष्टमित्यर्थः नास्ति यस्य, सः, अदृष्टरूपकारण-विरहेण उत्पत्तिरहितो विनाशरहितश्चेत्यर्थः । कलिभुवां कलहहेतु-भूताना दुर्द्धिया दक्षप्रभृतीनाम् सः त्वमेव गतिः उद्धर्त्ता हे स्तुत्यवाह ! स्तवनीय-वाहो 'वाहुभ्यामुत ते नमः' इति श्रुतेः हे शितशस्त्र ! तीक्ष्णशस्त्रपाणे ! स्तुत्येति शस्त्रान्तमेकपद वा शस्त्रस्यापि स्तुत्यत्वात्, ते तुभ्यं नमः।

( विष्णुपक्षे ) विष्णुयशाः पिता, माता च सुमतिनाम्नी ताभ्या विष्णुयशसः सुमतेश्चेत्यत्र पञ्चम्येकवचनम् अजनीतिक्रिययान्वितम्, प्रेक्ष्यमूर्त्तिः अभिव्यक्तमूर्त्ति. अजनि प्रादुर्भूतः, न तु वस्तुतो जातः, पूर्व्वकल्पाभिप्रायेणातीतप्रयोग.। कलिभुवा कलियुगोत्पन्नाना दुर्द्धिया धर्म्म-विरुद्धबुद्धीना क्षयहेतुः-विनाशकः स. त्व गतिः निस्तारोपायः, हे स्तुत्य-वाह ! प्रशस्ताश्वारूढ ! हे शितशस्त्र ! करालकरवाल ! कल्किरूपधरस्य वाहनमायुधञ्चानेन वर्णितम् कल्किरूपिन् इति तात्पर्यम्, नमस्ते ॥१७॥

( ১৭ )

শুভ্রযশা সুমতির
দৃষ্টিগম্য যিনি
যাঁর জন্ম-মৃত্যু হেতু
নাহিক কথনি।
কলহ-উৎপত্তি হেতু—
দুর্ম্মতির গতি
হে সুবাহু শূলপাণি
তোমারে প্রণতি॥

( ১৭ )

বিষ্ণুযশা সুমতির
পুত্রভাবে তব
দৃশ্যরূপ; বলিবালে
যাদের উদ্ভব
সেইসব ধর্ম্মহীনে
নাশো তীক্ষ্ণ ধার—
খড়্গে; অশ্বারূঢ় কল্কী!
তোমা' নমস্কার॥

देव कंसविकृतिं यदवेत्य
न्यग्रहीस्तमसुभिः क्षममेतत्।
इत्युमाधव परन्तु विचित्रं
प्राप मृत्युममृताद्द यदधन्यः॥ १८॥

( शिवपक्षे ) हे देव, क दक्षं सविकृतिं विकृत्या ब्राह्मण-प्रकृतिविपरीतभावेन मदेन, ईश्वरं प्रति विद्वेषरूपेण विकारेण वा सहितम् अवेत्य असुभि: प्राणै: प्राणावच्छेदेन यत् तम् दक्षम् न्यग्रही: निगृहीतवानसि प्राणदण्डं नीतवानसीत्यर्थः, एतत् क्षमम् युक्त, हे उमाधव उमापते, इति तु पर विचित्रम् अतीव विस्मयावह यद् अधन्यः पुण्यहीन· दक्षः अमृतात् मृत्युं प्राप मृत्युहरणात् मृत्युप्राप्तिर्विस्मयावहैव शिवस्य मृत्युञ्जयत्वात् मोक्षस्वरूपत्वाच्च अमृतत्वम्। अथ च

अमृत सुधा, तेनामरत्व जायते ननु मृत्युरिति विस्मय । दत्तस्याधन्य त्वमेव व्यतिक्रमेऽस्मिन् हेतुरिति भाव ।

( विष्णुपक्षे ) कसविकृति कसस्य विकार पित्रादिषु पुत्रादीना यत् कर्त्तव्य तदन्यथाकारम् अथवा धनुयज्ञस्थाने रामकृष्णवधोद्योगरूपा विकृतिम् अवेत्य त कसम् असुभिर्न्यग्रहीरित्यादिक पूर्ववत्। सम्बोधन तु ह भो माधवेति विशेष । अधन्य कस । कृष्णावतार-स्तुतिरियम् ॥ १८ ॥

| ( ১৮ ) | ( ১৮ ) |
|---|---|
| দক্ষের দুর্মতি হেরি | কংসের অকার্য্য দেখি |
| প্রাণদণ্ড তা'র | তার প্রাণবধ |
| উচিত করে'ছ, ইহা | করেছ, উচিত ইহা— |
| নহে অবিচার। | নহে দোষাস্পদ। |
| আশ্চর্য্য ইহাই কিন্তু,— | বিস্ময় বিষয় এই— |
| সেই ভাগ্যহীন | সে অভাগ্যধর |
| অমৃত হ'তেও হ'ল | মৃত্যুহর করে হয় |
| মৃত্যুর অধীন॥ | মৃত্যুর গোচর॥ |

अर्जुनेन मिलितो रणशीर्षे
तत्त्वमात्मविषयं परमुक्त्वा ।
अस्त्रयोगमुपदिश्य च तस्मै
भक्तपाण्डवशुभ व्यदधास्त्वम् ॥ १९ ॥

(शिवपक्षे) त्व रणशीर्षे युद्धाग्रस्थाने अर्जुनेन मिलित पशुपति-

पश्चभावेन किरातरूपमास्थाय सङ्गतः, परं पश्चात् आत्मविषयं स्वविषयकं तत्त्वं यथाभूतमर्थमुक्त्वा स्वस्य वास्तवपरिचयं दत्त्वा अस्त्रयोगं पाशुपतास्त्रविद्याम् उपदिश्य भक्तानां पाण्डवानां शुभं व्यदधाः, अकार्षीः ।

( विष्णुपक्षे ) रणशीर्षे कुरुक्षेत्रयुद्धाग्रभूमौ अर्जुनेन मिलितः एकरथे स्थितः, आत्मविषयं परं प्रकृष्टं तत्त्वम् 'नायं हन्ति न हन्यते' 'अचलोऽयं सनातनः' इत्यादिरूपमुक्त्वा— 'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत' इत्यादिना—अस्त्रयोगम् अस्त्रप्रयोगम् युद्धम् उपदिश्य अथवा भीष्मादिवधकाले यथास्त्रप्रयोगः कर्त्तव्यस्त-दुपदिश्य । अन्यत् पूर्व्ववत् । श्रीकृष्णस्य पार्थसारथिरूपस्य स्तुतिः ॥ १६ ॥

( ১৯ )

প্রথমে অর্জ্জুন-সনে
দ্বন্দ্বযুদ্ধে রত
কিরাতের রূপে ; পরে
আত্ম-প্রকাশিত ।
পাশুপত অস্ত্রযোগ
করি উপদেশ,
ভক্ত পাণ্ডবের শুভ
সাধিলে বিশেষ ॥

( ১৯ )

রণারম্ভে রথে রহি
অর্জ্জুনের সহ ;
যুদ্ধে অনিচ্ছায় তাঁ'র,
আত্মতত্ত্ব কহ ।
অস্ত্র ধরিবারে
তা'র করি বুদ্ধি দান
সাধিয়াছ সেই ভক্ত
পাণ্ডব কল্যাণ ॥

लोकरक्षणपरानवतारान्
अभ्युपैपि करुणामृतसिन्धुः ।
सागसश्च तनयानिव तातः
श्रेयसे तनुभृतो ननु शास्सि ॥ २० ॥

( शिवपक्षे ) करुणामृतसिन्धुस्त्वं लोकरक्षणं पापक्लिष्टमतमाश्रित्य लोकाः निरये पतन्तीति तेषां रक्षया योगोपदेशेन ततो निवर्त्त्य सद्गति-प्रापणं तत्परान् तस्मिन् कर्म्मणि रतान् अवतारान् श्वेतादीन्, योगा-चार्य्यावतारान्—अभ्युपैपि स्वीकरोषि येष्वन्यतमः सोमशर्म्मा अक्षपादा-दीश्चतुरः शिष्यानुपदिदेश इति कूर्म्मपुराणम् । च = किञ्च अथ यद् दक्षादीन् दण्डितवानसि तदपि लोकरक्षणमेवेत्याह सागस इत्युत्तरार्द्धेन, सागसः आगसा अपराधेन सह वर्त्तमानान् तनयान् पुत्रान् तातः पितेव त्व सागसः तनुभृतो देहिनः श्रेयसे मङ्गलाय अथ च मोक्षाय शास्सि दण्डयसि ननु इत्यनुनये । अशासने तेषां नरकपातः, शासने तु पापक्षयात् चित्तशुद्धिद्वारकत्वादात्मतत्त्वज्ञानान्मोक्षः परिणाम इतिभावः ।

( विष्णुपक्षे ) मत्स्यादिरूपा उक्ता अवताराः ते सर्व्वे एव लोकरक्षणपराः, लोकस्य विश्वस्य लोकानां जनानाञ्च रक्षणपराः, पालनरताः तान् अभ्युपैषि गृह्णासि । तत्प्रकारश्च भगवद्गीतायां स्वयमेवोक्तः 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति । विनाशम् च दुष्कृतामित्यस्य विवरणमाह—सागस इति इदानीं देवानां यो

निग्रहः सोऽपि त्वत्प्रदत्त एव दण्डः, एतेन, दण्डेनैव श्रेयो भविष्यतीति भावः ॥ २० ॥

| ( २० ) | ( २० ) |
|---|---|
| যোগজ্ঞানে লোক রক্ষা<br>করিতে,—বীবার<br>কর কৃপামৃত-সিন্ধু<br>কত অবতার।<br>অপরাধী পুত্রে যথা<br>পিতা শুভ তবে।<br>দণ্ডে' তথা দণ্ড দেও<br>তুমি দোষী নবে॥ | অধর্ম্ম নিবারি ধর্ম্মে<br>লোক রক্ষা কর<br>কত অবতার তব<br>করুণা-সাগর।<br>অপরাধী জনে শাস্তি<br>দা'ও শুভ তরে<br>শাসন পুত্রের দোষে<br>পিতা যথা করে॥ |

यो भवानुदधिमन्थनजातं
कालकूटमुपगृह्य महोग्रम् ।
दैवतैः स्तुतपदोऽमृतमेव
द्रागभक्षयदवन् जगदेतत् ॥ २१ ॥

य इत्यस्योत्तरश्लोकस्थेन समित्यनेनान्वयः पद्यद्वये समानः । अतएव एतत् श्लोकद्वय युग्मकमिति वक्ष्यते। ( शिवपक्षे ) उदधिमन्थनजात महोग्रम् अतिदारुण कालकूटम् अमृतमेव अमृतवत् एवकारः सादृश्ये इति भरतोक्तेः द्राग् झटिति यो भवान् अभक्षयत् अभुङ्क्त चुरादिगणीय-भक्षधातो रूपमिदम्। दैवतैः स्तुतपदः देवैः स्तुतचरणः स्तुतरक्षणशक्तिर्वा

पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरोक्तेः। कथं कालकूटं भक्षितवान् तदाह अवन् जगदेतत् एतत् जगत् भुवनम् अवन् रक्षन्। हेत्वर्थे शतृप्रत्ययः।

( विष्णुपक्षे ) स्तुतचरणः स्तुतस्थानो वा यस्य चरणारविन्दं वैकुण्ठनामस्थानं वा स्तुतं सर्वैरेवेति द्योतनाय कर्त्तृपदं नोपात्तम्। एतद् जगत् अवन् रक्षन् असुराधिकारेणानर्थमङ्गलं माभूदित्येतदुपाय-सम्पादनेन पालयन् यो भवान् कालस्य कूटं कालसम्बन्धि कपटं महोग्रं महः-प्रधानम् उत्सवप्रधानं यथा स्यात् तथा उपगृह्य आलम्ब्य द्राक् झटिति देवतैः देवैरेव उदधिमन्थनजातं सागरमन्थनसम्भूतम् अमृतम्, अभक्षयत् अपाययत् तमित्युत्तरश्लोकस्थतत्पदार्थेन यत्पदार्थस्यान्वयः। सकारान्तमहःशब्दोऽपि उत्सवावाचकः, महः अग्रं प्रधानं यस्मिन् कर्म्मणि, मोहिनीरूपस्य विष्णोः कालात्ययकपटावलम्बनमपि देवासुराणामुत्सवप्रधानमभूत्। वृत्तान्तविदां देवानामुत्सवोऽमृतपानमस्माकमेव भविष्यतीत्यानन्दजनितः, मोहिनी अमृतं परिवेष्य स्वयमस्मान् पाययिष्यतीति तद्रूपहृतचित्तानामसुराणाञ्चोत्सव इति भावः। अभक्षयदिति भक्षणार्थत्वाभावादिकभक्षधातोः प्रयोजकणिजन्तप्रयोगः। अतो न प्रयोज्यकर्त्तुः कर्म्मत्वम्। हिंसार्थकभक्षधातोरेव तथाविधानात्। मिलितैर्देवासुरैर्मथितात् समुद्रादुत्पन्नेऽमृते बलादसुरैर्जिहीर्षिते विष्णुरसुरान् वञ्चयितुं मोहिनीरूपेण प्रादुर्भूतः, तद्रूपमवलोक्य सर्वेषां हृदयं तद्गतमभूत्, तया च श्लक्ष्णया वाचा कथितमलं व्यतिक्रमेण कृतशौचाचमना भोक्तुमुपविशथ पङ्क्तिक्रमेणाहममृतं परिवेक्ष्यामीति निशम्य तत्त्वमनवबुध्यमानैरसुरैः सानन्दमेव तत् स्वीकृतम् एवं पङ्क्तिभेदेनोपविष्टेषु देवासुरेषु

रूपमोहितानसुरान् वञ्चयितुकामो मोहिनीवपुर्व्विष्णु प्रथम देवपङ्क्तौ पर्यविवत् मोहिन्यपेक्षया सोढमसुरैर्देवपङ्क्तौ परिवेषणप्राथम्य पश्चादपरिवेषणेन चासुरा वञ्चिता मोहिनीरूपेण विष्णुनेति पुराणवार्त्ता। एवञ्चासुराणाममृतहरणकालश्चाधा देवपङ्क्तौ च परिवेषणप्राथम्यमिति द्विविध कालमादाय कपट कालकूटशब्दार्थ. पौराणिकोपाख्यान-मूलक इति बोध्यम् ॥ २१ ॥

( ২১ )

... কালকূট যবে
সমুদ্র মন্থনে
মহা উগ্র বিষ তাহা
দহিবে ভুবনে।
ও পদ বন্দিলা
দেবগণ নিরুপায়,
রাখিলে জগত
সুধাসম পি'যে তায়॥

( ২১ )

উৎসব প্রধান ভাবে
সময় ক্ষেপণ—
কপট আশ্রয়ে করি
হে স্তুতচরণ,
সমুদ্র-মন্থন ফলে
উত্থিত অমৃত
পান করাইলে দেবে,
অসুর বঞ্চিত॥

तं कृपामृतनिधिं परमेशं
क्षीरसागरविरोचनकायम्।
श्रीगृहीतचरणाम्बुजयुग्मं
भोगिसेविततनुं प्रणमामः ॥ २२ ॥
युग्मकम् ॥

( शिवपक्षे ) परमेश महेश्वर क्षीरसागरविरोचनभासम् = क्षीर-सागरसदृशसुन्दरद्युतिधर क्षीरसागरश्च विरोचनश्च तयोर्भा इव भा यस्येति वा, विरोचनश्चन्द्रः । अतिशुभ्रवर्णमित्युभयत्रैवार्थः । श्रीगृहीतेति श्रिया शोभया गृहीत सेवित चरणाम्बुजयुग्म यस्य, तम् । मदीयपादपद्मद्वय कस्यामप्यवस्थायां शोभा न परित्यजति तमित्यर्थः यद्वा गृहीतमिति, भावे निष्ठा ग्रहणमित्यर्थः, श्रियः त्रिवर्गसम्पदः गृहीत ग्रहण यस्मात् तत् त्रिवर्गसम्पत्प्रदमित्यर्थः, चरणाम्बुजयुग्म यस्य तम् । श्रीशब्दस्य त्रिवर्गसम्पद्वाचकत्व व्याडिवचनादवगम्यते । भोगिभिः भुजङ्गैः सेविततनुम् आश्रितदेहम्, सर्पभूषितकण्ठकरादिक-मित्यर्थः ।

( विष्णुपक्षे ) परमाणाम् उत्कृष्टाना ब्रह्मादीना यद्वा परा श्रेष्ठा मा ज्ञान येषा ते ब्रह्मशिवादयः तेषामीश नियन्तार विरोचयतीति विरोचनः, विशेषेण रुचिमन्तं कुर्वन्नित्यर्थः, रुचिर्दीप्तिः, क्षीरसागरस्य विरोचनी क्षीरसागर दीप्तिमन्त कुर्वती भाः - दीप्तिर्यस्य, यस्य दीप्त्या अधिष्ठानभूतः क्षीरसागरो दीप्तिमान् भवति तम् इत्यर्थः । श्रिया लक्ष्म्या गृहीत सवाहनाय क्रोडे स्थापित चरणाम्बुजयुग्म यस्य । पूर्वकल्पलीलामनुसृत्योक्तिरियम् । यद्वा श्रिया लक्ष्म्याः सागरप्रविष्टाया इत्यर्थाक्षिप्तम्, गृहीत ग्रहण प्राप्तिरिति यावत् यस्मात् तत् श्रीगृहीत चरणाम्बुजयुग्म यस्य, एतत्पा-दपद्मप्रसादेन लक्ष्मीलाभो भवतीत्यभिप्रेत्य विशेषणमिदम् । भोगिसेविततनु भोगिना अनन्तनागेन सेविततनु शय्यारूपतामाश्रित्य परिचरितशरीरम् ॥ २२ ॥

| ( ২২ ) | ( ২২ ) |
|---|---|
| সেই তুমি মহেশ্বর | করুণা-অমৃত নিধি |
| করুণা সাগর . | শ্রীশ পরাৎপর |
| ক্ষীরোদ ও চন্দ্রসম | তব তনু সঙ্গে দীপ্ত |
| গৌর কলেবর । | ক্ষীরোদ সাগর । |
| কিবা শোভা পাদপদ্ম | লক্ষ্মীদেবী পাদপদ্ম |
| যুগলে তোমার | সেবে অবিরাম |
| ভুজঙ্গ-ভূষিত তনু | শয়নে অনন্তনাগ;— |
| লহ নমস্কার ॥ | তোমারে প্রণাম ॥ |

मोहिनीतनुमुपेत्य परेश
व्यभ्रमो यदयमात्मविलासः ।
मारदर्पहमहापुरुषस्य स्त्री-
रुचिः कथमिवेतरथा स्यात् ॥ २३ ॥

( शिवपक्षे ) हे परेश, हे पर सर्वतः श्रेष्ठ, हे ईश, मोहिन्याः अमृतपरिवेषणसमये गृहीतस्त्री मूर्त्तिविशेषावच्छिन्नविष्णोः तनुं स्त्रीमूर्त्तिमुपेत्य प्राप्य यद् व्यभ्रमः विभ्रान्तवान्—चलितवान्, कामोन्मत्तस्तामनुसृतवान् असि, भ्रम प्राप्तवान् असि इति वा, भ्रमस्तु इयं काचित् सर्वाधिकसुन्दरी नारीत्याकारकः; विष्णोर्माया सा इति तु तत्त्वम् । अयम् = आत्मविलासः आत्मनः स्वस्यैव विलासः लीलाविशेषः, इतरथा अन्यथा, मारदर्प हतवतः कामविजयिनो महापुरुषस्य ईश्वरस्य ते स्त्रीरुचिः स्त्रियामभिलाषः कथं स्यात् । मारदर्पं हतवान् इतिभूते

किमपि मारदर्पहा । पूर्व्वकल्पवृत्तान्ताभिप्रायेणेदम् । यद्वा शुद्धात्मत्वात् कामादिसम्बन्धाभावादियमुक्तिः । ईश्वरस्य पुरुषविशेषत्वेन योगसूत्रोक्तेः महापुरुष इति ।

( विष्णुपक्षे ) हे परेश ! पराणां ब्रह्मादीनामीश, मोहिनीति मोहिन्यवतारम् उपेत्य स्वीकृत्य यद् व्यभ्रमः विभ्रम स्त्रीणां विलासविशेष प्राप्तवानसि अयमात्मविलासः । इतरथा सौन्दर्येण कामदर्पहृतवतः पुरुषोत्तमस्य ते स्त्रीरुचिः स्त्रियाः कान्तिः कथं स्यात् इत्यर्थः ॥ २३ ॥

( ২৩ )
মহেশ্বর, মোহিনীরে
দরশন করি—
ঘুরেছিলে পাছে পাছে
লীলা এ তোমারি।
মদন বিজয়ী মহা-
পুরুষ-তোমার
নতুবা কি হ'তে পারে
স্ত্রী-ইচ্ছা বিকার ?

( ২৩ )
হে নাথ, মোহিনী-
রূপে বিভ্রম প্রকাশ
তোমার এ স্বেচ্ছাকৃত
লীলারই বিলাস
নতুবা পুরুষোত্তম
মদনমোহন
স্ত্রীলোকের কান্তি কেন
করিবে গ্রহণ॥

नीलकण्ठविहितार्चनविष्णो
पूर्व्वकल्पसमलील भवेऽस्मिन् ।
शिष्टपालनमशिष्टनिकारं
त्वं करिष्यसि करोष्यकुधाश्च ॥ २४ ॥

( शिवपक्षे ) हे विहिताच्चर्चन-विष्णो, विहित कृतमर्च्चनं येन स विष्णुर्यस्य, विष्णुना यस्य अर्च्चनं कृत स, महाभारतादौ 'हरिस्ते साहस्र कमलबलिमाधाय पदयो' इत्यादि महिम्न. स्तोत्र च शिवपूजनस्य विष्णुकृतत्वे प्रमाणम्। तत्सम्बोधने। हे नीलकण्ठ। हे पूर्व्वकल्प-समलील,–एतेन पूर्व्वकल्पे या या लीला कृता कल्पान्तरेऽपि तादृगेव लीला क्रियते, इत्युक्तम्। अतएव मदनदहनादेस्तत्कल्प तदानामकृतत्वेऽपि नासङ्गति। अस्मिन् भवे वर्त्तमाने कल्पे।' शिष्टपालन साधूना रक्षणम् अशिष्टाना निकार निग्रह करोषि, करिष्यसि, अकृथाश्च, अस्मिन् कल्पेऽपि वर्त्तमानकाले भविष्यति काले अतीते च काले सथाचरणं ते युक्तमेव। अतएव दक्षादीना निग्रह कृत इति भाव।

( विष्णुपक्षे ) हे नीलकण्ठ विहिताच्चर्चन, नीलकण्ठेन शिवेन विहितम् अर्च्चनं पूजन यस्य स, श्रीमद्भागवते नृसिंहावतारादौ शिवस्तुत्यादिक श्रीरामनामभञ्जनपक्ष तत्र प्रमाणम्। हे विष्णो। पूर्व्वकल्पसमलील, इत्यनेन पूर्व्वकल्पे देवानामेवविपदि यत् त्वया कृत तत्करणीयमिति प्रार्थनाया बीजमुपदर्शितम्। अन्यत्समानम्॥२४॥

| ( ২৪ ) | ( ২৪ ) |
|---|---|
| হে বিষ্ণুপূজিত নীল<br>কণ্ঠ মহেশ্বর,<br>পূর্ব্বকল্প সম লীলা<br>এ কল্পেও কর। | হে শিবপূজিত বিষ্ণু,<br>অবতার সব<br>পূর্ব্বকল্প মত<br>এ কল্পেও লীলা তব। |

| | |
|---|---|
| শিষ্টের পালন আর | দুষ্টে দণ্ড আর শিষ্টে |
| দুষ্টের নিগ্রহ | রক্ষণ বিধান |
| করিবে করিছ | ভবিষ্যৎ বর্ত্তমান |
| করিয়াছ কৃপামহ॥ | অতীতে সমান॥ |

कालरूप ऋतुलिङ्गविशेषान्
सन्दधासि सदृशान् प्रतिवर्षम्।
भूतकल्पचरितं तदधीय-
न्नद्य भावय भवेश विधेयम्॥ २५॥

( शिवपक्षे ) पूर्व्वकल्पसमलीलेत्यनेन यद् विवक्षितं तत्स्फुटयति, हे कालरूप! कालस्वरूप, त्वमेव यथा प्रतिवत्सरं ऋतुभेदेन फल-पुष्पविशेषसम्पत्तिप्रभृतिलक्षणं चिह्नं दधासि, प्रतिवर्षमेव वसन्तः चूतमञ्जरीबकुलमल्लिकाप्रभृतिकुसुमादिकं दधाति, एवं ग्रीष्मादय ऋतवोऽपि, न ह्यस्य वर्षभेदेन व्यतिक्रमो भवति। तथा कल्पभेदेऽपि तवास्य लीलाया व्यतिक्रमो न भवितुमर्हति। तस्मात् पूर्व्वकल्पे दक्षयज्ञकाले यत्कृतं तदेवाद्य विधेयमिति प्रार्थना। तेन दक्षजीवनादिकं दीयतामिति प्रार्थनं गम्यते। अधीयन् स्मरन्, भावय सम्पादय। हे भव, हे ईश! इति पदद्वयम्।

(विष्णुपक्षे) पूर्व्वकल्पेत्यादिकं तुल्यार्थकप्रायम्, विशेषस्तु पूर्व्वकल्पे इन्द्रं प्रति दुर्व्वासः शापे, एवमेव वृत्तमभूत् तत्र भवता यत् कृतं सम्प्रति तत्स्मृत्वा कर्त्तव्यं साधयेति प्रार्थना बोध्या। अत्र पक्षे भवेश इत्येकं पदम् भवस्य संसारस्य शिवस्य वा ईशः प्रभुः, नियन्ता, तत्सम्बोधने॥२५॥

( ২৫ )

দেব কালরূপ, প্রতিবর্ষে ঋতু ছয়
ধর চির সমভাবে ভিন্ন চিহ্নময়।
তেমতি অতীত কল্প করিয়া স্মরণ
যাহাই বিধেয় তাহা কর আচরণ॥

नाम नाम तव कामदमद्धा
नामरूपरहितस्य परेश ।
त्वमद्भुतविलासविशेषः
शोभते त्वयि परं न परस्मिन् ॥ २६ ॥

( शिवपक्षे ) हे पर, हे ईश ! अद्धा तत्त्वतः नामरूपरहितस्य, वस्तुतः नेति नेत्यनेन श्रुतिबोधिततया सञ्ज्ञाविशेषेण रूपविशेषेण च वर्जितस्य तव नाम शिवनाम कामदम् अभीष्टसाधकं नाम प्रसिद्धम् इति अद्भुतः विस्मयावहः विलासविशेषः लीलाभेदः प्रकाशभेदो वा परं केवलं त्वयि शोभते न परस्मिन्, अन्यत्र । यस्य नाम नास्ति तस्य नामेति असम्भववद्वस्तुनः, फलसाधकत्वं विस्मयावहमेव, तच्चाघटनघटनं शोभते त्वयि परमित्यादि विश्वविमोहिन्या माययैव ते जातं तादृग् मायाया अनन्यसाधारणत्वादिति चतुर्थपादान्तभावार्थः ।

( विष्णुपक्षे ) हे परेश ! इति सम्बोधनपदमेकम् । परेशः—परेषां ब्रह्मादीनामीशः नियन्ता, समानमन्यत् ॥ २६ ॥

( ২৬ )

হে নাথ! বাস্তব তব নাহি রূপনাম
তথাপি তোমার নাম করে পূর্ণ কাম।
এমন বিচিত্র লীলা তোমারি সম্ভবে
অন্য কাহাতেও নহে এ বিশাল ভবে ॥

नाथनाथनपराननुकम्प्यान्
देववन्द्यपदकामरदारान् ।
भो दयामय दयस्व ददस्व
प्रार्थितञ्च भगवन् प्रणमाम ॥ २७ ॥

( शिवपक्षे ) भो दयामय! नाथ नाथनपरान् पतिभिक्षा-निरतान् अनुकम्प्यान् दयार्हान् देववन्द्यपद देवै सुरैर्वन्द्य नम्य पद चरण यस्य स, स चासौ का दक्षश्चेति देववन्द्यपदक तस्य अमरान् मृत्युहीनान् दारान् दयस्व। पत्यौ दक्षे मृतेऽपि जीवन्त्यास्तात् पत्न्या आक्षेपोक्तिरियम्। प्रार्थित पतिजीवन ददस्वेत्यन्वय ।

( विष्णुपक्षे ) हे नाथ! हे देववन्द्यपदक, देववन्द्य पदक यस्य देवाश्च देव्यश्चेति देवा तै वन्द्य पदप्रतिरूपक यस्य स. तत्सम्बोधने हे नाथ! नाथनपरान् भिक्षापरान् अमरदारान् देवपत्नी दयस्व। लक्ष्मीभ्रंशेन, स्वस्वभर्त्तृ असुरयुद्ध पराजयेन समीपागमनाशक्ता देवपत्न्यस्तव मूर्त्ति निर्म्माय तत्र चरणप्रतिरूप प्रणमन्ति तान् दयस्व। यदि दुर्व्वासोऽवमाननया देवराजस्यापराध तदपराध शान्तयेऽप्रयतमानाना देवानामपराध तथापि "स्त्रिय किमपराध्यन्ते गृह-

पञ्जरकोकिलाः", इत्येव निरपराधाः स्त्रियः भवदेकप्रसृतयः यत्प्रार्थयन्ते तद्ददस्व ॥ २७ ॥

| ( ২৭ ) | ( ২৭ ) |
|---|---|
| অমর বন্দিত পদ— | হে নাথ ! ও পদ নমি, |
| মৃত প্রজাপতি, | অমর ললনা— |
| ।হি মরে তার ধর্ম্ম- | শত্রুজয় লক্ষ্মী মাগে— |
| পত্নী এ প্রসূতি। | পূরাও কামনা। |
| তিপ্রাণ চাহে দীনা | দয়াপাত্রে দয়া কর |
| কর ভিক্ষাদান | দেব দয়াময় |
| যাময় কর দয়া | ভগবন্ নমি তোমা' |
| নমি ভগবান্ ॥ | মোরা সবিনয় ॥ |

पश्य पश्य शिवदक्षजनानां
कीदृशी ननु दशा विषमास्ति।
धाम्य स्थितिकरः कृपया ता-
नीश नैष समयस्तमसस्ते ॥ २८ ॥

(शिवपक्षे) प्रार्थितमाह—हे शिव ! पश्य पश्य सम्भ्रमे द्विर्वचनम्, दक्षजनाना–दक्षश्च जनाश्च तेषाम् कीदृशी विषमा दशा अस्ति वर्त्तते। दक्षसमभिव्यवहारात् जनशब्दः दक्षसम्बन्धिजनपरः। तथा च दक्षस्य दशा मरणं भृगुपूषादीनां दक्षस्य स्वजनानां निग्रहः सेनानां मरणञ्चेति भावः अस्तीतिनिपातसम्बन्धात्परत्वेन दशेत्यस्य कर्त्तृत्वं न तु पर्य्येति

क्रियायाः कर्म्मत्वं अस्त्येव घटः पश्येतिवत्। स्थितिकरः सन् तान् दत्त जनांश्च कृपया धारय, अवस्थापय, मृतानां जीवनदानेन, निगृहीतानामपचयपूरणादिना च स्थितिं लम्भय। रुद्रस्य न स्थितिकरत्वमित्याशङ्कामपनुदन्नाह ईशेति हे ईश! सृष्टिस्थितिसंहारकर्त्तः, एषः समयः तममो न तमोगुणसम्बन्धी न भवतीति शेषः, ईश्वरत्वात् त्वमेव गुणभेदमालम्ब्य सृष्टिस्थितिसंहारान् करोषि, तत्र तमोगुणालम्बनेन संहारः, स्थितिसमयोऽयं सत्त्वगुणालम्बनयोग्य, न तमोगुणालम्बनसमयस्तस्मादत्र संहारो न युज्यते। प्रजापतेः संहारः प्रलयकालमन्तरेण न भवतीत्येवमुक्तिः।

(विष्णुपक्षे) हे शिवदक्ष! शिवेषु मङ्गलकर्म्मसु दक्षः कुशलः तत्सम्बुद्धौ शर्व्वमङ्गलमङ्गल्यमितिस्मृतेः। पश्य पश्येति पूर्व्ववत्। जनानां देवमनुष्यादीनां कीदृशी विषमा दशा, लक्ष्मीभ्रंशेन असुरपीडनेन च दुःखावस्था अस्ति। स्थितिकरस्त्वं तान् धारय पूर्व्वावस्था प्रापय। हे ईश! एषः समय. आचारः तमसः, न ते न तव। सत्त्वं हि सुख, सत्त्वस्य प्रच्छादनं विना न दुःखं भवति, प्रच्छादनं तमोगुणस्याचारः, न तु सत्त्वस्य, तव तु सत्त्वमेव रूपमिति तात्पर्य्यम्॥ २८॥

| ( ২৮ ) | ( ২৮ ) |
|---|---|
| হায় শিব! দেখ দেখ<br>দক্ষ তথা লোক<br>লভিল কি দশা আজ<br>মৃত্যু আর শোক। | হে মঙ্গলময়<br>নারায়ণ হের হেব,<br>হায়, কি দুর্দ্দশা আজ<br>জন সমূহের। |

হে পালক ! রক্ষা কর
সে সবে সদয়,
ঈশ্বর ! এ নহে তব
সংহার সময়॥

স্থিতি-কর্ত্তা দয়া করি
স্থিত কর সব,
তামস আচার—
দেবে হানি,—নহে তব ॥

यत्कृपालवबलेन जनानां
सर्व्वदुःखचरमापगमः स्यात् ।
त्वां तमेत्य वयमर्थयमानाः
क्षुद्रमर्थमिति धिग् विषयेच्छाम् ॥ २९ ॥

सर्व्वदु खचरमापगमः—मोक्ष इत्यर्थ । काम्यस्यार्थस्य लाभे, तदलाभजनितदु खनाशेऽपि न सर्व्वेषां दु खानां नाश., तेन दु.खविशेषस्यासत्वेऽपि, उत्पत्स्यमानदुःखानां नाशाभावात् । मोक्षे तु न पुनर्दुःखस्योत्पत्तिः, अर्थस्तु क्षुद्रः अल्प नश्वरत्वात्तथापि मोक्षमपहाय यदर्थः प्रार्थ्यते विषयेषु उत्कटराग एव तत्र कारणमित्युभयपक्षे तुल्य तात्पर्यम् ॥ २६ ॥

( ২৯ )

জীবের যতেক দুঃখ যাঁর কৃপা লেশ—
লভিলে সে সব হয় সমূলে নিঃশেষ।
সেই তুমি—লভিয়াও হায় রে তোমায়
চাহি তুচ্ছ অর্থ,—ধিক্, বিষয় ইচ্ছায় ॥

* দেবতার যে হানি—পরাজয়, তাহা তামস আচার—তমোগুণের কার্য্য, তোমার কার্য্য নহে—তুমি যে সবগুণের অধীশ্বর।

शक्नुमः कृतधियोऽपि विरन्तुं
नैव देव भवतो गुणबद्धाः ।
तत्प्रसीद परिपूरय वाञ्छा-
मस्तु च त्वयि हरे हृदयं नः ॥ ३० ॥

निन्दामि च करोमि चेत्याह—जानन्तोऽपि वयमस्वतन्त्रतया विषयवैराग्यं प्राप्तुं न शक्नुमः, पारतन्त्र्य च भवतो गुणेन मायारज्ज्वा बन्धनम् । अतएव अस्वतन्त्रा वय क्षमार्हाः, प्रसन्नः सन् अस्माक वाञ्छा पूरय । वाञ्छा च पद्यद्वये प्रागुपदर्शिता । तद्वाञ्छापूरणमात्र नास्माक प्रार्थ्यं किन्तु त्वयि हरे नः अस्माक हृदय मनश्चास्तु । ततः कदाचिन्मुमुक्षुत्व भविष्यतीति पद्यद्वयस्यार्थ । एक एव विशेषः, शिवपक्षे हरे इति सप्तम्यन्तप्रयोगः, विष्णुपक्षे सम्बोधनप्रयोगः इति ॥ ३० ॥

( ৩০ )

ভবদীয় মায়ারজ্জু-
বদ্ধ মোরা, তাই—
নশ্বর এ' জানিলেও
ত্যাগে শক্তি নাই।
অশক্তে প্রসন্ন হও,
বাঞ্ছা পূর্ণ কর,
তোমাতে মোদের
মতি থাকে যেন হর ॥

( ৩০ )

অভিজ্ঞ হ'লেও তব
ত্রিগুণে সংযত,
নাহি পারি অর্থবাঞ্ছা
হইতে বিরত।
হে হরি! প্রসন্ন হও
পূরাও বাঞ্ছিত
আর চাহি, তোমা প্রতি
থাকে যেন চিত ॥

एवमादि भगवत्स्तवयोगात्
पावनादजनि यच्छुभदैवम् ।
तेन ते बुबुधिरे जगदीशं
सुप्रसादसुमुखं शुभरूपम् ॥ ३१ ॥

एवमादिः इत्यादिः यः भगवत्स्तवः, तद्योगात् तस्मिन् योगः रचयितृत्वेन तत्पाठकत्वेन च सम्बन्धः, सर्व्वज्ञो ब्रह्मा पूर्व्वकल्पवृत्तान्तानुसारेण स्तवमिमं रचयामास तदनभिज्ञा अपि परे तमेवापठन्निति सर्व्वत्रैव तत्स्तवयोगोऽभूदिति भावः। अथ च तत्स्तवेन यो योगः चित्तवृत्तेरेकत्र स्थितिः तस्मात्। शिवपक्षे भगवत्स्तवः शिवस्तवः, विष्णुपक्षे विष्णुस्तवः। स्तुत्या जगदीशप्रसादस्तु—स्तुतिजनितशुभादृष्टेन स्तोतॄणां जगदीशः प्रसन्न इति ज्ञानम्, तदाह तेनेति द्वितीयार्द्धम्। शिवपक्षे जगदीशः शिवः, विष्णुपक्षे विष्णुः, अन्यत् समानम् ॥ ३१ ॥

( ৩১ )

ইত্যাদি প্রকার
ভগবৎস্তুতি যোগে,
হইল কলুষ নাশ;
শুভ দৈব ভাগে।
তারি ফলে তাঁহারা
দেখেন—মহেশ্বর
সুপ্রসন্ন-মুখপদ্ম
সৌম্য মূর্ত্তিধর॥

( ৩১ )

এইরূপ বহু ভগবৎ-
স্তুতি পাঠে
শুভাদৃষ্ট উপজিল
সর্ব্ব পাপ কাটে।
তাহাতে হ'লেন
হরি নয়ন গোচর
প্রসাদ সুমুখ
সুদৃশ্য-কলেবর॥

श्रीश्वरस्त्वजमुखं क्रमानयन्
सद्गणां च शमयन् हविर्भुजः ।
सुस्वरोदितसमुद्रमन्थना-
मन्द्रधीरनिनदोऽदिशच्छुभम् ॥ ३२ ॥

( शिवपक्षे ) श्रीश्वरः श्रीशिवः, 'देव गुरु गुरुस्थान क्षेत्र क्षेत्राधिदेवताम् । सिद्ध सिद्धाधिकाराश्च श्रीपूर्व्वं समुदीरयेत्' इति राघवभट्टधृतप्रयोगसारवचनमनुसृत्येदम् । 'तु'कारः पक्षव्यावर्त्तन-द्योतकः, स्तोतृपक्षादन्यः स्तुत्यपक्षः, तत्कार्यसूचनात् । अजमुख छागमुख क दक्षं आनयन् जीवयन्, अन प्राणने इति धातोर्णिचि शतृप्रत्ययात्; नहि पूर्व्वस्थितमुखविशिष्टस्य दक्षस्य जीवनमभूत् किन्तु छागसदृशवक्त्रविशिष्टस्येति भावः । छिन्नमुण्डस्य दक्षदेहस्य छागवक्त्रयोजनेन प्राणदानं कृतवान् छागवक्त्रत्व तस्य शिवनिन्दया देव्याः शापादिति वृहद्धर्म्मपुराणवार्त्ता । सद्गणा सता समूह हविर्भुजः पूषादीन् देवाश्च शमयन् शान्तिं लम्भयन्—शुभमदिशत् शुभं भूया-दित्यादिशत्, तेन मृतानामन्येषामपि पुनर्जीवन सूचितम् । किंभूतः सन् शुभमदिशत्—सुस्वरोदितसमुद्रामन्थनामन्द्रधीरनिनदः, सुस्वरे सौम्यस्वरे उदितः प्रकाशितः समुद्रमन्थनामन्द्रधीरनिनदो यस्य स, समुद्रमन्थनस्य आमन्द्रधीरनिनदः, धीरः, अविचलितः निनद इति कर्म्मधारयात् परं आमन्द्रः धीरनिनद इति कर्म्मधारयः । आसम्यक् मन्द्रः गम्भीरः आमन्द्रः । यस्य सुस्वरे समुद्रमन्थनस्य गम्भीरधीरध्वनिः प्रकाशितः सः तादृशः । समुद्रमन्थनस्य ध्वनौ यादृक् दिगन्तव्यापित्व

तत्रासीत् केवलं गम्भीरत्वं धीरत्वञ्चेति भावः। सुस्वरे समुद्रमन्थनध्वनिप्रकाशश्च सुस्वरस्य समुद्रमन्थनध्वनिसादृश्यमिति-निदर्शना।

( विष्णुपक्षे ) श्रीश्वरः श्रीपतिः, अजमुखं कमलासनप्रमुखं सद्गणम् उत्तमसमवाय क सुखं आनयन् प्रापयन् हविर्भुजो देवान् प्रशमयन् शान्तिमाश्वास लम्भयश्च सुस्वरेण उदित कथित सुस्वरोदित समुद्रमन्थन येन सः आमन्द्रधीरनिनदश्चेति विशेषणसमासः सः सन् शुभमदिशत् युष्माभि. समुद्रमन्थनं कर्त्तव्य इत्युक्त्वा मङ्गलं मङ्गलजनक यथा स्यात्तथा उपदिदेश नहि केवलं देवै समुद्रमन्थन कर्त्तव्य किन्तु देवासुरैर्मिलितैः, तस्मादिदानीं सन्धिर्विधेय., इत्यादिरूप शुभजनकमुपदेशम् आमन्द्रधीरध्वनिना कृतवानित्यर्थः ॥ ३२ ॥

( ৩২ )

শ্রীশ্রী ঈশ্বর শিব
দক্ষে দিলা প্রাণ,
মুণ্ডহীন দেহে, করি
ছাগ মুণ্ডদান।
সাগর মন্থন সম
মন্দ্র ধীর স্বরে
কহি শুভ দিলা শান্তি
সগণ অমরে॥

( ৩২ )

শ্রীপতি, বিধাতা আদি
শ্রেষ্ঠ স্তোতাগণে
করি সুখী, দিয়া শান্তি
দেববৃন্দ মনে।
সুস্বরে আদেশ দেন
মথিতে সাগর
মন্দ্র ধীর স্বরে আরও
যাহা শ্রেয়স্কর॥

सतीतनुस्तेन तदा गृहीता
नारायणेनान्तरिताथ चक्रात् ।
शमायते सर्व उपास्थितार्द्यां
गतिं तु तामस्य सुरा न जज्ञुः ॥ ३३ ॥

( शिव॰पक्षे ) तेन शिवेन सत्याः दाक्षायण्याः मृतायाः इत्यर्थात्तनुः शरीरं गृहीता, स्कन्धे स्थापिता अथ अनन्तरं नारायणेन चक्रात् चक्रमुत्सृज्य ल्यब्लोपे पञ्चमी अन्तरिता अन्तरवती दूरवर्त्तिनी अन्तरा बाह्या वा कृता अङ्गानि छित्त्वा देहो दूरी चक्रे । सर्व्वः शिवः शमायते शमस्य विस्तारे सति, दक्षजीवनादिना दक्षपुरे, प्रसङ्ख्यानेन आत्मनि, तन्महिम्ना प्रमथेषु च शान्तेरायते विस्तारे ( आ+यम+भावे निष्ठा ) आद्यां गतिं दाक्षायणीविवाहात् पूर्व्वं या गतिरासीत् ताम् उपास्थित मित्रीचकार । सा च गतिः निभृतं तपश्चरणम् । सुरा. अस्य शिवस्य तां गतिं न जज्ञुः न बुबुधिरे ।

( विष्णुपक्षे ) तेन नारायणेन गृहीता सती दिव्या सत्त्वप्रधाना वा तनुः चक्रात् समूहात् स्तोतृसमूहादिति प्रकरणाद् गम्यते समूहं परित्यज्य अन्तरिता अन्तर्धानं प्रापिता, अथ अनन्तरं विष्णोरुपदेशप्राप्त्यनन्तरम् ते सर्व्वे शमाय असुरैः सन्ध्यर्थं वा स्वर्गम् उपास्थिताः हीनभावेन आस्थानं आलम्बनं कृतवन्तः अस्य नारायणस्य गतिं तु न जज्ञुः नाविदन् । एतेन इन्द्रादिदेवशरीरापेक्षया स्वेच्छागृहीतेश्वरशरीरस्य वैलक्षण्यं द्योतितम्, इदं च पक्षद्वये यथायथं बोध्यम् ॥ ३३ ॥

( ৩৩ )

সতী মৃতদেহ শিব
কবেন ধাবণ,
চক্রে কাটি তায
হবিলেন নাবায়ণ।
দিয়া শান্তি সবে, শিব
নিজ আত্মভাবে
ব্রত হ'ন, সেই-গতি-
জ্ঞান নাহি দেবে ॥

( ৩৩ )

তখন যে দিব্যরূপ
ধরিলেন হবি—
দেববৃন্দ হ'তে—
তায ল'এন সংববি।
হীন সন্ধি তরে
স্বর্গে গেলা দেবতাবা
নাবায়ণ-গতি কিন্তু
না জানিলা তা'রা ॥

*ईशो हि नित्यनिरवद्यचिदात्मभावो*
वाक्चेतसोरविषयो धृतविग्रहोऽपि ।
जीवेष्वदृष्टविभवोपचितेषु तावत्
सम्पद्यते तदवलोकनशक्तियोगः ॥३४॥

इदानीं कथं न जज्ञुः, इतः प्रागेव च कथं तद्रूपं ददृशुः पश्चादपि द्रक्ष्यते तत्समाधानायाह—ईश इति। नित्यः उत्पत्तिद्वय-रहितः निरवद्यः निर्दोषः चिदात्मा = चित् स्वरूपः भावः सत्ता यस्य सः नित्यनिर्दोषचिन्मात्रस्वरूपेण स्थितः इत्यर्थः। यद्वा चिदात्मनि भावः चिदात्मभावः नित्यनिर्दोषः चिदात्मभावः चिद्वृत्तिसत्ता, इयं च सत्ता चिदचिदुभयपर्याप्तेति शाक्तमतम्। ईशः जगदीश्वरः धृतविग्रहोऽपि स्वेच्छागृहीत-शरीर-विशेषोऽपि वाक्चेतसोः वाचः मनसश्च अविषयः अगोचरः हि अवधारणे, तस्य शरीरस्य जीवशरीर-

सादृश्याभावादितिभावः । तर्हि कथं शिवनारायणादिरूपे दृश्यते तत्राह—जीवेष्विति, अदृष्टस्य विभवः सामर्थ्यं तेन उपचिते समृद्धेषु जीवेषु तदवलोकनशक्त्या सः (ईश्वरः) अवलोक्यते यया तदवलोकनी सा चासौ शक्तिश्चेति तदवलोकनशक्तिः—सा हि शक्ति जगदीश्वरस्य कृपा तया योगः सम्बन्धः सम्पद्यते । पुण्यविशेषादेव जीवे जगदीश्वरकृपा जायते यया तद्दर्शनं भवति, न नु जीवेच्छया स्वकजनितशुभादृष्टात् कृपा जाता ततश्च तद्दर्शनं जातम् अदृष्टस्य फलनाश्यतया, पुनर्दर्शनहेतुकृपासम्बन्धकारणपुण्यविशेषाभावा न दर्शनं जातमिति भावः । उभयपक्षे समान एवार्थः, केवल विग्रहे भेदः, स च दर्शित इति ॥ ३४ ॥

इति कविकुल-लालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये स्तोत्र नाम सप्तमः सर्गः ॥ ७ ॥

( ৩৪ )

নিত্যশুদ্ধ জ্ঞানরূপ আত্মা যে ঈশ্বর
ধরিলেও মূর্ত্তি মনোবাক্যঅগোচর।
অদৃষ্ট বিশেষ শুভ হইলে উদয়
তাঁরে দেখিবার শক্তি-লাভ জীবে হয়॥

ইতি সর্ব্বমঙ্গলোদয় নামক দ্ব্যর্থ কাব্যে 'স্তোত্র' নামক
সপ্তম সর্গ সমাপ্ত।

# अष्टमः सर्गः ।

विधिनप्त्री तु सा देवी प्रनष्टा सर्व्व-सम्मता ।
आसीत् सागरगर्भस्थानन्ताधातृसहोदरा ॥ १ ॥

( *शिव०पक्षे* ) सर्व्वसम्मता *सर्व्वस्य शिवस्य सम्मता प्रिया* सा विधिनप्त्री विधेर्ब्रह्मणः नप्त्री पौत्री दाक्षायणी प्रनष्टा त्यक्तदेहा सती सागरगर्भस्थानन्ताधातृसहोदरा आसीत्, अनन्ता पृथिवी तस्या धाता धारणकर्त्ता अनन्ताधाता महीध्रः पर्व्वत इत्यर्थः सागरगर्भस्थश्चासौ अनन्ताधाता चेति सागरगर्भस्थपर्व्वतः स च मैनाकः, तस्य सहोदरा। मैनाको हि हिमालयान् मेनकायामुत्पन्नः, इन्द्रस्य पर्व्वतपक्षच्छेदनावसरे, तद्भयान्मैनाकः सागरं प्रविष्टवान् इति, पूर्व्वं सर्व्वे पर्व्वताः पक्षवन्त आसन्, तेषां विहङ्गमानामिव देशाद्देशान्तरपतनादाकस्मिक *जनपदध्वंसमवलोक्य इन्द्रेण तेषां पक्षच्छेदो वज्रेण कृत इति च* पुराणवार्त्ता । एतेन, त्यक्तदेहा दाक्षायणी हिमालयान् मेनकायामुत्पन्नेति वर्णितम् तुकारो दक्षप्रसङ्गसमाप्तिसूचकः, कथान्तरद्योतनेन । (पक्षान्तरे) सर्व्वैः सम्मता आदृता विधिनप्त्री विधेर्ब्रह्मणः पौत्री,—कतमा पौत्री तदाह धातृसहोदरा धाता च विधाता चेति द्वौ पुत्रौ लक्ष्मीश्च ख्यातिनाम्न्या पत्न्या भृगोरुत्पन्ना इति विष्णुपुराणम् । तथा च भृगोः ख्यात्यामुत्पन्ना या ब्रह्मणः पौत्री सा,—सा च लक्ष्मीः, सागरगर्भस्था आसीत् दुर्व्वाससः शापेन इन्द्राधिकारं परित्यज्य सागरप्रविष्टा जीवन्त्येवासीदित्यर्थः । सागर-

प्रवेशेऽप्यमरणं बोधयितुं हेतुगर्भविशेषणम् अनन्तेति—नाशरहितेत्यर्थः अत्र पक्षे सागरगर्भस्था अनन्ता धातृसहोदरेति पदत्रयम् । लक्ष्म्याः सागरप्रवेशवार्त्ता—पूर्वं वर्णितापि उत्तरकथायोजनायात्रा नूदिता । तुकारः लक्ष्मीमुद्धरणरूपकथान्तरसूचकः ॥ १ ॥

| ( ১ ) | ( ১ ) |
|---|---|
| শিবপ্রিয়া দাক্ষায়ণী দেহত্যাগ পরে। | অথিল মানিতা লক্ষ্মী ভৃগুর তনয়া। |
| জন্মেন মৈনাক-মাতা মেনকা উদরে॥ | হইলেন অন্তর্দ্ধানে ক্ষীরোদ-নিলয়া॥ |

**प्रकृत्यैकतया भेदे स्थितेरपि जगत्प्रसूः ।**
**समपद्यत सा तत्र सदाशिवपरायणा ॥ २ ॥**

( शिव०पक्षे ) सा जगत्प्रसूः जगदम्बा स्थितेः मर्य्यादाया भेदेऽपि पूर्व्वं दाक्षायणीत्वेन स्थितिरासीदिदानीं पार्व्वतीत्वेनेति भेदसत्त्वेऽपि प्रकृत्यैकतया प्रकृतिर्हि एकैव भवति दाक्षायणीत्वेन वा पार्व्वतीत्वेन वा यादृगाविर्भावमङ्गीकरोतु स्वरूपतः सा एका प्रकृतिरेव, एवमेकतया पार्वती-रूपेण तस्याः स्थितावपि सा सदाशिवपरायणा महेश्वरपरायणा समपद्यत अभूत् । एतेन पार्व्वत्याः शिवमेव पतित्वेन प्रार्थयमानायास्तपोनियमादिकं संक्षेपेणोक्तम् ।

( पक्षान्तरे ) सा जगत्प्रसूः लोकमाता लक्ष्मीः प्रकृत्या स्वभावेन एकतया अभेदेन वास्तवाभेदेन वा तत्र सागरगर्भे शिवपरायणा

मङ्गलदानरता सदा आसीदित्यर्थः, अयमाशयः लक्ष्मीर्दुर्व्वाससः शापात् पूर्व्वं स्वर्गस्था यथा इन्द्रस्य मङ्गलं कृतवती, मङ्गलदान-प्रकृतितया सागरगर्भस्थिता तत्र मङ्गलदायिन्यभूत् साम्प्रतं स्वाधिष्ठानसागरगर्भस्य पातालद्वारतया पातालवासिनोऽसुराः तत्प्रदत्तमङ्गलभाजोऽभूवन्निति सूचितम् ॥ २ ॥

| ( ২ ) | ( ২ ) |
|---|---|
| একই প্রকৃতি সতী<br>উমা বিশ্বমাতা ।<br>অবস্থা ভেদেও হ'ন<br>সদাশিব যতা ॥ | এক লোকমাতা লক্ষ্মী,<br>মাত্র ভিন্নস্থান।<br>সেথাও করেন—<br>স্বাভাবিক শুভদান॥ |

## दैत्यैर्ज्जिताः स्तव-प्रीत-स्वभुवोक्तास्तु संहिताः । देवास्तन्नन्दनोद्भूतिमीपुः शिवकरग्रहम् ॥ ३ ॥

(शिव०पक्षे) तुकारः पक्षान्तरद्योतकः, स च पक्षस्तारकासुरेण देवाना युद्धप्रसक्तः, अत्र विशेषेणानुल्लिखितमपि दैत्यकर्तृकदेवताविजयस्य पक्षान्तरत्वेन बोधनात्, तद्युद्धं घटितमिति सूचितम् । कुमारसम्भवेऽपि असुरजय एवोक्तः । दैत्यैः तारकप्रमुखैः जिताः संहिताः मिलिताः देवाः स्तवप्रीतस्वभुवा स्तुतिविशेषेण प्रीतः यः स्वभूः आत्मभूः ब्रह्मा तेनोक्ताः उपदिष्टाः सन्तः तन्नन्दनोद्भूतिं तस्या पार्व्वत्या तस्या या नन्दनोद्भूतिः पुत्रजन्म यतः त शिवकरग्रहं शिवेन पाणिग्रहं विवाहमीपुः कामयामासुः । दक्षयज्ञविहितशिवपत्नीनाशमासादनन्तरं शिवो देवैरविदितस्तस्थौ ।

अत्रान्तरे सगणतारकासुरपराजिता देवा., सर्व्वे मिलिता सत ब्रह्माण शरणमीयु तुष्टुवुश्च । प्रीतेन ब्रह्मणा कथितम् 'शिवस्य पुत्र. युष्मान् शत्रु तारक निहनिष्यति, शिवश्च साम्प्रत हिमालये तपस्यति, दाक्षायणी च हिमालयदुहितृभावनाविर्भूता, सैव शिवस्य वाजधारणसमर्था, अतः शिवेन सह तस्या विवाहसघटन कुरुत, तत स्तयो. सयोगे एव नन्दनो जनिष्यते, नान्यथा।' इत्युक्ता देवा तस्या शिवपुत्रजन्मफलक शिवेन तस्या पाणिग्रहण कामयामासुरिति महती कथात्र सक्षिप्योत्तापि तदर्थमेव प्रतिपादयति । सर्व्वजनप्रसिद्ध-कुमारसम्भवमहाकाव्यवर्णिताया कथाया सक्षेपकथनमेवोचितमिति कवेराशय ।

(पक्षान्तरे) पूर्व्वसर्गवर्णित सक्षेपेणानूद्य कथाशेष योजयति। दैत्यैर्जिता देवा पूर्व्वसर्गवर्णितप्रकारेण स्तवेन प्रीत य स्वभू नारायण. तेनोक्ता सहिता. असुरै कृतसधय, सुनन्दनोद्भूति = तस्य नन्दन-काननस्य उद्भूति अत्यैश्वर्यसाधक उत्कृष्टा भूति सम्पद् यस्मात् त शिवकर मङ्गलकर ग्रह निर्व्वन्धम् ईयु प्राप्तवन्त दैवादिकस्य गत्यर्थकस्येण धातोर्निष्पन्नत्वात्, सर्व्वे गत्यर्था प्राप्त्यर्था ज्ञानार्थाश्चेति शाब्दिकसमयाच। पूर्व्वसर्गे सुरवरोदितसमुद्रमन्थनामन्द्रघोषनिनदोऽदिशच्छुभमित्युक्तम्, तत्प्रतिपालनाय देवा दैत्यै सह तदभिमतमेव सन्धि तत्कालयोग्य कृत्वा शुभजनके समुद्रमन्थने निर्व्वन्ध प्राप्तवन्त, यस्य फल नन्दनस्य प्रकृष्टा सम्पत्, नन्दनवनसारसम्पदा पारिजातादीना समुद्रमन्थनादुत्पत्ते । इद हि स्वरूपत फलस्य कथन ननूद्देश्यतया। पूव दुर्व्वासस पारिजातप्राप्तिश्च कैलासस्थसन्तानकाख्यपारिजातविशेषप्राप्तिरूपेति

बोध्यम्। तादृशदुर्लभपुष्पस्य स्वयमिन्द्रेण सबहुमानमनुपादानमेव दुर्वाससः कोपकारणमभूदिति बोद्धव्यम्। यद्वा नन्दनस्य उद्भूतिः उत्कृष्टा अनन्यसाधारणी भूतिः प्राप्तिः अधिकारो यस्मात् तं निर्बन्धं प्राप्तवन्त इत्यर्थः। सन्ध्यवसरे नन्दनवने असुराधिकारस्वीकार आसीत् समुद्रमन्थनानन्तरममृतपानेन बलीयसा देवानामनन्यसाधारणोऽधिकारः इति परिणामः समुद्रमन्थनाग्रहाय। तदानीं विशेषरूपेण देवैरगृहीतेऽप्यस्मिन् परिणामे, असुरजिगीषुणा तेषां कामनापूरणाय यत् श्रीविष्णूपदिष्टं तदनुष्ठानेनास्माभिरसुरा विजेष्यन्ते स्वर्गाच्च च्यावयिष्यन्ते इति सामान्यतया परिणामो ज्ञात एवासीदिति भावः॥ ३॥

( ৩ )

হেনকালে তারকাদি
অসুর নির্জ্জিত—
দেবগণ; বিধাতারে
বন্দিলা মিলিত।
তুষ্ট বিধিবাক্যে
লভি উপায় নির্ণয়,
শিব পুত্রতরে বাঞ্ছে'
উমা পরিণয়॥ *

( ৩ )

বিষ্ণুবাক্যে, দৈত্য-
পরাজিত দেবগণ
হীনশক্তি করি' মিলি'
ভাবিলা তখন।
করতল গত হ'ল
এবার মঙ্গল,
নন্দনে ঐরাধিপত্য
যার ভাবী ফল॥

* তারকপ্রমুখ অসুর-গণে পরাজিত দেবগণের স্তবে তুষ্ট হইয়া ব্রহ্মা বলিলেন, 'শিবের পুত্র জন্মিলে, তিনি তারকাসুরকে নিহত ও দৈত্য-সৈন্য সমস্ত পরাজিত করিবেন। শিব এখন হিমালয়ের নিকট প্রদেশে

अथ क्षीरोदधिं कान्त्या हसन्तं विधुधारिणम् ।
अगाधमपरिच्छेद्यं सुस्थिरं सर्व्वमश्चितम् ॥ ४ ॥

अप्रधृष्यमनाख्येय ताद्दक्प्रकृतिसुन्दरम् ।
सान्निध्यात् किमुमाया वा श्रीमत्तमतया मतम् ॥५॥

कुण्डलीभूतभोगीन्द्रं शान्तोर्म्मिममृताकरम् ।
सकामो हरिणोक्तोऽगान्मन्थितुं सुरसञ्चयः ॥६॥

( विशेषकम् )

(शिव०पक्षे) अन्तिमश्लोकान्तिमचरणे सुरसं च यः इति पदत्रयम् । अथ अनन्तर शिवस्य उमया विवाहो भवत्विति देवानामिच्छाया अनन्तरम् । यः हरिणा इन्द्रेण विधुधारिणं सर्वं शिवं मन्थितुं पीडयितुं शरेणाहन्तुं सुरसं सम्यगनुरागोपेतं यथा स्यात् तथा उक्तः, स कामः अगाच्च, 'सुरसं च' इति चकारस्य तेनान्वयात्, स च चकारः त मन्थितुमित्यस्यावृत्तिद्योतकः ।

---

তপোমগ্ন। হিমালয়-নন্দিনী উমারূপে আবির্ভূতা সতী দাক্ষায়ণী তাঁহাকে পতিরূপে লাভ করিবার জন্য পরিচর্য্যা করিতেছেন, কিন্তু শিব নির্বিকার। মহাশক্তি উমাই শিবের পত্নী হইলে—তাঁহাদিগের মিলনে পুত্র হইবে। অতএব যাহাতে উমার সহিত শিবের বিবাহ হয়, তাহা তোমরা কর।' দেবগণ ব্রহ্মার কথায় শত্রু-জয়ের উপায় জানিতে পারিলে, শিবের বিবাহ প্রবৃত্তি জন্মাইবার জন্য, কামদেবকে দেবরাজ নিযুক্ত করিলেন, যাহাতে শিব তপস্যা ত্যাগ করিয়া কামের বশ্যতা স্বীকার করেন।

शिवं मन्थितुमगादितियावत्। सर्व्वं कीदृशं कान्त्या शुभ्रदेहत्वात् क्षीरोदधिं हसन्तम् उपहसन्तं तेन ततः कान्तिप्रकर्ष उक्तः। क्षीरोदस्य शुभ्रतैव वर्त्तते नतु औज्ज्वल्यमिति भावः। अगाधम् अगः शैलः हिमगिरिः आधा आधारो यस्य तम् आङ्पूर्व्वधाधातोः (आतश्चोपसर्गे पा० ३।३।१०६। सूत्रात्) अधिकरणे अङ्प्रत्ययात्, अगे आधा आधानं आधेयत्वं यस्येति वा। अपरिच्छेद्यं निर्णेतुमशक्यम् ईश्वरत्वेन स्वरूपावधारणस्य कर्त्तुमशक्यत्वात् सुस्थिरं जितश्वासतया स्थिरमूर्तिम्। अर्च्चितं पूजितम्। 'अप्रधृष्यम्' अशक्यप्रधर्षणम् 'अनाख्येयं' अनिर्वाच्यं 'तादृक्प्रकृतिसुन्दरम्' तादृक् तादृशी प्रकृतिः-अन्यत्र सादृश्याभावात् स्वसदृशी प्रकृतिः तया सुन्दरम् परमरमणीयम्, वा अथवा उमायाः सान्निध्यात् तत्सपर्यार्थम् उमायास्तत्रावस्थानात् श्रीमत्तमतया शोभातिशयवत्तया मतं ज्ञातं किम्? कुण्डलीभूतः कर्णभूषणीभूतः भोगीन्द्रो नागश्रेष्ठो यस्य कुण्डलीभूत इत्यस्य वलयीभूत इत्यर्थो वा नागेन्द्रः सर्पराजो वासुकिः वलयीकृतवासुकिरित्युक्तः। भूतेरयतीत-निर्देशात् तदानीं नागेन्द्रकुण्डलाभावेऽपि, प्रभावातिशयसूचकं-विशेषणमेतत्। शान्तोर्म्मिं—'शोकमोहौ क्षुत्पिपासे जरामृत्यू षडूर्म्मयः' इत्यूर्म्मिषट्कशून्यम्। अमृताकरम् अमृतस्य मोक्षस्य आकरम् उद्भव-स्थानम्—यस्मादेव मोक्षो घटते भक्तानां तमित्यर्थः। मथि हिंसा-सङ्क्लेशनयोरिति भौवादिक मथिधातोर्मान्थतुमिति प्रयोगः। अन्यैरजेयः, प्रभावातिशयसम्पन्नः, केवलं त्वयैव जय्यः इतीन्द्रो देवान्तरापेक्षया साम-र्थ्यातिशयवर्णनमनुरागातिशयसूचकं कृत्वा उमायाः सान्निध्यं तेऽनुकूलं भविष्यतीत्यपि ज्ञापयन् शिवं स्त्रीरागरूपक्लेशेन योजयितुं कामं

नियुक्तवान् स च तदाज्ञापालनाय गतवान् । अत्र उमासान्निध्यकथनेन गिरिशमुपचचार प्रत्यहं सा सुकेशीति कुमारसम्भववर्णितवृत्तं संक्षेपेण बोधितमिति ध्येयम् ।

(पक्षान्तरे) हरिणा नारायणेनोक्तः पूर्व्वसर्गवर्णितप्रकारेणादिष्टः सुरसञ्चयः देववृन्दम् मन्थितुं विलोडितुं सकामः सस्पृहः सन् क्षीरोदधि क्षीरोदसागरम् अगात् क्षीरोदधिं कीदृशम् ? यान्त्या हसन्तं कान्तिरेव तस्य हासः इत्यर्थः, हासस्य शुक्लवर्णतया. कविसमयप्रसिद्धेः 'धवलता वर्ण्यते हासकीर्त्त्योः' इत्युक्तेः । निधिर्विष्णुः तद्धारिणं विष्णुस्थानमित्यर्थः चन्द्रधारिणं वा चन्द्रस्य तद्गर्भस्थत्वात् । अगाधम् अतलस्पर्शम्, अपरिच्छेद्यम् इयत्तया मातुमशक्यं अपरिमेयम्, सुस्थिरं शोभना सुन्दरा स्थिरा भूमिः, येन तं भूमण्डलस्यालङ्कारम् सर्वमञ्चितमित्येकपदं मचि धारणोच्छ्रायपूजास्विति मचिधातोर्निष्ठाप्रत्ययेन मञ्चितमिति सिद्धम् । सर्वैर्मञ्चितं पूजितं विष्णुस्थानादितया सत्कृतम्, अप्रधृष्यम् अनभिभवनीयम् महत्त्वादलङ्घनीयम् इत्यर्थः, अनाख्येयं न आख्येयम् अवर्णनीयं वर्णयितुमशक्यम्, तादृक् तादृशी या प्रकृतिः—वर्णनातीतशोभायोग्यो य. स्वभावः तया सुन्दरम्, अथवा मायाः लक्ष्म्याः सान्निध्यात् उत्तमनिधिरूपत्वात् निधिः अज्ञात स्वामि निखातधनं लक्ष्म्या निगूढं तद्गर्भे स्थितत्वादित्येवोक्तिः, श्रीमत्तमतया ये तावत् श्रीशब्दार्थाः तेषां प्रथमगणितायाः लक्ष्म्याः, 'लक्ष्मी सरस्वती-धीत्रिवर्गसम्पद् विभूति शोभासु । उपकरणवेषरचना-विधासु च श्रीरतिप्रथिता' इति व्याडिस्मरणात् आश्रयतया तद्वत्त्वेन, सर्व्वेषां श्रीमतां श्रीशब्दार्थवतां मध्ये तस्योत्कर्षेण—अयं च सर्व्वतोऽधिकशोभावत्तया मतं निर्णीतं किमु ?

किमु इत्युत्प्रेक्षायां पूर्व्वस्मिन् पद्ये 'किम' इति उत्प्रेक्षाबोधकम् अत्र 'किमु' इति भेदो बोध्यः श्रीशब्दश्लेषेण सौन्दर्य्यातिशयवत्त्वं लक्ष्म्याः गूढभावेन स्थितिप्रयुक्तमिवेत्युत्प्रेक्षितम्। वा इति न केवलं सुन्दरमित्येतावन्मात्रं किन्तु सुन्दरतममिति पद्यद्योतनाय, एवार्थको वा वाकारः, लक्ष्म्या एव सान्निध्यादित्यर्थः। 'कुण्डलीभूतभोगीन्द्रम्' भोगीन्द्रः भोगिनां नागानामिन्द्रः श्रेष्ठः अनन्तः, स कुण्डलीभूतो यत्र, विष्णोः शय्यारूपत्वेनावस्थान कुण्डलीभाव इत्याशयः। शान्तोर्म्मिम् निस्तरङ्गम्, अमृताकरम्—अमृतस्य उद्भवस्थानम् वस्तुस्थितिवर्णनाय अमृताकरमिति विशेषणम्। पद्यद्वय एव एकक्रियान्वयित्रिश्लोकया विशेषकमिदम् त्रिभिः श्लोकैर्विशेषकमित्युक्तत्वात्॥ ४—६॥

| ( ৪৫-৬ ) | ( ৪৫-৬ ) |
|---|---|
| পরে কামে সমাদরে<br>কহিলা বাসব—<br>"তোমারে করিতে হ'বে<br>ভব পরাভব।<br><br>এখন আছেন তিনি<br>হিমাদ্রি উপরে ;<br>স্বয়ং পূজিত, তবু<br>স্থির কলেবরে— | অনন্তর বিষ্ণুবাক্যে<br>দেবতা নিকর,<br>মন্থন করিতে যা'ন<br>ক্ষীরোদ সাগর।<br><br>( দেবতা নিকর মাঝে<br>রহে দৈত্যগণ,<br>পৃথক উল্লেখ নাই,<br>ছত্রীর মতন। ) * |

* 'ছত্রীর মতন' ইহার সংস্কৃত নাম 'ছত্রিন্যায়'। তাহার ভাবার্থ এই যে, একই দলে কতিপয় ব্যক্তি ছত্রধারী ও কতিপয় ব্যক্তি ছত্রহীন—

যোগমগ্ন চন্দ্রচূড় ;
অসাধ্য বর্ণন,
ক্ষীরোদেও উপহাসে
অঙ্গের বরণ।

নিসর্গ সৌন্দর্য্য কিংবা
উমা সন্নিধান,
হেন শোভাবৃদ্ধি হেতু
না পাই সন্ধান॥

উমা কাছে; তবু মুক্তি
দাতা নির্ব্বিকার,
তুমি বিনা তাঁর পরাভব
সাধ্য কা'র।"

এ'কথায় উৎসাহিত
গর্ব্বিত মদন,
স্বকার্য্য সাধন তরে
করিলা গমন॥

হাসিছে শোভায় তাহা,
প্রকৃতির দান,
কিংবা লভি' লক্ষ্মী-
যোগ অধিক শ্রীমান॥

(প্রথমে ভাবনা
দুই পক্ষই সমান।
শেষে স্থির হয়
শেষ পক্ষ বলবান।)

গর্ভমধ্যে ধরে সুধা-
কর ও অমৃত
ভূমণ্ডল শোভা-কর
সর্ব্ব সমাদৃত।

নাহি উঠে উর্ম্মিমালা
কভু এ সাগরে।
ইহার স্বরূপ কেবা
বর্ণিবারে পারে॥

সদা শান্ত স্থির (যেন
মুনিজন মন)
অতল গরল তাই
অসাধ্য মন্থন॥

---

এ অবস্থাতেও 'ছত্রধারীরা যাইতেছে' বলিয়া যেমন সমগ্র দলকে লক্ষ্য করা হয়, সেইরূপ একই দলে দেবতা ও অসুর থাকিলেও সেই দলকে দেবতানিকর বা দেবতাদিগের দল বলা হইয়াছে।

**तस्याधृष्यतया कामं यत्तश्च विहतं सुराः ।**
**वीक्ष्य भूरिं प्रसादार्थं भक्तियोगेन तुष्टुवुः ॥ ७ ॥**

( शिव०पक्ष ) तस्य धृष्यतया तस्य शिवस्य अधृष्यतया अनभिभवनीयतया यत्त यत्नवन्त यतधातोः कर्त्तरि निष्ठाप्रत्ययात् चकारः अप्यर्थे, यत्नवन्तमपि काम विहत विशेषेण हत तस्य नयनानलेन दग्ध वीक्ष्य सुराः भूरि शिव भक्तियोगेन, साक्षादुपस्थातुं भयेनासमर्था भक्त्या योगेन, भक्तिकृतचित्तैकाग्र्येण उपलक्षिताः प्रसादार्थं प्रसन्नताफलक यथा स्यात् तथा तुष्टुवुः स्तुतवन्तः ।

( पक्षान्तरे ) सुरा तस्य क्षीरोदस्य अधृष्यतया मन्थितुमशक्यतया काम मन्थनाभिलाष तत्फलाभिलाषं वा विहतं व्याहत यत्तं भावे निष्ठाप्रत्ययात् यत्नञ्च चकाराद् विहतमित्यस्यानुकर्षः । भूरिं विष्णुं भक्तियोगेन स्तुतवन्तः ॥ ७ ॥

| ( ৭ ) | ( ৭ ) |
|---|---|
| ব্যর্থ কাম-যত্ন<br>নাহি হ'ল শিবজয়,<br>অবশেষে তাঁর রোষে<br>নাশ ভস্ম হয়।<br>হেরি ভীত দেবগণ,<br>কৃপাতরে হবে<br>উদ্দেশে করেন স্তব<br>অতি ভক্তি-ভরে ॥ | ( কলসীর দুগ্ধ নহে<br>বিশাল সাগর,<br>কেমনে মন্থন হবে<br>বুদ্ধি অগোচর।)<br>বিফল মন্থন-সাধ<br>যত্ন ব্যর্থ হেরি'<br>কৃপা-আশে কৃষ্ণে বন্দে'<br>সবে ভক্তি করি' ॥ |

नगराजाहिसंसृष्टमथोमोद्वाहसत्फलम् ।
नदीनमन्थनं सर्व्वहृद्यं पीयूषसम्मितम् ॥ ८ ॥

संघट्यमानं सोत्कण्ठं देवताद्यैः शुभावहम् ।
दयालुर्देवदेवेशः समये समपूरयत् ॥ ९ ॥

( युग्मकम् )

( शिव०पक्षे ) नगराजा हि संसृष्टमिति पदत्रयम, हि इति विशेषे । अथ अनन्तरं शिवप्रसादलाभानन्तर देवताद्यैः देवताभिः ऋषिभिश्च सोत्कण्ठ संघट्यमान संयोज्यमान शुभावह मङ्गलजनक नगराजा हिमालयेन संसृष्ट सङ्गतम्, उमोद्वाह सत्फलम् यस्य पीयूषसम्मित सुधातुल्यं सर्वप्रिय तत्, दयालु कृपामयो देवदेव ईशः शिवः समये यथाकाल नदीनमन्थन यथा स्यात् तथा समपूरयत्, सम्पूर्णं कृतवान् विवाहक्रिययेति भाव । न, दीनाना मदनस्य भस्मीभावेन शोकार्त्ताना मन्थन क्लेशन यस्मिन् कर्म्मणि । इति त्रिपदव्यधिकरणबहुव्रीहिः, ध्वंसस्वरूपाभावबोधकोऽत्र नञ् उत्तरपदस्यत्वाभावान्नञोऽत्तोऽभावः । यद्वा नञर्थोऽस्य नशब्दः न दीनमन्थन यत्र इत्येव समानाधिकरणबहुव्रीहिः, उभयत्रैव दीनक्लेशहेतुविध्वंसनमित्यर्थः । अथवा नगराजा नगराट् हिमालयः तेन संसृष्ट सम्पादितम् उमोद्वाहरूप सत्फलम् शिवः समये समपूरयत् समापितवान् । उमाविवाहसत्फल कीदृशम् ? नदीनमन्थन दानोद्वेजकसाराल्य प्रधानाना महोत्सवे प्रायेण दीना अवमानादिनोद्वेज्यन्ते इदन्तु न तथा, किन्तु

यूषसम्मितम् अमृततुल्य सर्वेषां सर्वेषा प्रियम् दीनानाम-ति भाव:।

( पक्षान्तरे ) अथो अनन्तरं हरिप्रसादलाभानन्तरम् नगराजाहि-सृष्टमित्येक पदम , नगः मन्दरपर्वत , राजाहि: राजा चासौ अहिश्चेति र्पराजो वासुकि: अथवा नगराज: पर्वतश्रेष्ठो मन्दर: अहि: वासुकि:। भ्या ससृष्ट, तत् साध्य मन्दरवासुकिसम्पर्कशालि वा मोद्वाहसत्फलं ाया: लक्ष्म्या उद्वाह: उदार· सत् उत्तम फलं यस्य तत् नदीन: समुद्र. स्य मन्थनम् ( नदीन: सरित्पति: ) देवेश: देव: विष्णु: समपूरयत् म्पूर्णं कृतवान् नदीनमन्थन कीदृशम् ? पीयूपसम्मितम्, अमृतसम्प्रक्षे-म्म्. सपूर्वान्माङ् प्रक्षेपणे इति धातोर्भावे निष्ठाया रूपम्। पीयूषस्य म्मित प्रक्षेपो येन तत् , अत· सर्वेषां देवासुराणा हृद्य प्रियम् ॥८६॥

( ৮।৯ )

াতব দেবতা ক্লেশ
নাশি' অনন্তর
বাহ সম্বন্ধে মত
দিলা মহেশ্বর।

মাসহ পরিণয়
যা'ব শুভফল,
া সম্বন্ধ করে ঋষি
দেবতা সকল ॥

( ৮।৯ )

পরে দয়াময় দেব
প্রভু হরি মতে
করিয়া মন্থনদণ্ড
মন্দর পর্ব্বতে।

বাসুকি মন্থন-রজ্জু
এ' ভাবে সাগরে—
মন্থন করিলা দেবা-
সুর শুভ তরে।

গিরিরাজ সহ
সেই শুভ কথা হয়,
কার্য্যসিদ্ধি তরে
সবে উৎকণ্ঠিত রয়।

দেবদেব মহেশ্বর
হইবে সদয়,
সম্পূর্ণ করেন তাহা
উচিত সময় ॥

এই সর্ব্বপ্রিয় কার্য্য
সুখের নিদান,
শেষকালে হ'ল
পূর্ণ, কৃষ্ণের বিধান।

মন্থনের শ্রেষ্ঠ ফল
লক্ষ্মীর উদ্ভব
লক্ষ্মী-পরিণয় কিংবা
সার ফল তার ॥

अभूत् सुधाकरसुधाश्रीसम्भूत्यादिकं तदा ।
कृष्णकण्ठग्रहाद्वृद्धं श्रियोमाया विशेषतः ॥ १० ॥

( शिव॰पक्षे ) तदा, सुधाकरस्य शिवचूडाशशाङ्कस्य सुधायाः श्रियाश्च ( शोभायाश्च ) सम्भूतिः वृद्धिः इत्यादिकम् ( आदिपदेन देवादीनामानन्दादेः परिग्रह ) अभूत् । कृष्णकण्ठः शिवः तद्ग्रहात् तत्कृतग्रहणेन, उमायाः श्रिया शोभया विशेषतो वृद्धम् भावे निष्ठा ।

( पक्षान्तरे ) तदा—मथिते क्षीरोदे, सुधाकरस्य चन्द्रस्य अमृतस्य श्रियो लक्ष्म्याश्च सम्भूतिः जन्म इत्यादिकम् ( आदिपदात् पारिजाताद्युत्-त्तिपरिग्रहः ) अभूत् । कृष्णस्य विष्णोः कण्ठग्रहात् कण्ठदेशाश्लेषात् स्वयंवरभावेन विष्णुपरिणयादितिभावः माया लक्ष्म्या. श्रियः शोभायाः विशेषतो वृद्ध वृद्धिः अभूदिति शेषः ॥ १० ॥

[ ১০ ]

তখন শঙ্কর-মৌলি-
শশাঙ্ক স্ববিল—
অমৃত, অপূর্ব্ব শোভা
তায় উপজিল।
আর, কত নৃত্যগীত
গিরিগৃহে হয়,
নীলকণ্ঠে ধরি' উমা
শোভে' অতিশয়॥

[ ১০ ]

তখন ক্ষীরোদ হ'তে
উঠিল চন্দ্রমা
সুধা আদি উঠে আর
উঠিলেন রমা।
স্বয়ংবরা তিনি হরি
কণ্ঠে আলিঙ্গিতা
( মরকতে হেম সম )
বিশেষ শোভিতা॥

**स्थूलमूलक्रमक्षीणकमनीयाङ्गुली पदौ ।**
**चाम्पेयकलिकाजालचुम्बितौ पल्लवाविव ॥ ११ ॥**

( ১১ )

( উমা ও লক্ষ্মীর রূপবর্ণনা। ) *

স্থূল-মূল ক্রমক্ষীণ বরণে উজল
সুশ্লিষ্ট অঙ্গুলি রম্য চরণযুগল।
চম্পক কলিকাগুলি যেন কিশলয়
চুমিয়া র'য়েছে বুঝি হেন মনে হয়॥

---

* ১১ হইতে ১৮ শ্লোক পর্য্যন্ত শিবলীলা পক্ষে উমা রূপবর্ণনা এবং পদ্মাক্ষর লক্ষ্মী রূপবর্ণনা। অতএব ইহাতে দুইটি করিয়া অনুবাদ পদ্য প্রদত্ত হইল না। ১৯ শ্লোকে তাহা পরিষ্কৃত ভাবে বুঝা যাইবে।

जङ्घां सुसंहताकारां लावण्यामृतवर्षिणीम् ।
पुष्पस्तवकविन्यासविशेषरचितामिव ॥ १२ ॥

( ১২ )

নাতিহ্রস্ব নাতিদীর্ঘ জঙ্ঘা সুগঠন
লাবণ্য-অমৃতধারা করিছে বর্ষণ।
কুসুম-স্তবকে যেন করি সুবিন্যাস
রচিলা বিধাতা শিল্প নৈপুণ্য প্রকাশ॥

वह्निशौचोपसंव्यानान्तरालोल्लसितप्रभम् ।
कान्तिकोमलतालीलास्थलमूरुयुगादिकम् ॥ १३ ॥

( ১৩ )

পরিধানে অগ্নি-শুদ্ধ হেমময় শাটী
না পারে ঢাকিতে উরু-আভা পরিপাটী।
কান্তি আর কোমলতা দুই সখী মিলে
ও সকল অঙ্গে যেন 'লুকোচুরি' খেলে॥

मणिकाञ्चीद्युतिच्छन्नां वसनप्रान्तयन्त्रिताम् ।
कटिं क्षीणां स्वलावण्यप्रकाशाभावखेदतः ॥ १४ ॥

( ১৪ )

বক্ষ চন্দ্রহার আভা বসন-কসন
বাধিয়াছে কটিদেশে করি' আবরণ।
আপন লাবণ্য রূপ প্রকাশ অভাব-
দুঃখে যেন ধরে তাহা অতি ক্ষীণভাব ॥

मज्जन्नाभिसरोगर्भे श्रीफलं स्तननिर्जितम् ।
यानुदस्थापयद्‌ भङ्गान् तदात्मकवलित्रयम् ॥ १५ ॥

( ১৫ )

স্তন-শোভা সহ দ্বন্দ্বে পরাভব লাজে
ঝাঁপ দিল বিল্বফল নাভিহ্রদ মাঝে;
তাহাতে লহরীমালা উঠিয়া উপরে
ত্রিবলী আকারে বুঝি সুষমা বিতরে ॥

शिराकङ्काल-सन्धानव्यक्तिशून्यां सुवर्त्तुलाम् ।
नवनीतमृणालीभिर्निर्म्मितामिव दोर्द्वयीम् ॥ १६ ॥

( ১৬ )

শিরা বা কঙ্কালচিহ্ন লক্ষ্য নাহি হয়
সুবর্ত্তুল কিবা মনোরম বাহুদ্বয়।
নবনীত দিয়া বুঝি বিধি বিচক্ষণ
অথবা মৃণাল দিয়া করিলা গঠন।

बिम्बोष्ठमुन्नसं कान्त-कपोलं कमलेक्षणम् ।
मुखं यद्बन्धुताबन्ध-श्लाघ्यमानो सुधाकरः ॥ १७ ॥

( ১৭ )

পক্ক বিম্বফল সম বক্ত ওষ্ঠাধব
পদ্মনেত্র চাক নাসা কপোল সুন্দব ।
কিবা মুখ যা'ব বন্ধুরূপে হয়ে গণ্য
সুধাকব আপনাবে মনে কবে ধন্য ॥

ललाटफलकं प्रान्तकान्तकुञ्चितकुन्तलम् ।
मेघाच्छन्नार्द्धबिम्बेन्दुसुन्दरं कान्तिमन्दिरम् ॥ १८ ॥

( ১৮ )

সুন্দব ললাটপট্ট,—তিন প্রান্তদেশ—
উর্দ্ধ, বাম ও দক্ষিণে আকুঞ্চিত কেশ ।
নব জলধব-মালা বক্তে অ'শে পাশে
যেন অর্দ্ধচন্দ্রখণ্ড তাবি মাঝে হাসে ॥

बिभ्रत्यवयवांश्चान्यान् सुरम्यानन्यदुर्लभान् ।
मूर्त्तेव श्रीः सदानन्दतृप्तिसम्पादनी शिवा ॥ १९ ॥

( ১৯ )

অঙ্গ ও প্রত্যঙ্গ সব
সুন্দর তাঁহার
সে সৌন্দর্য্য তুলনার
স্থান নাহি আর।
মূর্ত্তিমতী শোভা যেন
শৈলসুতা শিবা
সদানন্দে তৃপ্তিদান
করিলেন বিবা !

( ১৯ )

রমণীয় সর্ব্ব অঙ্গে
শোভিতা কমলা
তাঁহার তুলনা তিনি
জগতে একলা।
কল্যাণদায়িনী তিনি
দৃশ্য তনু ল'য়ে;
তৃপ্ত প্রীত সাধুজন
সে রূপ হেরিয়ে॥

सा सकृद्भावतरलं चक्षुः खञ्जनगञ्जनम् ।
पतिलोचनयोर्न्यस्य प्रेक्षमाणा महीतलम् ॥ २० ॥

( ২০ )

উমা, পরিণয়ে শুভ-
দৃষ্টি অবসরে
খঞ্জন গঞ্জন আঁখি
পতিনেত্র' পরে।
রাখিলেন একবার
ভাবে ঢলঢল,
তখনি ফেরিলা নম্র-
মুখে মহীতল॥

( ২০ )

খঞ্জন-গঞ্জন ভাব-
তরল নয়ন,
একবার পতিনেত্রে
করিয়া স্থাপন।
তখনি তা' নামাইয়া
ভূতলের পানে
চাহিলেন লক্ষ্মী—
লজ্জা করি শুভদানে॥

ऐशरागारुणमुखी जातरोमाञ्चकञ्चुका।
प्रीतिप्रफुल्लैर्देवाद्यैर्ददृशे पतिसङ्गता ॥२१॥ ( कुलकम् )

(शिव०पक्षे) एकादशादिश्लोकस्थानां पद्मौ इत्यादि कर्म्मपदानाम् ऊनविंशश्लोकस्य दिदृक्षतीतिपदेन सम्बन्धः। तद्विशेषणञ्च पक्षद्वय एव समानम्। उभयत्रैव पदानीति पञ्चकदस्य रूपम्। मेघाच्छन्न मेघावृतम् अर्द्धबिम्बम् अर्द्धमण्डलं यस्य सचासौ इन्दुश्चेति तद्वत् सुन्दरम्। मूर्त्ता मूर्तिमती श्रीः शोभा इव सदानन्दस्य शिवस्य तृप्तिसम्पादनी पतिसङ्गता शिवा उमा देवाद्यै ददृशे। ऐशरागः शिवप्रेम।

( पक्षान्तरे ) स्थूलेत्यादिश्लोकानामर्थ उभयत्र तुल्य। ऊनविंशी-कविंशयोर्विशेषस्तु—मूर्त्ता मूर्त्तिमती प्रकटितशरीरा इति यावत् शिवा मङ्गलस्वरूपा मङ्गलकर्त्री वा सताम् आनन्दतृप्तिजनित्री श्रीः लक्ष्मीः। ऐशरागः पतिप्रेम। अत्र पक्ष 'मूर्त्तेव' इत्यत्र, वाक्यालङ्कारे, पादपूरणे वा एवकारः, तत एवे परे आकारलोपः॥ ११-२१॥

| ( ২১ ) | ( ২১ ) |
|---|---|
| শিব প্রতি অনুরাগে<br>আরক্ত বদন | আরক্ত হইল মুখ<br>পতি অনুরাগে |
| রোমাঞ্চ কঞ্চুকে করি'<br>সর্ব্বাঙ্গে ধারণ। | রোমাঞ্চ পুলক সব<br>অঙ্গে তাঁর জাগে। |
| পার্ব্বতীর পতি সহ<br>শুভ - সম্মিলন, | পতিসহ সম্মিলিতা<br>লক্ষ্মীরে এ ভাবে |
| প্রীতিফুল্ল নেত্রে হেরে<br>দেব আদি গণ॥ | প্রীতিপূর্ণ নেত্রে হেরে<br>দেবতাদি সবে॥ |

अनन्यलभ्यां तां लब्ध्वा यतो भावान्वितो विभुः ।
तेन वृन्दारकाः सर्व्वे प्राप्तकामाः प्रजज्ञिरे ॥ २२ ॥

( शिव०पक्षे ) विभुः शिवः यतः भावान्वितः भावविशेषवान् । तेन वृन्दारकाः देवाः प्राप्तकामा जाताः, शिवस्य भावविशेषेणैव देवाः पुनरुज्जीवित कामं प्राप्तवन्तः अथ च देवतानां शिवनन्दनजन्मानुकूलकामनासिद्धिर्जाता । (पक्षान्तरे) विभुः विष्णुः । विष्णोरभिप्रायविशेषं दृष्ट्वा लक्ष्म्याश्चिरस्थेमानं दुर्व्वासःशापावसानञ्च मन्यमानाः देवाः प्राप्तकामाः सिद्धमनोरथा जाता इति भावः ॥ २२ ॥

| ( ২২ ) | ( ২২ ) |
|---|---|
| লভিয়া অনন্যলভ্য সেই উমা-ধনে | অন্যের অলভ্যা লক্ষ্মী লভি পত্নীভাবে |
| ভাবের হিল্লোল উঠে মহেশ্বর-মনে। | হ'ন প্রভু নারায়ণ উল্লসিত ভাবে। |
| তাহাতে বাঁচিল কাম, শিবের কুমার | তাহাতেই দেবগণে পূরিল বাসনা— |
| জনমিবে দেবে হ'ল এ আশা সঞ্চার ॥ | ('তস্মিন্ তুষ্টে জগৎ তুষ্ট' এই তো ঘোষণা)॥ |

शिवामृतभुजो देवा विष्णुमायामतिक्रमाः ।
धामाहुः सभवं यस्य फलं परपराभवः ॥ २३ ॥

( शिव०पक्षे ) अमृतभुजः, सत्यपालकाः कर्म्मफलभोक्तारो वा देवाः अतिक्रमाः द्रुततराः सन्तः, विष्णुमायां शिवा या विष्णुमाया-

नाम्नी प्रकृतिः दुर्गेति प्रसिद्धा पूर्व्वं दाक्षायणी, तामेव शिवाम् उमारूपा समव भवस्य शिवस्य योगपत्त्येन उमा शिव च युगपत् इत्यर्थः धाम कैलासम् ऊहुः प्रापितवन्तः, यस्य धामप्रापणस्य परपराभवः परेषा तारकासुरप्रमुखशत्रूणा पराजयः फलम्।

(पक्षान्तरे) विष्णुमाया विष्णोर्मोहिनी-मूर्त्यादिपरिग्रहरूपा या माया तया मतिक्रमौ बुद्ध्युत्साहौ येषा ते देवाः शिवामृतभुज. शिव शुभकर यदमृत तद्भुजः तस्य पान कृतवन्त. समव समङ्गल धाम तेजः ऊहुः धृतवन्तः असुरास्तु नामृत प्राप्तवन्त इत्यमृतपानलब्धतेजोभिर्देवैस्ते जेष्यन्ते इत्येतत् फलम् इति भावः॥ २३॥

| (২৩) | (২৩) |
|---|---|
| উমা সেই বিষ্ণুমায়া<br>শিবা,—যিনি সতী,<br>শিবসহ তাঁরে লয়ে<br>কৈলাস বসতি,<br>সত্যভোগী দেবগণ—<br>কার্য্যক্রমে দ্রুত;<br>যা'র ফলে শত্রুগণ<br>হবে পরাভূত। | বিষ্ণুর মোহিনী মায়া<br>রচিত মনোধা-<br>মতে মাত্র দেবগণ—<br>পান শুভ সুধা।<br>তাহে হয় পূর্ব্ব তেজ<br>মঙ্গল সহিত,<br>ফলে যা'র দৈত্যগণ<br>হ'বে পরাজিত॥ |

नृपप्रभृतयः सर्व्वे चिरान्मातरमागताम्।
अवलोक्य प्रमोदाश्रुधारास्त्वत्र जगाहिरे॥ २४॥

(शिव०पक्षे) वृषप्रभृतयः। शिववाहनवृषादयः। मातरम् उमाम्।
(पक्षान्तरे) वृषा इन्द्रः, तत्प्रभृतयः, मातर लक्ष्मीम्॥ २४॥

| (২৪) | (২৪) |
|---|---|
| শিবের বাহন বৃষ<br>আর নন্দী আদি<br>আনন্দাশ্রু জলে<br>স্নান করে নিরবধি।<br>জননীর আগমন<br>আপন মন্দিরে<br>দরশন করি' বহু<br>বৎসরের পরে॥ | বহুকাল পরে ইন্দ্র<br>আদি দেবগণ,<br>প্রত্যক্ষ করিয়া লক্ষ্মী-<br>মা'র আগমন।<br>অভিষিক্ত হয় অশ্রু<br>সলিল ধারায়<br>ভাবি' পুনঃ পূর্ব্বভাব<br>আসিবে ত্বরায়॥ |

सा च तान् पुत्रभावेन प्रतिनन्द्य सनातनी।
आकाङ्क्षां पूरयामास भक्तानां भक्तवत्सला॥ २५॥

| (২৫) | (২৫) |
|---|---|
| যিনি সতী তিনি উমা<br>শক্তি সনাতনী<br>লইলেন পুত্রভাবে<br>তা'দিগে আপনি।<br>এ'রূপে ভক্তের বাঞ্ছা<br>করেন পূরণ<br>ভক্তবৎসলতা তাঁর<br>স্বভাব ভূষণ॥ | বিষ্ণুর পালন শক্তি<br>কমলা শাশ্বতী<br>পুত্রভাবে সুরগণে<br>ল'য়ে ভগবতী।<br>ভক্তজন মন-সাধ<br>পূরণ করিলা<br>ভুবনে বিদিতা তিনি<br>ভক্ত-বৎসলা॥ |

मन्दारगन्धसंपृक्तः प्राणिनां क्लमनाशनः।
ववावपूर्व्वसंस्पर्शो मन्दमन्दं समीरणः॥ २६॥

( ২৬ )

মন্দার কুসুম গন্ধে সুরভি পবন
মন্দ মন্দ প্রবাহিত হইয়ে তখন—
আনন্দ অমৃতধারা ঢা'লে পরশনে
অনুমাত্র ক্লান্তি নাহি রহে জীবগণে॥ *

कोमला मधुराः स्निग्धाः
कुतस्त्या निनदाः शुभाः।
सर्व्वतः सञ्चरन्ति स्म
प्रीणयन्तः शरीरिणः॥ २७॥

( ২৭ )

অতি সুমধুর স্নিগ্ধ কোমল নিক্কণ
কোথা হ'তে আ'সে ভেসে নাহি নিরূপণ।
সর্ব্বত্র হইল যাহা শ্রবণগোচর
যত প্রাণী—হ'ল মুগ্ধ, শুনি সেই স্বর॥

उत्सवश्च प्रमोदश्च सर्व्वतः समचीयत ।
निरुत्सवनिरानन्द-दशा चासावलीयत ॥ २८ ॥

( ২৮ )

উৎসব আনন্দ স্রোত ভুবনে বহিল,
এ' হেন অপূর্ব্ব ভাব সকলে বুঝিল।
নিরুৎসব নিরানন্দ দশা এতদিন
যাহা ছিল তাহা হয় সহসা বিলীন ॥

जगुः किन्नरगन्धर्व्वा ननर्त्ताप्सरसां कुलम् ।
नेदुश्चामरवाद्यानि तस्मिन् शुभमहोत्सवे ॥ २९ ॥

( ২৯ )

এই শুভ মহোৎসব সময়ে সতত
গন্ধর্ব্ব কিন্নরে করে মনোহর গীত।
তুলিল অপ্সরাগণ নৃত্যের হিল্লোল,
উঠিল অমর বাদ্যে সুমধুর রোল ॥

विस्मृताखिलवृत्तीनां
प्रमोदाक्षिप्तचेतसाम् ।
ससम्भ्रमाणां सिद्धाना-
मिति वाचस्तदा श्रुताः ॥ ३० ॥

( ৩০ )

অপর নিখিল কার্য্য হ'যে বিস্মরণ
প্রমোদ সাগরে করি মন সমর্পণ,
কহিলা আবেগভরে সিদ্ধ-দেবগণ—
সকলে করিল তাহা সানন্দে শ্রবণ ॥

शान्ते चिराय चर चेतसि चेतनाना-
मानन्दसान्द्रतरता त्वरतां विवृद्ध्यै ।
रे खेद सम्प्रति विधेहि महाप्रयाणं
भूयस्त्रिलोकजननी शिवसर्गयुक्ता ॥ ३१ ॥

( शिव०पक्षे ) त्रिलोकजननी उमा शिवसर्गयुक्ता शिवेन सर्गः संसर्गः तद्युक्ता महेश्वरसङ्गता । ( पक्षान्तरे ) त्रिलोकजननी लोकमाता लक्ष्मीः शिवसर्गयुक्ता, मङ्गलजनने नियुक्ता जगतो यथा पूर्ववत् मङ्गलं स्यात् तत्परायणा इति भावः । शिवनीपक्षे दैवादिक-सृजधातुरन्यपक्षे च तौदादिक-सृजधातुः सर्गइत्यस्य प्रकृतिरिति बोध्यम् ॥ ३१ ॥

इति कविकुल-लालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्य्यसूनोः
श्रीपञ्चाननतर्करत्नभट्टाचार्य्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये
उद्वाहो नामाष्टमः सर्गः ॥ ७ ॥

( ৩১ )

( সিদ্ধগণের উক্তি )

চিরতর স্থান ধরি' জীবের হৃদয়োপরি
শান্তি দেবি ! কর বিচরণ ।

বৃদ্ধিপথ অভিমুখে ঘনতা লইয়ে বুকে
চল হৃষ! ত্বরিত চরণ।
অবে খেদ, তোর মহা- প্রযাণে বিলম্ব সহা
যায় না তো, যা যা, অতিদ্রুত।
অখিল জগৎ-মাতা * হ'ন শিবসর্গ † রতা
পুনরায় সেই পূর্ব্বমত।

সর্ব্বমঙ্গলোদয় নামক দ্ব্যর্থকাব্যে উদ্বাহ নামক অষ্টমসর্গ সমাপ্ত।

---

* অখিল জগৎ মাতা—শিবলীলাপক্ষে—উমা, পক্ষান্তরে—লক্ষ্মী।

† শিবসর্গ—শিবলীলাপক্ষে—শিবের সহিত মিলন। পক্ষান্তরে—শিবসর্গ—কল্যাণসৃষ্টি,—জগতের মঙ্গল সম্পাদন।

অর্থাৎ 'উমা শিবের সহিত সম্মিলিতা হইয়াছেন এখন সকলেই শান্তিলাভ আর আনন্দভোগ করুন, দুঃখ দুর্দ্দশা একেবারে দূর হউক'—এই কথা সিদ্ধগণ বলিতে লাগিলেন।

পক্ষান্তরে—'মা লক্ষ্মী—সকলের কল্যাণ সাধনে তৎপরা হইলেন—শ্রীনষ্ট জগৎ পুনরায় তাঁহাকে প্রাপ্ত হইয়াছে—তিনি এখন জগতের মঙ্গলসম্পাদনে রতা, অতএব সকলেই শান্তি ও মহানন্দভোগ করুন, দুঃখ চিরকালের মত দূর হউক।' ইহা সিদ্ধগণ বলিতে লাগিলেন।

# नवमः सर्गः ।

यदखिलेशपुरं रहितं श्रिया-
ऽभवदथाजनि तत्सुमहोज्ज्वलम् ।
विविधवाद्यरवैरभिपूरितं
हलहलाध्वनिभिश्च जयादिभिः ॥ १ ॥

| ( ১ ) | ( ১ ) |
| --- | --- |
| এতদিন শোভাহীন | বৈকুণ্ঠ অখিলপতি- |
| মহেশ্বর পুর, | নারায়ণ-স্থান, |
| উমা আগমনে সেথা | নাহি ছিল যেথা |
| উৎসব প্রচুর। | দৃশ্য লক্ষ্মী অধিষ্ঠান। |
| পুর পূরি' উঠিল | তাঁর আগমনে আজ |
| বিবিধ বাদ্যধ্বনি | পূর্ণ মহোৎসব |
| হর্ষ কলরব করে | বাজে বাদ্য, জয় আদি * |
| জয়াদি যোগিনী॥ | করে হর্ষরব॥ |

* জয় ও বিজয় বৈকুণ্ঠেশ্বরের দুইজন দ্বারপাল এবং অন্য কিন্নর আদি পদদ্বারা বুঝিতে হইবে। ২৮ শ্লোক পর্যন্ত—হর গৌরী ও পক্ষান্তরে লক্ষ্মী-নারায়ণ সেবা—কিন্নর কিন্নরীগণ একভাবেই করিয়াছিলেন—এই জন্য এক প্রকার পদ্যে উভয় পক্ষের বর্ণন আছে।

शुकपिकादिकसुस्वरपक्षिणो
मुनिगणाश्च शुभस्तवगायनाः ।
नवनवप्रमदैर्नवतां गतं
पुरमदो मुखरं विदधुः क्षणात् ॥ २ ॥

( ২ )

শুক ও পিক আদি সুস্বর বিহঙ্গ—
গায়, স্তুতিগীতে বত মহামুনি সঙ্ঘ।
নব নব আনন্দ উৎসবে নবাকার
সেই পুরে ধ্বনি প'রে ধ্বনি তুলে আর ॥

मणिमये विनिवेश्य महासने
त्रिजगतां पितरावनुजीविनः ।
विमलचन्दनकुङ्कुमचन्द्रमो-
मृगमदैरलिपन् निजधामगौ ॥ ३ ॥

( ৩ )

জগতের মাতা পিতা সেই দম্পতিরে
বসা'য়ে মন্দিরে রত্নসিংহাসন'পরে।
কর্পূর কুঙ্কুম আর চন্দন কস্তুরী
বিলেপন দেয় অঙ্গে কিঙ্কর কিঙ্করী ॥

कतिपये नलिनैर्नलिनेक्षणौ
सुरभिपुष्पमयैरपि दामभिः ।
अलमकुर्व्वत साधु तथापि ते
न च परां परितुप्तिमुपागमन् ॥ ४ ॥

( ৪ )

কমল নয়ন সেই দম্পতি যুগলে
ক'জনে সাজায় পুষ্প মালা ও কমলে।
উত্তম হ'লেও সাজ ও-বরাঙ্গ সব
হ'ল না ভাবিয়া তৃপ্তি না পায় পরম ॥

कतिपये जननीतनुवेदना
कमलकैरवमालिकयापि चेत् ।
नयनयोरमृतं स्रगियं पुनः
किमिह कार्य्यमिदं समशेरत ॥ ५ ॥

( ৫ )

হেরিলে জুড়ায় আঁখি সুধাস্পর্শে যেন
কমল কুমুদমালা রচিয়ে এ হেন—
ভাবিছে সেবক—অঙ্গ যদি ব্যথা পায়
দিব কিনা মা'এ—দোলে সংশয় দোলায় ॥

शिशिरशीत-सुवासित-वारिणा
रुचिर-चामरजेन च वायुना ।
कतिपये समयेङ्गितवेदिन-
श्चिरमुपासत तद्गतचेतसा ॥ ६ ॥

( ৬ )

সময় ইঙ্গিত বুঝি' কিঙ্কর কিঙ্করী
যোগাইল হিম শীত সুবাসিত বারি।
কেহ কেহ ঢুলাইল চামর-ব্যজন
এইভাবে সেবা করে তদ-গত-মন॥

चरणचारणकौशलयोगतो
विविधधूपविधानसुवासनात् ।
व्यदधत प्रभुसेवनमञ्जसा
कतिपये चिरकांक्षितमात्मनः ॥ ७ ॥

अखिले सर्वत्र, ईशः ईशपदवाच्यः अखिलः सर्वात्मकः क्षित्याद्यष्टमूर्त्तिः ईशः इति वा अखिलेशः महेश्वरः। तत्पुरं कैलासः। अखिलस्य सर्वस्य ईशः, नाथः जगन्नाथः विष्णुश्च तत्पुरं वैकुण्ठधाम। श्रिया शोभया, दृश्यरूपया लक्ष्म्या च। सुमहोज्ज्वल महोत्सवोज्ज्वलं समुज्ज्वलतरञ्च। 'हलहला' इत्यनुकरणशब्दो हर्षकलरवबोधकः तथाविधैर्ध्वनिभिः तृतीया करणे, यद्वा 'आ'समन्तात् 'हलहल' विलिख विलिख इति ध्वनिभिः विलसनम् उमायाः पदन्यासाय स्थानशोधनम्, हरपार्वती-

नामाङ्कनं वा, लक्ष्मीनारायणेति नामाङ्कनं च । जयादिभिः जयाविजया-प्रभृतिभिः योगिनीभिः, कर्त्तरि तृतीया । जयविजयादिभि किङ्करैश्च । अनुजीविनः-अनुजीविनश्च अनुजीविन्यश्च द्वन्द्वैकशेषात् अनुजीविन इति । ते च दम्पत्योर्यथायोग्यमुन्नेयाः । वर्णनमिदं यथार्हं पद्यद्वये योजनीयम् । अन्यत् सुगमम् ॥ १-७ ॥

( ৭ )

আরো কতিপয় ভক্ত দাস দাসী মনে
সাধ ছিল বহুদিন, সেবিবে যতনে,
প্রভুর-যুগলরূপে ; সে সাধ পূরায়
সুবাসিত ধূপদান চরণ সেবায় ॥

**बहुविधैर्बलिभिर्बलिवन्दितौ**
**कतिपये परमौ परमार्चयन् ।**
**मधुवरावपरे च गतक्रिया**
**ददृशुरेव धनं कृपणा इव ॥ ८ ॥**

( ৮ )

বহুবিধ উপচার বলি-সম্পূজিত *
প্রভুর যুগলরূপে করে নিবেদিত।
কেহ করে অনিমিষে শুধু দরশন
সে রূপ তাদের যেন কৃপণের ধন ॥

---

* গোপবন বা জনবনে বন্দীগণ সাধকগণের আরাধিত। দৈত্য-রাজ বলির সম্পূজিত এরূপ অর্থও লক্ষ্মীনারায়ণ পক্ষে হইতে পারে।

स्वयमभूषयदिन्दुसहोदरा-
ननरुचिं दयितां वरयन् विभुः ।
निरतिशायन-शक्तिभृदीश्वरो
न खलु साधनभावमपेक्षते ॥ ९ ॥

( शिव०पक्षे ) विभुः,—शिवः, इन्दुसहोदराननरुचिं दयितां वरयन् मानयन् आद्रियमाण इत्यर्थः स्वयम् आत्मना अभूषयत्; इन्दुसहोदरा चन्द्रसदृशी आननरुचिः मुखकान्तिर्यस्याः ता दयिता प्रियाम् उमाम्, परिजनानपेक्षः स्वयमलञ्चकार, स्वयमेव तस्या भूषणमभूदिति तु परमार्थः, एतेनार्द्धनारीश्वरभाव उक्तः । एवमलङ्कर्त्तृत्वमीश्वरस्य सर्व्वातिशायिशक्तित्वादेवेत्याह—उत्तरार्द्धेन । निरतिशायनान्निः नास्ति अतिशायन अतिक्रमकर्त्तृ यस्याः सा निरतिशयेत्यर्थः सा चासौ शक्तिश्चेति ता बिभर्त्ति पुष्यति तादृशः ईश्वरः, साधनभावं साधनानाम् उपकरणादीना भावं सत्तां नापेक्षते खलु निश्चये ।

( विष्णुलीला पक्षे ) विभुः विष्णुः दयिताम् लक्ष्मीं इन्दुसहोदरायाः चन्द्रसमानगर्भायाः—( चन्द्रस्य लक्ष्म्याश्च क्षीरोदगर्भसम्भवत्वात् ) आननरुचिं मुखकान्ति वरयन् उर्व्वीं महतीं कुर्व्वन् स्वयमभूषयत् आत्मानमेव तस्या भूषणं कृतवान्, स्वरक्षित त्वामयामासेत्यर्थः । अन्यत् समानम् ॥ ६ ॥

( ৯ )

ইন্দুসম-মুখকান্তি-
প্রিয়া অনুরাগে
স্বয়ং ভূষণ হন
শিব অর্দ্ধভাগে।
ঈশ্বর নিরতিশয়
শক্তির আধার
অন্য বস্তু নিরপেক্ষ
তাঁ'র ব্যবহার॥

( ৯ )

প্রিয়া ইন্দু-সোদরার *
রূপ চমৎকার
আরও বৃদ্ধি তরে হরি
দেন অলঙ্কার
নিজবক্ষে স্থান তাঁরে,
ঈশ্বর অপার-
শক্তি যিনি, নাহি কার্য্য
অন্য দ্রব্যে তাঁর॥

लीलां चकार बहुधा समयोपपन्नां
युक्तोभवो यदुमयाविधुरात्मशक्त्या।
तद्द वेत्ति कोऽमरवरोऽपि कृतप्रयत्नो
नैवावगन्तुमलमेष निसर्गसर्गः॥ १०॥

(शिव॰पक्षे) भव शिव अविधुरस्य अविकलस्य सतीदेहत्यागानन्तर या विधुरता जाता तद्रहितस्य आत्मन स्वस्य शक्त्या यद्वा अविधुरया शिवगङ्गलाभादविकलया आत्मशक्त्या उमया युक्तः समयोपपन्ना समयोचितां बहुधा बहुप्रकारा लीलां केलिं यच्चकार, तत् यो वेत्ति सः॰ कृतप्रयत्नः अमरवरो देवराजोऽपि नैवावगन्तुमल समर्थ, एष निसर्ग सर्ग स्वाभाविक घटना, महेश्वरस्य

* চন্দ্র ও লক্ষ্মী এক ক্ষীরোদ সাগর মন্থন হইতে উৎপন্ন; ইন্দুসহোদরা=লক্ষ্মী।

कालानुरूपा लीला कृत्स्नशोऽवगन्तुं केनापि न शक्यते एष एव स्वाभाविक नियमः। समयोपपन्नामित्यनेन शिवोमाकेलिविलासस्य दीर्घकालीनत्वमुक्तं यथा ब्रह्मणो मुहूर्त्तमात्रेण मनुष्याणां कति युगानि व्यतियन्ति, शिवस्य मुहूर्त्तन्तु तदपेक्षया द्राघीय इति तन्त्रशास्त्रार्थात्।

( विष्णु०पक्षे ) अभवो जन्मरहितो विधुर्विष्णुः आत्मशक्त्या मया लक्ष्म्या युक्तः समयोपपन्ना 'सम्भवामि युगे युगे' इत्यादि प्रतिज्ञानुरूपा बहुविधा लीलां यचकार—रामावतारे सीतया युक्तः, कृष्णावतारे रुक्मिण्या युक्तः वैकुण्ठे स्वयं लक्ष्म्या च युक्तः यन्नानाविधा लीला चकार, यत् + उ इति पदद्वयम्। तत् को वेत्ति। अमरवरो ब्रह्मा। अन्यत् पूर्व्ववत् ॥१०॥

( ১০ )

আপন সময় মত
যে বিবিধ লীলারত
পূর্ণ আদ্যশক্তি উমা সনে।
হ'ন মহেশ্বর ভব
কেবা জানে সেই সব
বাসবও না জানে যতনে॥

( ১০ )

স্বপ্রতিজ্ঞা-অনুরূপ
শক্তিযোগে নানারূপ
ধরি হরি লীলা লক্ষ্মী সহ।
করেছেন যত যত
তাহা কে বা অবগত ?
ব্রহ্মও না জ্ঞাত পিতামহ॥

गुणयुतोऽपि न यो गुणसंयुतो
जडतमोऽपि चितामधिनायकः।
अणुतमोऽपि महत्तमविग्रहो
यदुगुरोऽपि गुणेन न लिप्यते ॥ ११ ॥

त्रिजगतां रचनादिककर्म्मणा
सुविदितोऽपि च कर्म्मविवर्ज्जितः।
तदखिलेश्वरवृत्तिषु युज्यते
न हि रतेषु कुतोऽपि पराभवः ॥ १२ ॥
(युग्मकम्)

(शिव०पक्षे) लीलाशब्दस्य सामान्यवाचिनो रतपरत्वं भगवतस्तदाचरणं तस्य दीर्घकालीनत्वं च विशेषेण बोधयितुं युग्मकमाह गुणेत्यादि। सर्व्वस्वरूपोऽचिन्त्यशक्तिश्च भगवाञ्छिवः तस्य रतानि तर्केण वा कालेन वा न व्याहन्तुमर्हाणि इति भावः, सगुण निर्गुणत्वादि-विरुद्धधर्म्मवत्त्वमीश्वरस्य एव रतानि तदभावश्च तत्रास्ति मायायोगतदतीतत्वयोः सत्वात् इति तात्पर्यम्। अक्षरार्थस्तु सार्द्धश्लोकस्य सुगमः, चरमश्लोकस्योत्तरार्द्धस्य तु—तदखिलेश्वरवृत्तिषु—स चासौ अखिलेश्वरो महेश्वरश्चेति तदखिलेश्वरः तद्वृत्तिषु तन्निष्ठेषु तदीयव्यापारविशेषरूपेष्विति वा रतेषु प्रागुक्तबहुधालीलान्तर्गतसुरतेषु कुतोऽपि न खलु पराभवो व्याघात. युज्यते योग्यो भवति, कुतोऽपीत्यनेन लौकिकालौकिकव्याघातकारणग्रहणम्।

(विष्णु०पक्षे) लीलेयं न सुरतरूपात्र प्रस्तुता—किन्तु भक्तानुग्रहरूपा,—स चानुग्रहः—साकारलीलया, कथञ्च निराकारस्य सतः साकारत्वमित्येतदुपपादयितुं तद्भक्तानां तदनुग्रहभाजनानां फलञ्च प्रदर्शयितुं युग्मकमाह। तत्र सार्धश्लोकः सुगमः, शिष्टस्यार्थस्तु—स चासौ अखिलेश्वरो विष्णुश्चेति तदखिलेश्वरः तद्वृत्तिषु तदीय व्यापारेषु प्रादुर्भावे चरितेषु च ये रताः अनुरक्ताः तदालम्बनेन भजनपराः

तेषु कुतोऽपि पुरुषात् पराभवः हानिः न युज्यते । विष्णुः स्वशक्ति-योगेन यां यां लीला कृतवान् तत्तत्त्वं ब्रह्मादीनामपि देवश्रेष्ठाना दुर्ज्ञेयम् तच्छक्तेर्दु र्ज्ञेयत्वात्तादृशदुर्ज्ञेयमायाश्रिततदीयकर्म्मजातभक्तानान्तु कुतो-ऽप्यभिभवो नास्तीति भावः । ११-१२ ॥

( ১১।১২ )

নির্গুণ হ'য়েও যিনি
গুণের আশ্রয়।
প্রধান চিন্ময় তবু—
হ'ন অচিন্ময়।
সূক্ষ্মতম হইলেও
পরম মহান্।
সুখ-সঙ্গহীন কিন্তু
সুখের নিধান।
ত্রিভুবন সৃষ্টি আদি
কর্ম্মে সুবিদিত—
হ'লেও প্রকৃত পক্ষে
কর্ম্ম-বিবর্জ্জিত।
সে অদ্ভুত বিশ্বপতি
ঈশ্বর লীলায়।
নাহি মানে শক্তি-ক্রীড়া
কিছুরই বাধায়।

o o o

( ১১।১২ )

গুণী হইলেও যিনি
গুণ বিবর্জ্জিত।
চেতনের অধিপতি
তথাপি অচিত।
পরমাণু তিনি তবু
পরম মহান্
সুখ লেশহীন কিন্তু—
নিত্যসুখবান্।
বিশ্বসৃষ্টি-আদি কর্ম্মে
হ'য়েও বিশ্রুত,
কর্ম্মহীন যিনি
সেই ঈশ্বর অদ্ভুত।
তাঁ'র আচরণে যাঁ'রা
অনুরক্ত হয়।
তাঁ'দের কাহারো কাছে
নাহি পরাজয়।

o o o

(গেল কত দীর্ঘকাল
সে তেজ অদ্ভুত।
নাহি হয় চ্যুত তাহে
খিন্ন পুরুহূত। *
পাঠা'ন অনলে, তিনি
হ'যে পাবাবত—
পশিলেন রতিগৃহে,
লজ্জায় বিব্রত—
হর-গৌরী ; রুষ্টা গৌরী
শাপেন, অমরে
পুত্র না হইবে কারো
দেবীর উদরে।)

(ঈশ্বরে বিরুদ্ধ ভাব
যে সব বর্ণিত,—
মায়ার প্রভাবে তাহা
হয় সমর্থিত।
অমায়িক তাঁ'র রূপ
সত্য নির্ব্বিকার,
নিরঞ্জন স্বপ্রকাশ
পূর্ণ চিদাকার॥
এই তত্ত্ব হরি-হরে
জানিবে সমান।
উপাসক-ভেদে ভিন্ন
ভাবের বিধান॥)

शुचिगृहीततदद्भुत-बीजभाग्-
विबुधसिन्धु-तटीवन-संस्थितेः।
अजनि शक्तिभृदासुरसारहृत्
स च भवेद्व यदि को न्विह विस्मयः ॥१३॥

(शिव०पक्षे) यद्यपि तदीयरताना कुतोऽपि व्याघातो न युज्यते तथापि कालातिपातमसहमानैर्देवैरयुक्तोऽपि—स आचरित इति भाव-गर्भं शिवशुक्रस्याग्निना ग्रहणं तत्क्रमेण च कार्त्तिकेयोत्पत्तिं वर्णयति शुचीति। शुचिना अग्निना गृहीतं न तूमया,—कपोतरूपस्याग्ने-

* পুরুহূত=ইন্দ্র।

स्तत्रोपस्थित्या रतभङ्गादितिभावः। तस्य शिवस्य यत् अद्भुत विस्मयावहशक्तिक बीजं शुक्रम् तद्भजते क्रमानुसारेण तत्प्राप्नोति या विबुधसिन्धुतटीवनसंस्थितिः गङ्गातटवर्त्तिशरवणसन्निवेशः ततः शक्तिधृक्—कार्त्तिकेयः अजनि, स च आसुरसारहृत् असुरस्याय आसुरः सारः श्रेष्ठः तारकनामा त हरति लुम्पति विनाशयतीति यावत् असुरश्रेष्ठ-तारक विनाशकः सारः धन असुराणा सर्व्वस्वहर्ता वा भवेत्, अत्र के नु विस्मयः, तदर्थमेव शिवनन्दनस्योत्पत्तेः। न चातिभारोऽय साक्षान्महेश्वरतेज.-सम्भवस्येतिभावः।

(विष्णु॰पक्षे) तस्य विष्णोः अद्भुतं विस्मयावहशक्तियुक्तं बीज मन्त्रः—शुचेः बाह्याभ्यन्तरशौचवतः पुरुषाद् (गुरोः) गृहीत शुचिगृहीतं यत् तदद्भुतबीज तद्भजते भक्त्या साधयति यः—स शुचिगृहीततदद्भुत-बीजभाक्, 'विबुधसिन्धुतटीवनसंस्थितेः'—विबुधसिन्धुः सुरधुनी गगा तस्याः तटीवन तटी च वनञ्च (तटी तीरं वन जलम्) समाहारे द्वन्द्वः तत्र संस्थितेः मरणात् आसुरसारहृत्—आसुर सुरपर्यन्त उद्भिदादिकमारभ्य देवतापर्य्यन्त तत्र यः सारः स्थिरांशः चित्स्वरूपं तत्र हृत् हृदयं यस्य स आसुरसारहृत् चिदात्मध्याननिष्ठ इत्यर्थः 'यः' इति स इत्यनेनाक्षिप्यते यत्तदोर्नित्यसम्बन्धात् स यदि अजनि-शक्तिभृद् भवेद् अजनिः जन्मविरोधिनी या शक्तिः कैवल्यरूपा तद्भृत् तद्वान् भवेत् यद्वा जनिशक्तिः यया शक्त्या जन्म भवति सा शक्तिरविद्या तदभाव-वान् ब्रह्मभूत इत्यर्थः भवेत् अत्र के नु विस्मयः, सुगृहीतविष्णुमन्त्रभजनं गङ्गातीरनीरमरणम् चिन्मात्रध्याननिष्ठा चेति त्रयं प्रत्येकमेव कैवल्य-हेतुः, एकस्य पुरुषस्य तत्त्रयसङ्गतौ अपुनर्भवत्वं सिद्धमेवेति भावः ॥१२॥

( ১৩ )

ভাবি' এই শিব তেজে
　　জ্বলিবে ভূতল )
হস্ত সে মহাতেজ
　　লইয়া অনল
হিতে না পারি তায়
　　গঙ্গায় ত্যজিলা,
ঙ্গা অসমর্থা, তীরে
　　শরবণে দিলা।
াহে জন্মে কার্ত্তিকেয়;
　　দেবভাশ্রেষ্ঠ স্বয়
াঁহার বিক্রমে যদি
　　কি ইহে বিস্ময়।

( ১৩ )

শুদ্ধ যোগ্য গুরু দত্ত
　　তাঁর মন্ত্র ভজি,
গঙ্গানীর তীর স্থলে
　　কলেবর ত্যজি।
আতৃণ অমর সার
　　তত্ত্বে মন যাঁর,
বিচিত্র কি জন্মক্ষয়
　　হইবে তাঁহার?
(হয় মুক্তি এ তিনের
　　যে কিছু ঘটিলে
কিবা কথা জন্মক্ষয়
　　তিনই জুটিলে।)

सतारकायप्रबलासुराणां
　　सुधारितामर्षमदोद्धतानाम्।
तां देवसेनाप्रतिरक्षितात्मा
　　श्रियं जयादाहृत शक्तितः स्वः ॥ १४ ॥

( शिव० पक्षे ) श', अक्षितात्मा देवसेनापतिः सन्, शक्तितः सुधारितामर्षमदोद्धताना तारकायप्रबलासुराणा जयात् स्वः ता श्रियम् आहृत इत्यन्वय.। स. प्रागुक्तः शिवबीजसम्भूतः शक्तिभृत् शक्तिधरः

कार्त्तिकेय इत्यर्थः अक्षितात्मा अक्षयदेहः, देवसेनापतिः सन् शक्तितः = *स्वीयशक्तिनामकमस्त्रं प्रहृत्य*, सुधारितः सम्यगवस्थापितः शत्रुभूतेषु देवेषु योग्यतया संरक्षितः अमर्षः क्रोधो यैः ते मदोद्धताश्चेति विशेषणसमासः, तेषां सुधारितामर्षमदोद्धतानां तारकायप्रबलासुराणां तारकश्च अयप्रबलासुराश्च तेषाम्, तारकः तन्नामासुरराजः, अयप्रबलाः अयेन शुभावहविधिना तदीयतपस्यारूपेण प्रबलाः प्रचुरशक्तयो ये असुराः तेषां, कर्म्मणि षष्ठी; जयात् तान् जित्वेत्यर्थः स्वः स्वर्गस्य ताम् = देवानां पराजयात्पूर्व्वं या श्रीः सम्पद् आसीत् ताम्, आह्वत आहृतवान् आङ + हृ + कर्त्तरि लुङस्तङि प्रथमपुरुषैकवचनम्। तारकस्य तपस्यया इन्द्रादिदेवाजय्यत्ववरलाभात्, असुराणां प्राबल्येन तस्य प्राधान्यात् तद्वधाय च कार्त्तिकेयस्योत्पत्तेः तस्य पृथक् *प्रथमञ्चोल्लेखः।*

(पक्षान्तरे) पतिरक्षितात्मा, पत्या देवराजेन रक्षित आत्मा स्वरूपं यस्याः सुधारिता—सुधया अरिता अमरा सती, (*हिंसार्थक स्वादिगणीय रिधातोर्भावे निष्ठया 'रितं' वधः क्षयो वा, नास्ति रितं* यस्याः सा अरिता, सुधया अरिता, सुधारिता) सा देवसेना अमर्षमदोद्धतानां रोषदर्पोच्छ्रितानां यद्वा सुधारितामर्षमदोद्धतानामित्येकपदम् *असुरविशेषणपरम्, तुदादिगणीयगत्यर्थकरिधातोर्भावे निष्ठाप्रत्ययात्,* रितं गतिः प्राप्तिः, अरितं अप्राप्तिः, सुधाया अरितेन योऽमर्षः यश्च मदः प्राइतिषो दर्पः ताभ्यामुद्धतानामिति समासः। सतारकाणां उपसिद्दनादयुक्तानां कायप्रबलानां कायेन शरीरेण प्रबलाः महाकायाः यद्वा कायं गद्यं प्राति पूरयति सम्पूर्णतां नयति इति कायप्रं बलं येषां ते तद्बलसम्पादकयत्नशालिनः, *तेषां असुराणां* (*पूर्व्ववत् कर्म्मणि*

षष्ठी ) शक्तिं स्वशक्त्या जयात् स्वः स्वर्गस्य तां श्रियम् आहृत आहृतवती । अमृतवञ्चिता असुरा अमृताप्यायितदेवसेनया युद्ध निर्जिता, तेन च दुर्व्वाससोऽभिशापदानात् पूर्व्वं या स्वर्गस्य श्रीरासीत् सैव पुनरभूदिति भाव ॥ १४ ॥

( ১৪ )

তারকাদি—তপোবলে
প্রবল অসুর,
মদোদ্ধত, তাহে ক্রোধ
সঞ্চিত প্রচুর—
সবে শক্তি-অস্ত্রে জিনি
অক্ষত মূরতি,
পূর্ব্ব শ্রী আনিলা স্বর্গে
দেবসেনা-পতি। *

( ১৪ )

অমৃত না লভি রোষে
দর্পে সমুদ্ধত
মহাকায—উচ্চ নাদে
ধায় দৈত্য যত।
সবে জিনি দেব সেনা
ইন্দ্র সুরক্ষিত,
শক্তিবলে স্বর্গে করে
পূর্ব্ব শ্রী-মণ্ডিত।

**यन्नामाभासमुक्त्वैति परस्थानं नराधमः ।**
**स्वस्थानममरैर्लभे तद्भक्तैरिति का कथा ॥ १५ ॥**

( शिव० पक्षे ) एतच्च नाश्चर्यमित्याह—यन्नामाभासम् उक्त्वा नराधम दस्यु परस्थान परम् उत्कृष्ट स्थानम् अथच पराधिकृत स्थानम् एति प्राप्नोति, 'आहर' 'प्रहर' इत्युक्तवतो दस्योस्तद्घटकहर-

* দেবসেনা পতি।—কার্ত্তিকেয়ই দেব সেনার অধিনায়ক হইয়া যুদ্ধে তারকাসুর বধ করিয়া অমর জয় করেন।

शब्दस्य शिवनामत्वविरहेऽपि शिववाचकहरशब्दसाम्येन नामाभासतया तदुच्चारणगुणेन सद्गतिरभूदिति पुराणवार्त्ता। तद्भक्तैः तस्य शिवस्य भक्तैः अमरैः, नरेभ्यः श्रेष्ठैरित्याशयः (नामाभासोच्चारणनराधमत्वाभ्यां वैलक्षण्यसूचक सविशेषणविशेष्यपदमेतत्) स्वः स्थान स्वर्गे स्थिरत्वम् अथच स्वकीय स्थान लेभे इति का कथा कि वक्तव्यम्। कैमुतिकन्यायसिद्धमेतदिति भावः। स्व. स्थानमिति पक्षे विसर्गलोपात् स्वस्थानमिति बोध्यम्।

(पक्षान्तरे) नराधमः अजामिल. नारायणनाम्नः स्वपुत्रस्याह्वानेन परं पदं वैकुण्ठं गतः इति श्रीमद्भागवतवार्त्तानुसारेण, यन्नामाभासमुक्तेति पूर्व्वार्द्धार्थो ज्ञेयः। तद्भक्तैर्विष्णुभक्तैः, अन्यत्पूर्व्ववत् ॥ १५ ॥

( ১৫ )

যাঁর নামাভাস মাত্র করি উচ্চারণ,
লভয়ে পরম স্থান নরাধম জন। *
তাঁহার পরম ভক্ত যতেক দেবতা,
স্বস্থান পাইল, ইহা বেশী কি বা কথা।

---

* নামাভাস=ঠিক তাঁহার নাম নহে, তাঁহার নামের মত বর্ণ যাহাতে বর্ত্তমান, এইরূপ শব্দ। (শিব-পক্ষে) এক দস্যু—'আহর প্রহর (লুটিয়া লও, মারো) বলিয়াছিল—এই 'আহর প্রহর' শব্দের মধ্যে 'হর' শব্দ আছে, কিন্তু উহা শিবের নাম নহে,—তথাপি 'হর' এই শিব নামের সহিত বর্ণ সাম্য থাকায় উহা নামাভাস, তাহার উচ্চারণ ফলে

मूको गीष्पतितामेति यत्कृपालेशमात्रतः ।
पापी पापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ १६ ॥

प्रसादात् तस्य देवस्य तन्नन्दनमुपाश्रिताः ।
जितवन्तो द्विषो देवा नहेयतच्चित्रमण्वपि ॥ १७ ॥

( युग्मकम्

एतदेव भङ्ग्यन्तरेणाह युग्मकेन मूक इति । प्रथमः सुगमः । द्वितं यस्यार्थः—(शिव० पक्षे) तस्य देवस्य शिवस्य प्रसादात् तन्नन्दन साक्षा तस्य पुत्रम् उपाश्रिताः अस्माकम् आश्रयो भवानिति सामीप्येनाश्रित देवाः द्विषो जितवन्तः शत्रून् अजयन् एतत् अणुमात्रमपि न चित्र आश्चर्य्यम् ।

( पक्षान्तरे ) तस्य देवस्य विष्णोः प्रसादात् देवा. द्विष शत्रून् जितवन्तः सन्त तत् शत्रुभिरधिकृतपूर्वं नन्दन नन्दनकानन उपाश्रिता· प्राप्ता. इति न चित्रमिति पूर्ववत् ॥ १६-१७ ॥

---

দস্যুর সম্পত্তি লাভ হইয়াছিল। (পক্ষান্তরে) পাপিষ্ঠ নরাধম, অজামি মুমূর্ষু অবস্থায় নারায়ণ নামক আপনার পুত্রকে আহ্বান করে—এ 'নারায়ণ' শব্দ বিষ্ণুর নাম না হইয়া অজামিলের পুত্রের নাম হইলে বিষ্ণুর যে নারায়ণ নাম তাহার সমান বর্ণবিন্যাস বিশিষ্ট বলি নামাভাস,—ইহার স্মরণে অজামিলের সম্পতি হইয়াছিল।

( ১৬।১৭ )

যাঁর কৃপালেশে
মূক, হয বাচস্পতি;
পাপী পাপ মুক্ত হ'যে
লভে দিব্যগতি।
লভিযা সাক্ষাৎ তাঁব
পুত্রেব আশ্রয,
আশ্চর্য্য কি, দেবতাব
হয শত্রু-জয।

( ১৬।১৭ )

যাঁব দযা লেশমাত্রে
মূক, বাগ্মী হয;
পাপিষ্ঠ নিষ্পাপ হ'যে
দিব্যধাম ল'য।
জিনিযা প্রসাদে তাঁব
দৈত্যে দেবগণ,
বিচিত্র কি লভিলা যে
নন্দন কানন।

भो विश्वदुःखगरलाशन मोहिनीय-
रूपान्वयाकुलतमोऽभिभवैकशूर ।
तेजोंऽशजातकृतकृत्यचयोऽप्रमेयो
जीयाद्भवानिति तदास्तुवतामरास्तम् ॥ १८ ॥

देवाना शत्रुजयानन्तर वृत्तमाह—( शिव० पद्ये ) भो विश्वदुःख-गरलाशन, विश्वस्य जगतो मरण तत्-नाशादि दु खजनकं गरल कालकूट समुद्रमन्थनजातमित्यर्थाद्गम्यम् अश्नाति यः सः, तत्सम्बोधने ; विश्वं दु.खयति इति विश्वदुःखम्। भो मोहिनीयरूपान्वय, मोहिनी महामाया उमा, आत्मनो मोहिनीमिच्छतीति क्यचः पचाद्यच्, यद्रूपं शिवमूर्त्ति. तेन अन्वय सम्बन्धो यस्य, निराकारस्य ईश्वरस्य मायासम्बन्धेन मूर्त्तिग्रहणमुक्तम्। मोहिनीं याति प्राप्नोति इति वा, सः रूपान्वयो

रूपमेलन यस्य तत्सम्बोधने। एतेनार्द्धनारीश्वरमूर्त्तिः हरिहरमूर्त्तिर्वा सूचिता, मोहिनी विष्णुमूर्त्तिविशेषः, तामालिङ्गितवतः शिवस्य हरिहररूपं जातमिति पुराणवार्त्ता। निराकारस्वरूप सूचयति, भो अकुल, अगोत्र, 'यत्तदद्रेश्यमग्राह्यमगोत्रम्' इति श्रुतेः इयं श्रुतिर्निराकार निर्दिशति, तत्प्रतिपाद्यपदार्थग्रहणेन तथात्र प्रतिपादनम्। तमोऽभिभवैक-शूर = तमसः अज्ञानस्य अभिभवे नाशे एकः अद्वितीयः शूरः वीरः तत्सम्बोधने, 'ज्ञानमिच्छेत्तु शङ्करात्' इति स्मृतेः; अथच तमसोऽन्धकारस्य नाशे सूर्य्योऽद्वितीयः। तेजोंऽशजातकृतकृत्यचयः = तेजोंऽशजातेन तेजः शुक्रं तत्स्वरूपो योऽशः भागः तस्मात् जातः कार्त्तिकेयः तेन करणेन कृतः कृत्यचयः देवसेना-सञ्चालन तारकासुरवधादि-कार्य्यसमूहो येन सः, यद्वा तेज. शुक्रम्. अश. स्वस्य विभूतिः ताभ्यां जातैः, कार्त्तिकेय वीरभद्रादिभिः शुक्रजातः कार्त्तिकेयः अंशजाता वीरभद्रादयः। वीरभद्रादीना देवहितार्थमसुरैर्युद्धं स्कान्दे वर्णितम्। अप्रमेयः प्रमातुं तत्त्वतो ज्ञातुमशक्यो भवान् जीयादिति एवमुक्त्वा त शिवम् अस्तुवत अस्तुवन्।

( पक्षान्तरे ) भो विश्वदुःखगरलाशन! विश्वेषा दुःखमेव गरल विषं तदश्नाति ग्रसते नाशयतीति यावत्--सः तत्सम्बोधने—भो मोहिनीयरूपान्वय! मोहिनीवदाचरत् मोहिनी या रमणी तत् सदृश कर्म्म कुर्वद् असुरान् मोहयत्, मोहिन्यै तन्नामकावताराय हितमिति छ-प्रत्ययेन वा मोहिनीय यद् रूप ( विष्णोरूपविशेषः ) तेनान्वयः सम्बन्धो यस्य सः तत्सम्बोधने, आकुलतमोऽभिभवैकशूर, आकुलः छद्मना देव पङ्क्तावुपवेशनेन मनसा व्याकुलः, यः तमाः राहुः तस्य अभिभवे शिरश्छेदेन पराभवे एकशूरः इति पूर्ववत्। तेजोंऽशजात तेजोंऽशसमूहः

आवेशकलाशादिरूपावतारसमूहः तेन कृतः सम्पादितः कृत्यचयो येन सः अप्रमेयो भवान् जीयात्। त विष्णुम्। अन्यत् पूर्ववत् ॥ १८ ॥

( ১৮ )

'বিশ্ব - দুঃখ হর
কালকূটে—হর!
ভখিয়াছ অনায়াসে।
মহামায়া সঙ্গ
মিলিত অৰ্দ্ধাঙ্গ
শূর ঘোর তমোনাশে।
পুত্র—তেজ অংশ;
তাঁর দৈত্য ধ্বংস-
আদি কাৰ্য্য—তব হয়।
তুমি অপ্রমেয়'—
বলি' আদিতেয়*
স্তব করে জয় জয়॥

( ১৮ )

'বিষসম ভয়ঙ্কর
বিশ্ব দুঃখ নাশ কর
আশ্রয় করিয়ে রূপভেদ।
ধরিয়ে মোহিনী কায়
সুধা দেও দেবতায়
কর ত্রস্ত রাহু শিরশ্ছেদ।
ভীমকান্ত নানা রাজ
সাধো ধরি নানা সাজ
অংশ করি' আপনার তেজে।
তুমি দেব জ্ঞানাতীত'
এ রূপে দেবতা যত
জয় রবে স্তবে' অধোক্ষজে।†

जयति जयति देवः शक्ति-संसक्तरूपो
जयति जयति भर्गो मङ्गलानाञ्च मूलम्।
इति बहुविधशब्दाः प्रीतिमिश्रास्तदानीं
जगति विमलभावं व्यञ्जयन्तो मुमूर्च्छुः ॥१९॥

---

* আদিতেয়=দেবগণ। † অধোক্ষজ=নারায়ণ।

( शिव०पक्षे ) देवः द्योतनशीलः शक्तिसंसक्तरूपः अर्द्धनारीश्वरः, र्गः शिवः । (पक्षान्तरे) देवो विष्णुः शक्तिसंसक्तरूपः लक्ष्म्यालिङ्गितः ः सूर्य्यमण्डलस्थतेजःस्वरूपः नारायणः, 'ध्येय सदा सवितृमण्डल-ध्यवर्त्ती नारायणः' इत्याद्युक्तेः ॥ १६ ॥

इति कविकुललालितचरणकमल-श्रीनन्दलालविद्यारत्नभट्टाचार्यसूनोः
श्रीरसानलतर्करत्नभट्टाचार्यस्य कृतौ सर्व्वमङ्गलोदये श्लिष्टकाव्ये
देवताभ्युदयो नाम नवमः सर्गः । समाप्तश्चायं ग्रन्थः ।

( ১৯ )

'জয় জয় শক্তি-উমা-
যুত বৃষকেতু
জয় জয় শিব
মঙ্গলের আদি হেতু'
আনন্দ কল্লোল ধ্বনি
একপ তখন
শুদ্ধ ভক্তি ব্যক্ত করি
ভরিল ভুবন।

( ১৯ )

"জয় জয় রমা-শক্তি
সহ নারায়ণ
জয় জয় সর্ব্ববিধ
মঙ্গল কারণ।"
এইরূপ ধ্বনি মহা
আনন্দ উল্লাস,
পূরে দিশে, শুদ্ধ ভক্তি
করিয়ে প্রকাশ।

সর্ব্বমঙ্গলোদয় নামক শ্লেষকাব্যে 'দেবতাভ্যুদয়'
নামক নবম সর্গ সমাপ্ত।

এই কাব্য সমাপ্ত হইল।

---

# कविवंशकीर्त्तनम् ।

कान्यकुब्जकुलीनाना गौतमाना द्विजन्मनाम् ।
केषाञ्चिज्जवनत्रासादासीद्द्राविडनाश्रिता ॥ १ ॥

[ द्राविडा: पञ्च, तेषा निवास: द्राविडा: जनपद:, दक्षिणापथतया प्रसिद्ध: । तत्रौदीच्या नाम केचिद् विप्रा: कान्यकुब्जादिकुलजातत्व-चिह्नं नाम्ना वहन्तोऽद्यापि निवसन्ति । ]

तदन्वयपयोनिधेरजनि भट्टनामश्रुति:
श्रुती हरिहर: सुधाकरसहोदर: कीर्त्तित. ।
स शङ्कमतिविश्रुत विमलवर्णमुत्पादयन्
जगन्ति निरचाययज्जनकजन्ययोरेकताम् ॥ २ ॥

[ शङ्कभट्टमत सुपद्मव्याकरणप्रणेत्रा पद्मनाभदत्तेन यङ्लुगवृत्ता-वुद्धृतम् । ]

विसर्पज्जवनव्याल विलासत्रासकातर: ।
शङ्को द्राविडमत्याक्षीत् पूर्व्वं गाधिपुर यथा ॥ ३ ॥
मौद्गल्यादिकुलोद्भूतैश्चिरसम्बन्धसस्तुतै: ।
समदु.खसुखैर्मित्रै सम पूर्व्वंसुतोऽचलत् ॥ ४ ॥
वेदविद्यामना: सर्व्वे पुत्रदारसमन्विता: ।
क्रमादग्रेसरीभूय राढभूमिमुपस्थिता: ॥ ५ ॥

ता शैलवनसङ्कीर्णा पालिता मल्लभूमिपैः ।
असम्बाधा विनिश्चित्य न्यवसन् राजसत्कृताः ॥ ६ ॥
तदा जरत्तमः शङ्कः कृती गणपति. सुत: ।
यज्ञविद्याश्रिया चोभौ परस्परविनाशकौ ॥ ७ ॥
अल्लालभट्टमिहिरगोविन्दानन्दनामकाः ।
त्रिदेवा इव सम्भूता. सुता गणपतेस्त्रयः ॥ ८ ॥
गोविन्दानन्दधीरोऽसावष्टाविंशतिकौमुदि ।
प्रायश्चित्तविवेकादि-ग्रन्थटीकाश्च निर्म्ममे ॥ ६ ॥

[ अष्टाविंशतिरितिप्रसिद्धिः, तत्र साम्प्रत काश्चिदुपलभ्यन्ते । ]

अल्लालभट्टः सिद्धोऽभून्नानाशास्त्रविशारदः ।
पाण्डित्यादिगुणैर्युक्तो मिहिरोऽपि तथाभवत् ॥ १० ॥
प्रतापादित्यभूपस्य यथार्थ नाम बिभ्रत. ।
विषये जवनाधीशतमोबलनिरोधिन. ॥ ११ ॥
यशोरसंविधेऽग्रासीदल्लालो धुलियापुरे ।
यमुनालहरीलीलाकलनादमनोहरे ॥ १२ ॥ ( युग्मकम् )
य भट्टपल्लीति कृताख्यमग्रन्हार ददौ गाङ्गतटे स राजा ।
अल्लालभट्टाय तमस्य पुत्रो राजात्यये धूर्त्तगिरा भियोज्झत् ॥१३॥

[ ब्राह्मणवशप्रभृतिमन्ये लिखितमपीदं परैर्नाम्युपगम्यते । ]

अल्लालस्य सुतो धीरो नारायण इति श्रु त. ।
वाशिष्ठोऽस्यस्य जामाताभवत् सुगुननामक· ॥ १४ ॥
आसन्नमृत्युना तेन सिद्धमन्त्रप्रदित्सुना ।
नारायणाम्ययात्ते सुते विट्पतिरावदत् ॥ १५ ॥

निमीलिताक्षः स च पुत्रबुद्ध्या शशंस तस्मै मनुमेकदेयम् ।
निवेदिते विट्पतिनाथ तत्त्वे परं सुतादष्टमसौ निनिन्द ॥ १६ ॥

तस्य नारायणस्यासीद्रमाकान्ताभिधः सुतः ।
वदन्ति केचिदधुना य रमावल्लभाख्यया ॥ १७ ॥
त्रिलोचनश्च राजेन्द्रो जानकीवल्लभोऽन्तरा ।
जाता वैश्वानरसमा रमाकान्तसुतास्त्रयः ॥ १८ ॥
विद्वत्तम स राजेन्द्र सजुःकृत्य महामतिः ।
निवसन् जाह्नवीतीरे निनायान्तिमजीवनम् ॥ १६ ॥
तदास्पदे चन्दनपुष्करिण्या राजेन्द्रवंशप्रभवा वरिष्ठाः ।
बहुद्विजानामनुशासितारस्तेजस्विनोऽद्यापि वसन्ति सन्तः ॥२०॥
पितुराज्ञा पुरस्कृत्य रमाकान्तेन चारितम् ।
वाशिष्ठनारायणजेऽन्वये कन्यासमर्पणम् ॥ २१ ॥
प्रतिपन्न तदेकेन राजेन्द्रेणेति तत्कुलम् ।
तत्रैव स्थितमद्यापि, क्वचिद्भङ्गे निपद्यते ॥ २२ ॥
जानकीवल्लभकुलं त्रिलोचनकुलान्तरम् ।
आस्ते दण्डीरहट्टादौ कैश्चन चोचितं बुधैः ॥ २३ ॥
त्रिलोचनस्य तनयः काशीश्वर इति श्रुतः ।
तदङ्गसम्भवो गङ्गा-धरो गङ्गाधरोपमः ॥ २४ ॥
महादेवेति तन्नाम राश्याश्रितमिति स्मृतम् ।
पत्नी कात्यायनी तस्य शम्भोः कात्यायनी यथा ॥ २५ ॥
तत्पुत्राणां द्वितीयोऽभूदुमाकान्तो बुधोत्तमः ।
सावित्री तस्य जायासीत् सावित्रीव स्वयम्भुवः ॥ २६ ॥

तेन दायादांशतया लब्धा भूर्जाह्नवीतटे ।
काकिनाडाभिधग्रामे याधुना वात्स्यसंश्रयः ॥ २७ ॥

[ साम्प्रतं यूरोपीयवणिगधिकृता । ]

पुत्रौ ज्यायसि निक्षिप्य सोऽनतिक्रान्तयौवनः ।
आसन्नगृहिणीमृत्युं मृत्युमापामृतप्रदाम् ॥ २८ ॥
न्यवसत् सोऽनपत्यस्तु विहाय धुलियापुरम् ।
गङ्गातटभुवि भ्रातृ लब्धाया पालयन् शिरः ॥ २९ ॥
तयोर्बालकयोर्ज्यायान् रामकानाइनामकः ।
रामलोचननाम्नासौ निवापे परिकीर्त्यते ॥ ३० ॥
भट्टपल्ल्यामभूद्विप्रवृन्दवन्द्यपदाम्बुजः ।
वाशिष्ठो रामकान्ताख्यः सार्वभौमोपनामकः ॥ ३१ ॥
दानाज्ञालसुताधारासप्तमः पुण्यकृद्धनी ।
रामकानाइदेवाय धीमते स ददौ सुताम् ॥ ३२ ॥
रामकान्तसुता नाम्ना जानकी जानकीसमा ।
राजेश्वरीति तन्नाम तर्पणादौ प्रयुज्यते ॥ ३३ ॥
अल्पीयसैव कालेन पाण्डित्यप्राप्तिलक्षणम् ।
न्यायवाचस्पतीत्याख्या रामकानाइराप्तवान् ॥ ३४ ॥

अथ ज्येष्ठताते परं धाम याते
सहायेन हीनः शुचा चाभिभूतः ।
जहौ काकिनाडा ततो जन्मभूमिं
पिपासु न्यवेशीदमुं सार्व्वभौमः ॥ ३५ ॥

स्वमन्दिर स्थापनयत्नभूम्नः फल यदा तच्छ्वशुरो न लेभे ।
तदा पृथक् सद्म च भट्टपल्ल्या किंपच भूखण्डमदात् तदर्थम् ॥३६॥
अधियाति पुरा 'सुजामुठा'-नरनाथाद् बुधभारतोषितात् ।
स धरा धुरि कीर्त्तितः सता परितः किष्कुचतुःशतीमिताम् ॥३७॥

स पौष्पभूमव्ययभारकातरो-
ऽप्यृतेऽमृत वृत्तिकरमह तथा ।
कुलोचिताचारविनाशशङ्कितो
न वृत्तिमन्या सुलभामशिश्रियत् ॥ ३८ ॥

तत्पत्नी जानकी देवी जानकीव पतिव्रता ।
क्लिश्यमानापि दैन्येन नास्मरत् पितृसम्पदाम् ॥ ३९ ॥

सा दानवारितटिनीतटनीरसस्थ
प्रातः प्रपूजितयमादिकमप्रमत्तम् ।
नागाग्निसम्मितसमावयस प्रमीत
भाद्रासितप्रतिपदि प्रियमन्वगच्छत् ॥ ४० ॥

द्वे कन्ये तनयाश्चाष्टौ तयोरशरणास्तदा ।
व्यग्रीभवन्त रक्षार्थे मातामहमुपाश्रिताः ॥ ४१ ॥
आनन्दचन्द्रः प्रथमः शिवचन्द्रस्ततः पर. ।
तृतीयो हरचन्द्रोऽभूद्दशमो रामराघवः ॥ ४२ ॥
लम्बोदरोऽष्टमो नाम कुलतन्तुप्रवर्त्तकः ।
पञ्चैते भ्रातरस्तेषा गृहधर्मयुजोऽभवन् ॥ ४३ ॥
पतिपुत्रयुता चैका स्वसासीदिति नः श्रुतम् ।
इतरे नाम चत्वारः प्रापुराकालिकीं मृतिम् ॥ ४४ ॥

तारानन्द्रो रामगतिः सीतानाथस्तथापरः ।
नाम्ना भ्रातृत्रयं तेषु, काली श्यामा स्वसृद्वयम् ॥ ४५ ॥
आनन्दचन्द्रगृहिणी नाम्ना चन्द्रमणिः स्मृता ।
शिवचन्द्रस्य दुर्गासीत् तृतीयस्य विनोदिनी ॥ ४६ ॥
लम्बोदरस्य गृहिणी जया नाम्ना निगद्यते ।
नाम्ना नैवावगच्छामो रामराघवगेहिनीम् ॥ ४७ ॥
आनन्दचन्द्रः श्राद्धादौ कालिदासेति कथ्यते ।
स सिद्धस्तार्किकश्रेष्ठः कवीन्द्रः कुलकेतनम् ॥ ४८ ॥
स रामलीलोदयनाम काव्यं चकार मातामहकीर्त्तिपूर्त्यै ।
प्रख्यापयंस्तत्कृतमित्यपूर्व्वं लोकैपणावर्ज्जनशौर्य्यसाद्वि ॥ ४९ ॥
तार्किकः शिवचन्द्रोऽभूद्यत्सुतं तर्कवित्तमम् ।
गणेश नाम भर्त्तारं चण्डी संस्थितमन्वगात् ॥ ५० ॥
एकत्रिंशसमामात्र-वयस्कः स महामनाः ।
आनन्दचन्द्रः कार्त्तिक्यां गङ्गाया स्नानतो मृतः ॥ ५१ ॥
लम्बोदरसमो लम्बोदरः स्मार्त्तशिरोमणिः ।
यस्योल्लेखो निवापेषु रामकेशवसंज्ञया ॥ ५२ ॥
स विद्वद्वन्दितो स्नानाद्गङ्गातीराम्बुगो मृतः ।
वैशाखकृष्णपञ्चम्यामूनसप्ततिवर्षमुक् ॥ ५३ ॥
तद्वर्षाभ्यन्तरे शोरर्शार्णा पतिरता जया ।
माघे चतुर्थ्यां कृष्णायां गङ्गातीराम्बुगा मृता ॥ ५४ ॥
विद्याध्वाननोपाधिरभूदानन्दचन्द्रगः ।
तर्कवागीशसंज्ञा च लम्बोदरसमाश्रया ॥ ५५ ॥

श्रीमदानन्दचन्द्रेण श्रीमल्लम्बोदरेण च ।
स्वस्वमाहात्म्ययोगेन सम्यगुज्ज्वलितं कुलम् ॥ ५६ ॥
कन्याश्चतस्रः पुत्राश्च सप्त लम्बोदरोद्भवाः ।
असंस्कृतमृते पुत्रीद्वयपुत्रचतुष्टये ॥ ५७ ॥
अनामा प्रथमो रामकृष्णोऽथ मधुसूदनः ।
हाराणचन्द्रः कन्ये च, मृतेष्वेतेषु षट्स्वपि ॥ ५८ ॥
पितैषां स्वप्नसन्दिष्टो यावदन्वयसक्रमम् ।
सन्तत्यै वार्षिकं चक्रे रटन्तीकालिकार्च्चनम् ॥ ५६ ॥
प्रह्लादो नन्दलालोऽजनि तदनुजनू रामचन्द्राभिधान-
श्चैते सर्व्वेऽपि लम्बोदरतनयवरा धार्मिका बुद्धिमन्तः ।
ज्येष्ठो न्यायप्रतिष्ठः कविरपि मधुरो मध्यमो लब्धविद्यो
नानाशास्त्रेष्वथान्योऽनवसितपठनोऽप्याप धीरप्रतिष्ठाम् ॥ ६० ॥
कृष्णप्रियेति यन्नाम तर्पणादिषु कथ्यते ।
कन्या स्वर्णमयी साम्प्रया मुक्तकेश्यनुजाभवत् ॥ ६१ ॥
प्रह्लादो दोलगोविन्दनाम्ना कर्म्मसु कथ्यते ।
रामो जीवनकृष्णाख्यो मध्यमस्त्वेकनामकः ॥ ६२ ॥
प्रह्लादगृहिणी लक्ष्मी रामचन्द्रस्य गेहिनी ।
द्वितीया शारदा नाम प्रथमा कृष्णकामिनी ॥ ६३ ॥
षड्विंशवर्षे प्रह्लादो ज्ञानाद्गङ्गाम्बुरोधसि ।
रामस्तत्रैवैकविंशे रामनाम जपन्मृतः ॥ ६४ ॥
चैत्री कृष्ण-चतुर्थी या या च प्रेतचतुर्द्दशी ।
ते द्वे मृततिथीभूते भ्रात्रोर्ज्येष्ठकनिष्ठयोः ॥ ६५ ॥

वन्द्यः श्रीनन्दलालः शमनिरतमनाः स्तोत्रनिर्म्माणकीर्त्तिः
ससारस्थोऽपि तावद्विषयरससुखासङ्गदोषैर्न लिप्तः ।
विद्यारत्नोपनामा यमजनयदल पञ्चवक्त्रोपसत्त्या,
तेनेद श्लिष्टकाव्य पितृपदकृपयाकारि पञ्चाननेन ॥ ६६ ॥
सोऽह पञ्चाननो नाम पञ्चाननपदाश्रयः ।
नाम्ना गगनचन्द्रोऽस्मि राशिचक्रानुसारिणा ॥ ६७ ॥
ऊर्ज्जे दर्शे गुणाम्नायसम्मिताब्दे जपन्गनुम् ।
जाह्नवीतीरनीरस्थस्तातो यातोऽमृत मृतः ॥ ६८ ॥
विभावसोरिव विभा कौमुदीव निशापतेः ।
माता मे जनकस्यासीत् चण-विच्छेददर्शिता ॥ ६९ ॥
रामराणीति यन्नाम कीर्त्यते तर्पणादिषु ।
माता शशिमुखी सा मे पराह्ने पञ्चतौ मृता ॥ ७० ॥
पतिमरणकथोपलम्भ-वज्र-ज्वलनमुखे जननी तनुं जुहाव ।
वह्निरनलशरीरयोगसाध्य सहमरणं प्रतिषेधतः प्रलम्भ्य ॥७१॥
तयोः पुत्रद्वयी-पुत्रीद्वयदोरवशिष्यते ।
मया चानुजया श्रीमन्नृत्यकालीकुमारया ॥ ७२ ॥
सातपादकृतान्दूल-काव्यस्यैवोऽवशिष्यते ।
यः श्लोको लिख्यते सोऽय ग्रन्थपाविन्यसम्पदे ॥ ७३ ॥
"सरस्वती-सिन्धुसमीपवर्त्तिनी सुधाविलेपादिव चारुहासिनी ।
अमात्यनच्चत्रसहस्रयोगिनी पुरी धरापालशशाङ्कशालिनी ॥७४॥"
प्रकाशिता तु या स्तोत्रं नाम तत्कृतिरन्तिमा ।
सा प्रदर्शनपुण्याय पुरः संस्थाप्यते मया ॥ ७५ ॥

## [स्तोत्रम्]

स्वाधाख्यमुखाश्रयाश्रितसुधासिन्धुप्रबन्धे मणि-
द्वीपे राजति पारिजातविटपी मध्येश्मशानाङ्गनम् ।
तन्मूले मणिवेदिकोपरि मणेः पीठे शवाब्जासना
काली कालभिया निकृन्तनकृते कर्त्रीकरा ना(पा)तु माम् ॥ (१)

षट्चक्रेषु तदूर्ध्वपद्मकुहरे मेध्ये सुषुम्णान्तरे
सर्वत्रैव चरेऽचरे च विविधैरेकापि रूपैः स्थिता ।
नीरूपाप्यपरूपरूपरुचिरा नग्नापि लज्जात्मिका
काली— (२)

श्रीवृन्दारकवृन्दवन्दितपदद्वन्द्वारविन्देश्वर-
ब्रह्मोपेन्द्रमहेन्द्रमूर्द्धविगलन्मन्दारवन्धस्रजाम् ।
गन्धानीतकुलालिकालिमघनच्छायाद्‌घ्रिपद्मेश्वरा
काली— (३)

प्रोद्यद्भास्करबिम्बदम्भदलनज्योतिष्मनेत्रत्रयान्-
ज्वालाजालकरालकालदहनालोकं क्षिपन्ती रिपौ ।
पश्चात्पूर्णसुधांशुकांशुमृदुलां दृष्टिं निजे मुञ्चती
काली— (४)

मर्त्या यत्स्मरणाद्भवन्त्यमरणास्तद्वत्त नित्याभय-
श्रीमृत्युञ्जयमृत्युमूर्त्तिरिति यद्विश्व चिर चिन्त्यते ।
वाञ्छाधिकविचारिभ्रमकरी लोकत्रयीलीलया
काली— (५)

मुण्डालीगलितासृगासव-नवामोदप्रमोदाः शिवाः
यस्या दिक्षु विदिक्षु भैरवरवं मुञ्चन्ति चञ्चन्ति च ।
सा चण्डी शवमुण्डमण्डितचिताकुण्डे स्थिता ताण्डवे
काली— (६)
दंष्ट्रालास्यमहाट्टहास्यविकटा सृक्कद्वयोनिर्गल-
द्रक्ता रक्तकराललोलरसना बाणावतंसोज्ज्वला ।
काञ्चीं कौणपपञ्चशाखरचितामामुञ्चती दक्षिणा
काली— (७)
या मूलप्रकृतिः सती गुणवती विश्वप्रसूतिः स्थिति-
स्त्रैलोक्य दधती क्षितिर्ज्जलमरुज्ज्योतिर्वियद्विस्तृतिः ।
अन्ते संहृतिरीश्वरी चितिरिति द्वैतोज्झितावस्थितिः
काली— (८)
व्यालोलालकमुक्तकुन्तलकुलस्पृष्टाङ्घ्रिपद्मद्वया
सद्यःकृत्तशिरोवराभयकराधाराधरश्रीधरा ।
अन्तर्ध्वान्तकृतान्तकान्तिरगतिं श्रीनन्दलालद्विजं
काली—(९)

श्रीनन्दलालकृतिना रचिते पवित्रे
स्तोत्रेऽत्र कालकवल-प्रविलोपशिष्टे ।
तत्सूनुना विनिहितानि कियत्पदानि
गङ्गाप्रवाह इव कूपपयांसि सन्ति ॥ ]

[ 'विद्योदय'पत्रप्रकाशितेऽस्मिन्स्तोत्रे सम्पादककल्पितं पदपरिवर्त्तनं क्वचिद्दृश्यते, मूलानुरोधाद्वैपरीत्याच्च तदिह न गृहीतम् । ]

महाकुलभवोऽप्यहं तदुचितैर्गुणैरुज्झितो
महापुरुषनन्दनोऽप्यधमभावमासेदिवान् ।
हलाहलकलानिधि-प्रणयिन त्रिलोकीगुरुं
भजामि भवहानये कृतनिबन्धपुष्पार्पणम् ॥ ७५ ॥

द्विविधार्थकसर्व्वमङ्गलोदयकाव्योद्भवशाकनिर्णयः ।
अचलानचलामहीन् महीमपि दृष्ट्वा क्रियता विचक्षणैः ॥ ७६ ॥

# सर्व्वमङ्गलोदयम् ।

टीकाकृता मङ्गलाचरणम्

सहितहरिहरलीलं गङ्गायमुनाङ्गसङ्गमश्रीमत् ।
बहुलार्थदायि तीर्थं काव्यं वा जयति सार्व्वमङ्गलिकम् ॥
नत्वा तातपदाब्जे तद्रचितेतद्द्विपञ्चकाव्यस्य ।
क्रियते सरला टीका गरलाशनकसशासनप्रीत्यै ॥
मूलस्याधोविवृतिं क्वचिदनुसरता क्वचान्यथा चरता ।
श्रीश्रीजीवेन यदि स्खलितं ललिताशयैः क्षम्यम् ॥

उदय उद्गतिः उत्क्रान्तिः प्रकाशश्च, सर्वमङ्गलाया भवान्या उदयौ उत्क्रान्तिप्रकाशौ यत्र यत्प्रतिपाद्यौ तत्, भवेन शिवेन मङ्गलो दयो देवानां शुभप्रकाशो यस्मिन् तदिति च एकमहार्थ । काव्येऽस्मिन् दक्षयज्ञस्य कारणम्, दक्षयज्ञे, सत्यास्तत्र गमनं तत्र तस्या देहत्यागो दक्षयज्ञध्वंसः शिवस्य प्रसादेन दक्षस्य पुनर्जीवनं हिमालय गृहे दाक्षायण्या आविर्भावः, तारकासुरपराजितदेवानां स्वयम्प्रसन्नब्रह्मणो निदेशेन तारकासुरविजेतृकार्त्तिकेयोत्पत्त्यर्थं तपोमग्नशिवस्य विवाह सङ्घटनोद्योगः, मदनभस्म, शिवेन तस्या विवाहः, कार्त्तिकेयोत्पत्ति तारकासुरजयो देवानां स्वर्गाधिकार इत्यतद्वर्णनम् एकं पद्यं ।

अपरपक्षश्च इन्द्रं प्रति दुर्व्वासस: शाप. तेन इन्द्राधिकाराल्लक्ष्मीभ्रंशः, तस्याः सागरप्रवेशः, देवानामसुरकर्त्तृकपराजयः विष्णुप्रसादेन क्षीरोद-मन्थनं लक्ष्म्या अमृतादीनाञ्चोद्भवः, देवानाममृतपानं तेन च वर्णयो-भिर्देवैरमृतपानवञ्चितासुरपराजयः निःसपत्न-स्वर्गाधिकारः इतिरूपेण देवाना मङ्गलं जातम् । देवमङ्गलेनैव सर्वमङ्गलम्, असुरमङ्गलस्य रजस्तमःप्रधानतया अधःपतनहेतुत्वात्तथा च सर्वेषां मङ्गलोदयो यत्र इति अन्तिमपक्षे काव्यस्यार्थः। अयमर्थः प्रथमपक्षेऽपि घटते। तथाच एतादृशार्थद्वयीप्रतिपादकस्य श्लिष्टकाव्यस्य सर्व्वमङ्गलोदयमितिनाम युक्तम्।

निर्विघ्नग्रन्थसमाप्तये एतत्काव्यार्थद्वयवर्णनीयलीलाचरितयोर्देवयो-र्देव्योश्च प्रसादं प्रार्थयते, यदङ्गेत्यादिद्वयेन।

१। ( शिवपक्षे ) स मानसेत्यत्र सः मानसेत्यादि च्छेदः। सविधुः इत्येकपदम्। जगदेकशुद्धिः गङ्गा यदङ्गसङ्गात् महिमातिरेकम् अधियाता मानसोदीरितवर्त्मदूरस्थितः सविधुः सः भवः मा पुनातु। इत्यन्वयः।

( विष्णुपक्षे ) समानसेत्याद्येकपदम्। अभव इति च्छेदः। स विधुरित्यत्र सः विधुः इतिच्छेदः। पूर्व्वार्द्धस्यान्वयः पूर्व्ववत्। उत्तरार्द्धस्य तु समानसोदीरितवर्त्मदूरस्थितः अभवः सः विधुः मा पुनातु इत्यन्वयः।

पदार्थविवरणम्। शिवपक्षे, अङ्गस्य सङ्गः अङ्गसङ्गः तस्मात्, अङ्गम् उत्तमाङ्गम्। महिम्नः अतिरेकः आधिक्यम्, महिमातिरेकः, तम्। अधियाता प्राप्ता। एका मुख्या शुद्धिः शुचिता यतः जगतामेकशुद्धिः जगदेकशुद्धिः। मानसं च उदीरितञ्च ते मानसोदीरिते मनोवचसी

तयोर्वं मं पन्था तस्मात् दूरं तत्र स्थित मनोवाचोरगोचर इत्यर्थ । सविधु विधुना चन्द्रेण सह वर्तमान, विधा कर्त्तृमात्रान्वयित्व 'सीतामुदवहद्राम सत्नायेतु सभूपण.' इत्यादिवत्। सविधुरित्यस्य इन्दुभृदित्यर्थ ।

( विष्णुपक्षे ) पूर्वार्द्धसमासस्तुल्य । अङ्गसङ्गादित्यत्र अङ्ग पदमिति विशेष । उत्तरार्द्धे समानसेति मानसेन सह वर्त्तमान यदुदीरित वचन तस्य वर्त्म, इति समासवाक्ये भेद अर्थस्तु समान । अभव नास्ति भव जन्म यस्य जन्मरहित सनातन इत्यर्थ । व इति पूर्वार्द्धस्थ तत्पदार्थान्वितार्थकम् । विधु. = विष्णु 'विधु श्रीवत्सलाञ्छन' इत्यमर ॥ १ ॥

२। ( दुर्गापक्षे ) सुरासुराधीश्वरमौलिलोलमन्दारमालापुनरुक्तरक्त सर्वाश्रयोमापदपल्लव मे सन्तापसन्तानम अपाकरोतु इत्यन्वय । लक्ष्मीपक्षेऽप्ययमेवान्वय, विशेषस्तु पदार्थविवरणे वक्ष्यते ।

पदार्थविवरणम्—असुराणाम् आधि मन पीडा यस्मात् स असुराधि स चासौ ईश्वर अधिपतिश्चेति कर्मधारय, सुराणा देवानामसुराधीश्वर देवानामसुरमन पीडाकराधिपतिरित्यर्थ अत्र काव्ये असुरपराजय इन्द्रस्य चाभ्युदय परिणाम इति सूचनाय असुराधीति ईश्वरविशेषणम्। तस्य यो मौलि किरीट चूडा वा तस्य लोला लम्बमाना या मन्दारमाला मन्दारपुष्पस्रक् तया पुनरुक्त द्विगुणीकृत रक्त रक्तवर्णो यस्य, प्रणामकाले नम्रीभूतेन्द्रमौलिस्थमन्दारमालया स्वभावरक्तमुमाचरणं पुनरपि रज्यते इति भाव । सर्वाश्रय सर्वेषाम् आश्रय शरणम् आश्रीयतेऽसौ इत्याश्रय । अथवा सर्व शिव आश्रय

आधारो यस्य, 'शिवाकारे मञ्चे परमशिवपर्य्यङ्कनिलयाम्' इति स्तोत्रात्, 'शवरूपमहादेवहृदयोपरिसंस्थिताम्' इति श्यामाध्यानमन्त्राच्च। स चासौ उमापदपल्लवश्चेति कर्म्मधारय. सन्ताप-सन्तानं सन्तापानां सन्ततिं परम्पराम् अपाकरोतु दूरीकरोतु। सन्तापाः--आध्यात्मिकाधिदैविकाधिभौतिकाख्य दुःखत्रयम्। विषादादिसम्भूतं दुःखमाध्यात्मिक भूताद्यावेशनिबन्धनं दुःखमाधिदैविकं जलाग्न्यादिजनितदुःखमाधिभौतिकम्। अथच सन्तापः ग्रीष्मादिबाधा, शीतलस्पर्शः पल्लवस्तदुपशमकर इति युक्तम्।

( लक्ष्मीपक्षे ) सुरासुराधीश्वराणां देवाधीश्वराणामसुराधीश्वराणाञ्च मन्दारेत्यादिकम् पूर्ववत्। सर्व्वएव राजानो लक्ष्मीपूजका इति देवासुराणामविशेषेण तत्प्रणामो वर्णितः। असुरविजयानन्तरमिन्द्रस्यैव सुरासुराधीश्वरत्वात् उभयत्रैवैकोऽर्थो वा। अधीश्वर इत्युक्त्या तथा प्रतिपादनात्, तदानीमसुराणां राज्ञः सत्त्वेऽपि स नाधिराजः, किन्तु इन्द्राधीनो राजेति तात्पर्य्यात्॥ २॥

३। ( शिवलीलापक्षे ) शङ्करगौरवेण लोकेषु यः सम्मानविशेषपात्र बभूव अत्रिमहर्षिसूनुः स दत्तः विधेर्नियोगात् महनीयधाम अभ्यागत् इत्यन्वयः।

पदार्थविवरणम्। शङ्करगौरव शङ्करस्य गुरुत्व श्वशुरत्व तेन शिवश्वशुरत्वेन। लोकेषु त्रैलोक्ये सम्मानविशेषपात्र सम्मान-विशेषस्य *विशिष्टपूज्यतायाः पात्रं भाजनम्।* अत्रिनामा महर्षिः 'अत्रिमहर्षिः' तस्य 'सूनुः' अनुज., 'सूनुः पुत्रेऽनुजे रवौ' इति कोषात्। तेन मदनन्दन इत्यायातम्। य इत्यस्यसापेक्ष 'स' इति। 'दत्तः' तन्नामा प्रजापतिः, स

: प्रजापतीना राजा 'प्रजापतीना दक्षन्तु चाम्रव मरुतामपि दैत्यानां दानवानाञ्च प्रह्लादमधिप ददौ' इति विष्णुपुराणोक्तेः ( विष्णु पु० १म अं० २२ अ० ४ श्लोके )। 'विधेः' ब्रह्मणः। नियोगात् आदेशात्। महनीयधाम' पूजनीयं धाम भवन उपस्थितत्वात् विधेरियनेनैवास्य सम्बन्धः सर्वमान्यं ब्रह्मलोकमिति तात्पर्यम्। अथवा—'विधे.' विधिमाश्रित्य निमन्त्रणविधानानुसारेण 'नियोगात्' अवधारणात् गमननिश्चयादेतो: 'महनीयधाम' महन यजन तस्मै हित (पा०-४।१।५ छ प्रत्ययात्) महनीयं धाम यज्ञस्थानं यज्ञस्थानविशेषम विश्वसृजा यज्ञस्थानमितियावत् 'अभ्यागत्' अभ्याजगाम।'

( पक्षान्तरे ) सदक्षः महनीयधामा अनिमहर्षिमुनुः विधेर्नियोगात् अपि ( यथा स्यात्तथा ) आप्त्—यः शङ्करगौरवेण लोकेषु सम्मानविशेषपात्रं जातः इत्यन्वयः। ( उत्तरवाक्ये यत्तदार्थस्थितौ पूर्व तत्तदाप्रयोगस्यापि कचिदृष्टत्वात् यथा "अस्त्युत्तरस्याम्" इति कुमारसम्भवप्रथमश्लोके तत्तद नोपात्त द्वितीयादौ च "यं सर्व्वशैलाः" इत्यादौ यत्तदन्तुपात्तम्। यत्तदोर्नित्यसम्बन्धाच्च)।

पदार्थविवरणम्। 'सदक्षः' सन्तः विद्यमानाः अक्षाः रुद्राक्षाः यस्मिन् सः इत्यादिरूप व्याख्यान मूलाधरतादेवावलोक्यम्॥ १॥

४।( शिवलीलापक्षे ) तेन तत्र अविचलागमभ्रीः स्तदक्षु अङ्गनार्हणः कृपासनः ईक्षितः। अथ सः उत्तनीतं सुमनः अपरं ( यथा स्यात्तथा ) भवानके मदे न्यधात् न सम्पारिजातं ( न्यधात् ) इत्यन्वयः।

पदार्थविवरणम्। ( शिवपक्षे ) 'तेन' दक्षेण 'तत्र' ब्रह्मसदने अविचलागमभ्रीः अविचलौ अनवगतकृन्तौ ( वि + इत्यन्तो:

शतृप्रत्ययाचस्प्रयोगे) नागागमश्रियौ नागाना भूषणभूताना सर्पाणाम् आगमाना तन्त्रशास्त्राणा च श्रियौ शोभा विभूतिश्च यत्र सः एवम्भूत', स्वदृक् आत्मदर्शनरतः, अथवा स्वस्वरूपः चिदात्मस्वरूपः अतएव अकृताहर्णः श्वशुरोऽयमागत इति प्रत्युत्थानाभिवादनरूपा पूजा न कृतवान् इत्यर्थ, भेदबुद्धिप्रयुक्त एव तादृशः सत्कारः सम्भवति, आत्मदर्शनरतस्य चिदात्मस्वरूपस्य वा शिवस्य भेदबुद्धेरभावात् श्वशुरदर्शनेन मर्त्यजनोचितव्यवहारः कथ सम्भवति ? अतएव न कृतम् अर्हणं सत्कारो येन तादृशः वृषासनः शिवः ईक्षितः दृष्टः। दक्षेण ब्रह्मसदने विश्वसृजा यज्ञस्थाने वा शिवो दृष्टः, शिवस्तु स्वात्मारामः लौकिकव्यवहारमनुसरन् श्वशुरं दक्ष प्रत्युत्थानाभिवादनाभ्या न सत्कृतवान्। 'अथ' अर्हणाकरणदर्शनानन्तर 'सः' दक्ष. 'उपनीतम्' पूर्व शिवसमीपे प्रापितं 'सुमन.' स्वीयं शोभनं चित्तं 'अवर' अपकृष्टं यथा स्यात्तथा 'भयानके' 'मदे' गर्वे 'न्यधात्' निदधौ। न 'अपारिजातम्' अपगतम् अरिजात कामक्रोधादिक यस्मिन् कर्म्मणि तद्यथा स्यात् तथा न न्यधात् अतएव अवरमित्युक्तम्। कामक्रोधादिवर्ज्जन दूरमास्ता तदाना प्रजापतेर्दक्षस्य स्वभावतः शुद्धमपि चित्त शिवतत्त्वावोधेन शिवकृतोपेक्षात्मकावमानना सम्भाव्य क्रोधमिश्रगर्वेणाभिभूतमासीदिति भावः।

( पक्षान्तरे ) तत्र तन वियन्नागागमश्री. सः वृषा ईक्षितः। अथ (तेन) उपनीत पारिजात सुमनोवरम् अकृताहर्णः स्वदृक् (वृषा) समदेभयानके ना न्यधात् इति नो। अथवा, तत्र स वियन्नागागमश्रीः वृषा तेन नो ईक्षितः ? अथ तेन उपनीत पारिजात सुमनोवर अकृताहर्णः स्वदृक् ( स इन्द्र ) समदेभयानके ना न्यधात् ? इत्यन्वय.।

पदार्थविवरणम्। 'तत्र' पर्यटनस्थाने अथवा पर्यटनि सति, 'तेन' दुर्वाससा 'वियन्नागागमश्रीः' वियन्नागः अभ्रमातङ्गः ऐरावतः, तेन च आगमः आगमनं तेन श्रीः शोभा यस्य अथवा तेन अगमा स्थिरा श्री सम्पद् यस्य एवम्भूतः सः वृषा इन्द्रः 'ईक्षितः' दृष्टः। अथ अनन्तरं तेन दुर्वाससा, तेनेत्यनुपज्यते, उपनीत उपहृतं सुमनोवर पुष्पश्रेष्ठ पारिजातं पारिजातकुसुममाल्यं वा 'अकृतादरेण:' अकृतादरः 'स्वदृक्' (सु + अदृक्) शुभदर्शनरहितः सन् 'समदेभयानके, समदः मत्तः यः इभः हस्ती तदेव यानं निजवाहनं ऐरावतः इत्यर्थः तस्य के मस्तके 'ना' न 'न्यधात्' स्थापयामास इति नो अपि तु न्यधादेव। प्रथमपादान्ते स्थितस्य 'नो' इत्यस्य चतुर्थपादादौ स्थितेन 'ना' इत्यनेन सम्बन्धः। नञ्नोना इत्येकार्थकं शब्दनयम् इति द्वौ नञौ क्रियादार्ढ्यं सूचयतः।

अथवा उभयत्रैव काकुः, नो ईक्षितः? ना न्यधात्? अपितु ईक्षित एव, न्यधादेवेति च पर्यवसितार्थः। अर्थान्तरमपि मूलश्लोक-टीकायामनुसन्धेयम्।

कदाचित् ऐरावतयानस्थ इन्द्रो दुर्वाससा मुनिना दृष्टः। दुर्वासाः सादरं पारिजातकुसुमं तस्मायुपहृतवान्। इन्द्रस्तु शुभ-परिणामदर्शनरहितः सन्ननादरवशात्तत्पुष्पमैरावतशिरसि स्थापया-मासेति भावः ॥ ४॥

५। (शिवलीलापक्षे) प्रजापके अत्युग्रवाग्वज्रनिपातनक्रमे (सति) नन्दिनि च, (अत्युग्रवाग्वज्रनिपातनकर्मे सति) आर्त्तसत्कुले सः लोक-पालः दैवीम् अनिवार्यहेतुता निमृश्य स्थाणुमुग्धवत् स्थितः इत्यन्वयः।

'प्रजाप:' 'क:' प्रजा: पालीति प्रजाप: प्रजापतिः स चासौ कश्चेति प्रजापकः, कः दक्षः, 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे' इति मेदिनीकोषात्। 'अत्युग्रवागवज्रनिपातनक्रमे' उग्रं शिवम् अतिक्रान्तम् अर्थात् शिवलङ्घि यद्वाग्वज्रं तस्य निपातने निक्षेपे क्रमः अप्रतिबन्धः, उत्साहो वा यस्य तस्मिन् सति, 'नन्दिनि' नन्दिकेश्वरे 'च' चकारात् अत्युग्रेत्यादिविशेषणस्यानुकर्षः, अत्युग्रा अतिकठोरा चासौ वाक्चेति अभिशापरूपा अत्युग्रवागेव वज्रं तस्य निपातने निक्षेपणे क्रमः उत्साहो यस्य स तस्मिन् सति आर्त्तसत्कुले दुःखितसाधुजनयुक्तब्रह्मसदने सः लोकपालः ब्रह्मा दैवीं नियतिकृताम् अनिवार्यहेतुता अनिवार्या अप्रतिविधेया चासौ हेतुता कलहकारणता चेति ता विमृश्य विचार्य क्षण-मुग्धवत् क्षणमुग्ध इव क्षणं स्तब्धवत् स्थितः।

प्रजापतिर्दक्षो यदा शिवमर्यादालङ्घनकरातिकठोरवाग्वज्रनिक्षेपण-रत आसीत्, नन्दिकेश्वरोऽपि दक्षपक्षान् मुनीन् शशाप तदा तत्सदःस्थ सज्जनानां हृदयानि विव्यथिरे ब्रह्मापि नियतिवशादेवाप्रतिविधेया कलहकारणतेति विचिन्त्य क्षणं स्तब्धवत् स्थितः।

(पक्षान्तरे) प्रजापके अत्युग्रवाग्वज्रनिपातनक्रमे आर्त्तसत्कुले अनन्दिनि च (सति) स. लोकपालः दैवीम् अनिवार्यहेतुता विमृश्य क्षणमुग्धवत् स्थित इत्यन्वय।

पदार्थविवरणम्। प्रजापके, प्रकृष्टजापके दुर्वाससीत्यर्थः। अत्युग्रेत्यादि अतिकठोरवाक्याशनिनिक्षेपपरायणे सति, 'आर्त्तसत्कुले' आर्त्ताः व्यथिताः सन्तः साधवः यत्र तस्मिन् कुले जनपदे अनन्दिनि सुखविरहिते च सति, सः लोकपाल इन्द्रः क्षणं मूढ इव स्तब्ध इवाभूत्।

जापकश्रेष्ठे दुर्वाससि देवराजं प्रति कठोरतमवाग्वज्रनिक्षेपप्रवृत्ते सति सर्व्वे एव तज्जनपदवासिनः सन्तो व्यथिता, मुखहीनाश्च जाताः, स देवराजोऽपि क्षणम् मूढ इव स्तब्धीभूत, स्थित ॥ ५ ॥

६। ( शिवलीलापक्षे ) अथ सक्रोधरयस्मयज्वलद्विलोचनोद्भासितनूनपाच्छ्रिया तेन 'अत्र न स्थेयम्' इति वच समुच्चकैरुदीर्य पादक्रमणे मनो दधेइत्यन्वय'।

पदार्थविवरणम्। 'अथ' अनन्तर सक्रोधेत्यादि = क्रोधस्य रयः क्रोधरय तेन सह वर्त्तमान सक्रोधरय स चासौ स्मय गर्व्वश्चेति सक्रोधरयस्मयः तेन ज्वलन्ती ये विलोचने नयने ताभ्याम् तयोर्वा उद्भासिनी तनूनपाच्छ्री तनूनपात् अग्निः तस्य श्रीरिव श्रीर्यस्य स 'तेन' दक्षेण अत्र अस्मिन् सदसि न स्थेयम् अयोग्यमिद स्थान मदवस्थानस्य 'इति' एव रूप वच वचन 'समुच्चकै' तारस्वरम् 'उदीर्य' उच्चार्य 'पादक्रमणे' गमने 'मनो' 'दधे' चक्रे, उद्यम कृत इति भाव ।

तदनन्तर दक्षस्य क्रोधवेगसहितगर्व्वातिशयेन समुद्दीप्ताभ्या नयनाभ्यामग्निरुद्गत इवासीत् तेन च तस्य वह्निश्रीतुल्यता, स क्रोधाग्निना ज्वलन्निव चोक्तुयोवाच—'अयोग्यमिद स्थान मदवस्थानस्य,' इत्युक्त्वैव गन्तुमियेष ।

( पक्षान्तरे ) अथ तेन ( हेतुना ) क्रोधरयस्मयज्वलद्विलोचनोद्भासितनूनपात् स 'अत्र श्रिया न स्थेयम्' इति वच समुच्चकै उदीर्य पादक्रमणे मनो दधे इत्यन्वय ।

पदार्थविवरणम्। 'अथ' अनन्तर 'तेन' हेतुना ऐरावतमस्तके पारिजातस्यारनमृचितेनानादरविशेषेण क्रोधवेगगर्व्वाभ्या ज्वलन्ती

ये विलोचने तयोः उद्भासी प्रकाशमान' तनूनपात् अग्नि यस्य स', 'सः' दुर्वासा 'अत्र इन्द्राधिकारे श्रिया लक्ष्म्या न स्थेयम्' त्वं श्रीभ्रष्टो भवेत्यर्थः इति वच 'समुच्चकै' तारस्वरम् 'उदीर्य' उच्चार्य 'पादक्रमणे' गमने 'मनो दधे' चलितुमुद्यत इत्यर्थ ॥ ६ ॥

७। (शिवलीलार्णवे) अन्वय । हे तात सुप्रचण्ड रोषमुपसंहर, मा मा अपगच्छ, निसर्गशान्तिन्तु भजस्व एवमेव तेन विधिना अनुनीयमानोऽपि असौ ज्ञानप्रमाथिनम् अमर्ष न जहौ इत्यन्वयः ।

पदार्थविवरणम् । हे तात! हे वत्स! सुप्रचण्ड दारुण रोषम् उपसंहर, रोषस्य संवरण कुरु, रोष परित्यजेत्यर्थ । मा मा इति ससम्भ्रम निषेधे माशब्दस्य द्विर्वचनम् । 'अपगच्छ' अपसर, 'तु' किन्तु निसर्गशान्ति ब्राह्मणस्वभावसिद्ध शम भजस्व प्राप्नुहि । 'तेन' 'विधिना' ब्रह्मणा 'एवमेव' 'अनुनीयमानोऽपि' कृतानुरोधोऽपि 'असौ' दत्त ज्ञानप्रमाथिन विवेकविमर्द्दकम् अमर्ष क्रोध न जहौ त्यक्तवान् ।

(पक्षान्तरे) हे तात! सुप्रचण्ड रोषम् उपसंहर । निसर्गशान्ति भजस्व, मा मा अपगच्छतु, तेन विधिना एवमेव अनुनीयमान अपि, असौ अज्ञानप्रमाथिनम् अमर्ष न जहौ इत्यन्वय ।

हे 'तात'! पूज्य! 'सुप्रचण्ड' 'रोषम्' 'उपसंहर', संवृणु निसर्गशान्ति मुनिजनस्वभावसिद्ध शम भजस्व आश्रय। मा लक्ष्मी मा अपगच्छतु न नश्यतु, न शापमुपदेश निष्फलं कुर्विति भाव, 'तेन' इन्द्रेण विधिना यथाविधि मुनिप्रसादनविधि पादग्रहणादिना अनुनयेति भाव 'एवमेव' एवम्प्रकारेण अनुनीयमानोऽपि असौ

मुनिः दुर्व्वासाः अज्ञानप्रमाथिनं अज्ञानानां प्रमाथिनम् दमनहेतुम् अमर्षं क्रोधं न जहौ ॥ ७ ॥

८। ( शिवलीला-पक्षे ) संरम्भारम्भकम्पाङ्घ्रिक्षेपस्खलनभीषणः महातपा. विमुखीभूय पुनः देवेशमूचे इत्यन्वयः ।

पदार्थविवरणम् । संरम्भः क्रोधः आरम्भः उपक्रमो यस्य स तादृशः कम्पो यत्र तौ एवम्भूतयोः अङ्घ्र्योः यः क्षेपः न्यासः तस्य यत् स्खलनं अयथाभावः उद्धतन्यास इति यावत् तेन भीषणः भयङ्करः, क्रोधजनितकम्पवशाद्विकटपदक्षेपेण भयङ्करः 'महातपाः' दक्षः 'विमुखीभूय' गमनाद्विरम्य परावृत्य पुनः देवेशं देवमीशं शिवम् ऊचे कथितवान् ॥

( पक्षान्तरे ) अन्वयः समानः ।

पदार्थविवरणम् । क्रोधजनितकम्पमानपदयोर्विकटविन्यासेन घोरदर्शनः असौ 'महातपाः' दुर्व्वासाः पराङ्मुखः सन् 'देवेशं' देवेन्द्रं पुनः ऊचे बभाषे ॥ ८ ॥

९। ( शिवलीलापक्षे ) उपेक्षितस्वमर्यादैः सततं उच्चैः स्तुवद्भिः ऋषिभिः दैवतैः अपि त्वं गर्व्वम् लम्भितोऽसी यन्वयः ।

पदार्थविवरणम् । उपेक्षिताः स्वेच्छया परिहृताः स्वमर्यादाः स्वेषां मर्यादाः स्थितयो यैः ते तैः अतएव सततं उच्चैः स्तुवद्भिः 'त्वमर्कस्त्वं सोमः' इत्यादिरूपम् उच्चप्रशस्तिवचनं सदा वदद्भिः 'ऋषिभिः' दैवतैः अपि देवैश्च 'त्वं' 'गर्व्वं' अहङ्कारं लम्भितोऽसि प्रापितोऽसि । ऋषीणां देवानाञ्च शिवं प्रति भक्तिभावः शिवद्वेषिदक्षमते स्वमर्यादाहानिकर इति तात्पर्यम् ।

( पक्षान्तरे ) इन्द्रः किल देवैः ऋषिभिश्च स्तूयते, देवाः स्वर्गवासिनः ऋषयश्च अतीन्द्रियदृष्टयः विभूतिमन्तः तेषां सर्व्वेषामपि महिमातिशया वर्त्तन्ते, इन्द्रोऽपि तादृश एवेति कथं तस्य स्तुतिरिति भावः। अतएवोपन्यस्यति उपेक्षिताः विस्मृताः स्वमर्यादाः स्वेषां मर्यादाः स्थितयः महिमातिशयाः यैः ते तैः अतएव 'सततं' यत्र कुत्र काले उच्चैः स्तुवद्भिः चाटुवचनमुच्चारयद्भिः ऋषिभिः दैवतैः देवैः अपि त्वं गर्व्वं लम्भितोऽसि ॥ ६ ॥

१०। ( शिवलीला पक्षे ) ऐश्वर्यमदमत्तः असि गुरून् अपि अतिवर्त्तसे, तत् मूढ मा चिरम् अत्युग्रम् एतत्फलं भोक्ष्यसे इत्यन्वयः।

पदार्थविवरणम्। ऐश्वर्यं ईश्वरत्वम्, शिवस्य ईश्वरत्वं प्रसिद्धम् तेन यो मदः गर्व्वः तेन मत्तः हिताहितविवेकरहितः असि गुरून् श्वशुरान् अपि अतिवर्त्तसे लङ्घयसे, श्वशुरे समुचितसम्मानमपि न दर्शयसि, 'तत्' तस्मात् रे मूढ! मन्दबुद्धे! मा चिरम् अचिरादेव, अत्युग्रम् अतिदारुणम् एतत्फलं गुरुजनावमाननायाः परिणामम् भोक्ष्यसे अनुभविष्यसि।

( पक्षान्तरे ) अन्वयः समानः।

पदार्थविवरणम्। ऐश्वर्यस्य स्वर्गराज्यरूपविपुलसम्पदः मदेन गर्वेण मत्तः क्षीवः असि भवसि, गुरून्—महतो मुनीन् अपि अतिवर्त्तसे निर्मर्यादान् करोषि। रे मूढ हिताहितविवेकशून्य! तत् तस्मात् अत्युग्रम् एतत्फलम् एतत्कार्यस्य पाकं मा चिरम् अचिरादेव भोक्ष्यसे—अनुभविष्यसि ॥ १० ॥

११। ( शिवलीला पक्षे ) तदा परः ताः प्रजल्पिताः, हरः शान्तये प्रणीतेषु वचःसु अथिरं गमनं विभिदे इत्यन्वयः।

पदार्थविवरणम्। 'तपसा' तापदातृणा 'वरः' श्रेष्ठः दक्षः इत्यर्थः ततः तस्मात् स्थानात् प्रचलितः निष्क्रान्तः, 'इतः' इमां भुवं प्राप्य ल्यब्लोपे पञ्चमी, शान्तये प्रशमाय अपमानदुःखदूरीकरणाय। त्रिनेत्रो महादेवः तस्य प्रमदकृत् आनन्दजनको न भवतीति अ-त्रिनेत्रप्रमदकृत् अर्थात् शिवभागहीन तथा अशिव शिवावाहनहीन सवन यज्ञं शिश्रिये अवललम्बे अवलम्बनमूलं मेने इत्यर्थः। ब्रह्मसदनान्निष्क्रम्य दक्षः भूतलमागम्य स्वचेतसि शान्तिलाभाय एक शिवहीनं शिवभागरहित च विन्वन यज्ञमनुष्ठातुमियेष।

( पक्षान्तरे ) तपसा वरः अत्रिनेत्रप्रमदकृत् सः ततः प्रचलितः चेतःशान्तये शिवं वन शिश्रिये इत्यन्वयः।

पदार्थविवरणम्। तपसा वरः तापसश्रेष्ठः अत्रिनेत्रप्रमदकृत् अत्रिनाम्नो महर्षेः नेत्रप्रमदकृत् नयनानन्दजननः अत्रेः पुत्रतमेत्यर्थः सः दुर्व्वासाः चेतः शान्तये चेतसः प्रशमाय मनसः क्रोधजनितरजोमलनाशायेतिभावः। शिव कल्याणजनक वन तपोवन शिश्रिये अधिष्ठितवान् इत्यर्थः॥ ११॥

१२। ( शिवलीलापक्षे ) भेशभूषितः विमनाः स देवः अपि गवि स्थितः अपुण्यभाजाम् अननाप्यदर्शनं सुधाम-नन्दीक्षितगुह्यपद्धति च पुरं प्रति प्रतस्थे इत्यन्वयः।

भेशः नक्षत्रपतिश्चन्द्रः तेन भूषितः अलङ्कृतः विमनाः अमनाः 'अमनाः शुभ्रः' इति श्रुतेः अभवा निरतं मनो यस्य 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः अथवा वायदृष्ट्या विमनाः इव सगुण् स्थिता इत्यर्थः सः देवः शिवः अपि, अपिः समुच्चये। दक्षः सदः

परित्यज्य गतवान्, शिवोऽपि गवि स्थित: वृषारूढ: स्वपुरं प्रति प्रतस्थे। स्वपुर निजनगरं कैलासं प्रति प्रतस्थे। कीदृश पुरम्? अपुण्यभाजा पुण्यवतो विना अन्येषाम् अनवाप्यदर्शनम् अदृश्यं, सुशोभं रमणीय *नन्दीक्षितशुद्धपद्धति नन्दिना तन्नाम्ना गणाध्यक्षेण ईक्षिता* दर्शिता शुद्धा पूता पद्धतिर्यस्य नन्दिप्रदर्शितपूतमार्गमित्यर्थ:। सुशोभञ्च तच्चेति विशेषणकर्म्मधारयसमास:।

चन्द्रमौलि: शिवोऽपि क्षण विमना इव स्थित: वृषारूढ: सन् नन्दिप्रदर्शितमार्ग पुण्यवन्मात्रैकदृश्य रमणीय कैलासपुरं प्रति प्रतस्थे।

( *पक्षान्तरे* ) स: देव: *अपिच विमना: स्थित: ( सन् ) गनि-*मेशभूषित: अपुण्यभाजाम् अनवाप्यदर्शन सुशोभनं दीक्षितशुद्धपद्धति पुर प्रति प्रतस्थे इत्यन्वय:।

पदार्थविवरणम्। स: देव: इन्द्र: अपिच विमना: दु:खित: स्थित: सन् गनिभेशभूषित: गौ: स्वर्ग: तस्य य इभेश: करिराज: स एव भू: स्थान तत्र उषित: अधिष्ठित: ऐरावतारूढ: इत्यर्थ:, अपुण्येति पापिनाम् अदृश्यम् स्वर्गदर्शनं पापिना नैव सम्भवति इति भाव:, सुशोभन परमरमणीय तथा दीक्षितानां यज्ञशीलानामिति यावत्. शुद्धा शुक्ला पद्धति: मार्ग: गतिरिति यावत् यत्र, तादृशं पुरं अमरनगर प्रति प्रतस्थे।

इन्द्रोऽपि क्षण दु:खित: स्थित: सन् ऐरावतारूढ: पापिनामदृश्यं याज्ञिकाना शुक्लमार्गभूतं परमरमणीयम् अमरनगरं प्रति प्रतस्थे ॥ १२ ॥

१३। ( शिवलीलापक्षे ) नमेरुकूटेन विराजमानं तुषारमन्दारसुगन्धवातं प्रभूतवृन्दारकसेव्यमानम् अनन्तकल्पागमसम्पदाढ्यम् पुरं प्रतस्थे इति पूर्व्वेणान्वयः, एवं परत्रापि।

पदार्थविवरणम्। इदानीं शिवस्य पुरं वर्ण्यते त्रयोदशभिः श्लोकैः। 'नमेरुकूटेन' रुद्राक्षवृक्षसमूहेन 'विराजमानं' शोभमानं, 'तुषारः' शीतलः 'मन्दारः' मन्दचारी, मन्दः अरो गमनं यस्य, अर इति ऋधातोर्भावेऽप्, 'सुगन्धः' सुरभिः वातो यत्र, एतेन शैत्यमान्द्यसौगन्ध्यगुणत्रयं वायौ कथितम्। अथवा तुषारः शीतलश्च मन्दारसुगन्धश्च मन्दारकुसुमसुरभिः वातः यत्र, शिवपुरेऽपि मन्दारादीनां सत्त्वात्। 'प्रभूतवृन्दारकसेव्यमानं' प्रकृष्टा ये भूताः देवयोनिविशेषाः ते प्रभूताः प्रमथा इत्यर्थः, भूता हि द्विविधा भवन्ति, केचित् मरणानन्तरं दुर्गतिविशेषमनुभवन्तो भूतसंज्ञां लभन्ते, केचिच्च शिवेच्छया रुद्रसृष्टाः, प्रथमोक्तभूतेभ्यो रुद्रसृष्टाः प्रकृष्टा इति प्रभूताः। ते च वृन्दारकाश्च देवाश्च तैः सेव्यमानम्। प्रभूतानां वृन्दारकाः श्रेष्ठा अध्यक्षा इत्यर्थः नन्दिप्रभृतयः, तैरिति वा। अनन्तकल्पेषु नास्ति गमः क्षयो यस्याः तया सम्पदा आढ्यं समृद्धम्। अथवा अनन्ताः असंख्याः बहुतरा इति यावत्, कल्पाः मन्त्रसाधनप्रकारभेदा यत्र तानि आगमानि तन्त्रशास्त्राणि तेषां सम्पत्—प्रकर्षः तया आढ्यं युक्तं तन्त्रशास्त्राणां शिवोक्तत्वात् तथावर्णनम्। अथवा अनन्तकल्पा चिरस्थायिनो ये आगमाः शास्त्राणि त एव सम्पदः।

शिवपुरं रुद्राक्षवृक्षयुक्तम्, शीतमन्दसुगन्धपवनविशिष्टं प्रमथैः देवैश्च सेव्यमानम् अक्षयसम्पदाढ्यं बहुविधमन्त्रसाधनयुक्ततन्त्रशास्त्रसमृद्धं चासीद् वा।

(पद्यान्तरे) मेरुकूटे न विराजमान न, तुषारमन्दारसुगन्धवात प्रभूतवृन्दारक-सेव्यमान अनन्तकल्पागमसम्पदाढ्यम् इत्यन्वयः।

पदार्थविवरणम्। इदानीं स्वर्गपुर वर्ण्यते त्रयोदशभिः श्लोकैः। 'मेरुकूटे' सुमेरुशृङ्गे न विराजमानम् इति न, अपितु विराजमानमेव। 'तुषारः' शीतः 'मन्दारः' पञ्चाना देववृक्षाणा प्रथमः तत्कुसुमसुगन्ध. वातो यत्र। 'प्रभूतैः' प्रचुरैः 'वृन्दारकैः' देवैः सेव्यमानम्। 'अनन्ताः' असीमाः कल्पागमसम्पद. कल्पतरुसमृद्धयः कल्पतरव एव वा सम्पदः अथवा कल्पतरूणा याः सम्पदः ताभि. आढ्यम।

स्वर्गपुर सुमेरुशृङ्गेऽवस्थितम् मन्दारकुसुमसुरभिशीतवायुयुक्तम्, देवगणसेव्यमानम् अनन्तकल्पवृक्षसम्पद्विभूषितञ्च ॥ १३ ॥

१४। (शिवलीलापद्ये) प्रोच्छलद्घनरसैः नर्त्तिताम्बुरुहकैरवमुग्धैः अतिहृद्यैः लोचनोत्सवविधायकचक्रस्वप्सरोविलसितैः उपपन्नम्। इत्यन्वयः।

पदार्थविवरणम्। पुनः किम्भूत शिवपुरम्? 'प्रोच्छलन्तो' बहिर्निःसरन्तो 'घनरसा' जलानि येभ्यः तैः, 'यन्निःष्यन्दजलेन नद्यः सम्भवन्ति तैः, जलोच्छलनेन नर्त्तितानि सम्पादितनृत्यानीव अम्बुरुहाणि पद्मानि कैरवाणि कुमुदानि यैः अतएव मुग्धैः सुन्दरैः। 'अतिहृद्यै.' अतिप्रियैः, 'लोचनोत्सवविधायकाः' दर्शनानन्ददायिन· 'चक्राः' चक्रवाकाः जलचरपक्षिविशेषा यत्र एवम्भूतानि, शोभनाः आपः यत्र तानि स्वाम्पि सरांसि चेति तेषां विलसितैः विलासैः लहरीलीलाभिः अथवा तादृशस्वप्सरःसु यानि विलसितानि शिवानुचराणां जलक्रीडाः तैः, उपपन्न युक्तम्।

कैलासपर्वतस्थित किल शिवपुर सुजलसरोभि शोभितम्। तेभ्य सरोभ्य जलानि प्रोच्छलितानि सन्ति भारतीयसरित पूरयन्ति। जलानाम् उच्छलनेन च पद्मानि कुमुदानि च नृत्यन्तीव दृश्यन्ते। मुदस्या चक्रवाकाश्च तत्र चरन्तीति भाव ।

( पक्षान्तरे ) प्रोच्छलद्घनरसै रतिहृद्यै नर्त्तिताम्बुरुहकै अवमुग्धै लोचनोत्सवविधायकचक्रस्वप्सरोविलसितै उपपन्नम् इत्यन्वय ।

पदार्थविवरणम्। स्वर्गपुर किम्भूतम्? प्रोच्छलन्तो यहि प्रकाशी भवन्तो घनरसा प्रगाढरागा येषु तै रतिहृद्यै रतौ हृद्यै प्रियै नर्त्तिताम्बुरुहकै. भ्रामितलीलाकमलै अवमुग्धै अर्द्धमुग्धै ईषदभिव्यक्त भावै । अथवा नर्त्तिताम्बुरुहकैरववत् मुग्धै सुन्दरै, लोचनोत्सवविधायक नयनानन्दजनन चक्र समूहो यासा तासा शोभनानाम् अप्सरसा मुख्याना स्ववेंश्याना विलसितै विलासै विभ्रमै उपपन्नम्।

स्वर्गपुर हि नयनानन्दकृता अप्सर प्रधानानाम् विभ्रमै. सम्भृतम्। सानुरागविभ्रमवशादेव अप्सरस लीलाकमल भ्रामयन्ति। ततश्च तासाम् ईषदभिव्यक्तभावेन मनोहारित्वम ॥ १४ ॥

१५। ( शिवलीलापक्ष ) गङ्गातरङ्गव्यतिषङ्गरम्य मानोन्नत सर्व्व सुखैकधाम, कौशिकजुष्काच यत्र हरिपालिताना गजादिकानाम् उत्सव इत्यन्वय ।

पदार्थविवरणम्। गङ्गातरङ्गाणा यो व्यतिषङ्ग अन्योन्यसङ्ग कैलासशृङ्गेण तत्सङ्ग, कैलासशिखरस्य च तै सङ्ग तेन घातप्रतिघात रूप सङ्ग सूचित, तेन रम्यम्। मानेन परिमाणेन उन्नत सुतुङ्गम्, सर्व्वस्य शिवस्य सुखैकधाम, सुखजनकेषु एकं मुख्य धाम स्थानम्

शिवलोकस्य सर्व्वातिशायि सुखजनकत्व, सुखैकेति विशेषणेनोक्तम्। तत्पुरं प्रतस्थे इति पूर्व्वेणान्वयः। कौशिकजुष्टकाके यत्र पुरे, कौशिकाः पेचकाः तैः जुष्टाः सेविताः तेषु जुष्टाः प्रीता वा काका वायसा यस्मिन्, तादृशे नगरे हरिपालितानां सिंहरक्षितानां गजादिकानां हस्त्यश्वानां उत्सवः प्रमोदातिशयः भवतीति शेषः। शिवपुरे शमगुणाधिक्येन नित्यविरोधिनां काकोलूक सिंहगजादीनामपि वैरत्यागो जात इति भावः।

( पक्षान्तरे ) गङ्गातरङ्गव्यतिपङ्करम्यं मानोन्नतं सर्व्वसुखैकधाम, कौशिकजुष्टकाके यत्र हरिपालितानां गजादिकानाम् उत्सवः ( भवति ) इत्यन्वयः।

पदार्थविवरणम्। गङ्गातरङ्गा मन्दाकिनीवीचयः, तेषां व्यतिषङ्गः घातप्रतिघातरूपः। मानेन सम्मानेन गौरवेण उन्नतम्, इन्द्रलोकस्य यमादिलोकापेक्षया पुण्यातिरेकलभ्यत्वात्। सर्व्वं सुखं सर्व्वसुखं तस्यैकधाम अद्वितीयं स्थानम्। अमरावतीपुरं प्रतस्थे इति पूर्व्वेणान्वयः। कौशिकः इन्द्रः तेन जुष्टं सेवितं कानं रतिबन्धविशेषो यत्र तादृशे। हरिपालितानां हरिरिन्द्रः तत्पालितानां गजादीनाम् आदिपदात् अश्वादिपरिग्रहः, ऐरावतादीनामित्यर्थः उत्सवः आनन्दातिशयो भवतीति शेषः। स्वर्गपुरं मन्दाकिनीवीचि-सम्पातरम्यं सम्मानास्पदं परमसुखस्थानञ्च। इदञ्च इन्द्ररतिलीलाभवनं तत्परिपालितैरावतोच्चैःश्रव आदीनाञ्च परमप्रमोदभूमि ॥ १५ ॥

१६। (शिवलीलापक्षे) शिवामृत (वर्त्म) नाम शिखिशेखरगौरीहृदमाम्बुशितलुनापङ्कहसुगन्धि मणिमुकुरदेवीशिलिकारचितं यत् अधितिष्ठति इत्यन्वयः।

पदार्थविवरणम्। पुनः किम्भूतम् ! शिवामृतं शिव एव अमृतं अथवा शिवा उमा तद्रूपम् अमृत ब्रह्म, नाम प्राकाश्ये, शिवस्य शिवायाश्च ब्रह्मतया शास्त्रप्रसिद्धेः। शिखी मयूरः तेन गर्वोधितगौह्वदः प्रवृद्धशल्यः मारुताशिनः सर्पः यत्र, मारुतः पवनः अशित अशनं भोजनं यस्य सः, कुलारकः महिषः वाहः अश्वः तयोः गुरुप्रतिः अव्यभिचारि मेलनं यत्र, ततो विशेषणयोः समासः। अन्यत्र शिखि-सर्पस्य अश्वमहिषस्य च नित्यवैरित्वेऽपि तत्र सर्व्वेषां वैरत्यागः इति भावः। मथितश्चासौ दुग्धपयोधिश्चेति मथितदुग्धपयोधिः। कृते मन्थने दुग्धपयोधौ फेनोद्गमबाहुल्यात् धवलिमाधिक्यमिति तद्वद् विकाशित विकाशः प्रभा यस्य तत् अतिशुभ्रमित्यर्थः यत्पुर कैलासाख्यम् अधितिष्ठति। अथवा मथितदुग्धपयोधिना विकाशितं विशेषेण प्रकाशितं शिवामृतम् शिवात्मकममृतं जगतः कालकूटज्वालाजनित-मृत्युहरणमेवानया शिवस्य अमृतत्वेन प्रकाशनं मथितक्षीरोदसमुद्रेणैव कृतमिति प्रतीयमानात् प्रेयागर्भ्वं तादृशविशेषणमुक्तम्।

यत्र शरीरं मयूरस्य च अश्वस्य महिषस्य च विरोधो दूरमाश्रि गर्न्नेव वर्द्धते, यच्च मन्थनोद्गतफेनबहुलक्षीरसमुद्रवदभिभाति यच्च शिव शिवारूपब्रह्माधिष्ठितम्।

( पद्यान्तरे ) शिखि.... . गुणक्षिते मथित .....विकाशित शिवा-मृत यत् अधितिष्ठति नाम इत्यन्तम्।

पदार्थविवरणम्। पुन किम्भूत सर्वंदुर्निवार—शिखी अग्निः तेन गर्वोधितगौहृदः मन्त्रदग्धहृद मरुतः पातु गर्दः दार्शितं गुणि सर्पस्य, कुलारक महिष वाह वहनं यस्य स. दत्त अश्व

सुष्ठु सङ्गतिः यस्य, मृत्युनायस्य मृत्योरभावेन अमृतस्य तत्र सङ्गतिः साधीयसीति भावः। मथिताद् दुग्धपयोधेः प्रकाशितम् देवासुराभ्या मथितेन तेन वा प्रकाशितं शिवामृत शिव मङ्गलमय अमृत सुधा, 'यत्' स्वर्गपुर 'अधितिष्ठति' नाम प्राकाश्ये, स्वर्गे तदधिष्ठानं प्रसिद्धम्।

सुधापानेन अग्निवायुयमादिदेवाना यत्र परमतृप्तिर्मरणहीनता च समजनि। सुधा च यत्र समुद्रमन्थनेन प्रकाशिता तिष्ठति तादृश स्वर्गपुरमिति भावः॥ १६॥

१७। ( शिवलीलापक्षे ) यत्र वा उच्चमानयशसा पदभाजा शूरतापदविशालगणानाम् आनतोन्नतशिखोदितमान. अतिसुरभिः शिखिवाहः। इत्यन्वयः।

पदार्थविवरणम्। पुनः किम्भूत शिवपुरम् ? यत्र वा यत्र च पुरे 'उच्चमानयशसा' प्रशस्तमानकीर्त्तिशालिना 'पदभाजा' चरणपतिताना सता 'शूरतापदविशालगणानां' शूराणां वीराणां तापदा. तापप्रदाः वीरविजयिनः इत्यर्थ. ये विशाला महान्त. गणाः प्रमथाः तेषाम्। आनताभिः नम्रीकृताभिः उन्नतशिखाभिः ऊर्ध्वरद्धचूडाभिः उदितः प्रकाशितः मानो गौरव यस्य सः, अतिसुरभिः महायशा. शिखिवाहः मयूरवाहन. कार्त्तिकेयः अस्तीति शेषः।

( पक्षान्तरे ) यत्र उच्चमानयशसां पदभाजा शूरतापदविशाल-गणाना आनतोन्नतशिखोदितमानः सुरभिः शिखिवाहः याति इत्यन्वय.।

पदार्थविवरणम्। पुनः किम्भूत स्वर्गपुरम् ? यत्र 'उच्चमान-यशसा' उच्चमानेन दीर्घत्वादिपरिमाणेन यशः कीर्त्तिर्येषां तेषा, 'पदभाजा' यथास्थानस्थिताना, शूरस्य सूर्यस्य ताप दयितुं दूरीकर्त्तुं

शीलमेषा शुक्ताग्रदविनः ये शालगणाः वृक्षसमूहाः तेषा, ताल-व्यादिशालशब्दस्य वृक्षसामान्यवाचित्वं राजनिघण्टादावुक्तम्। एतेन स्निग्धत्वं सूचितम्। आनताभिः ईषन्नताभिः उन्नताभिश्च पुनः ऊर्ध्वं गताभिः शिखाभिः अग्रभागमात्रैः उदितमानः सूचितपरिमाणः, एतेन मान्द्य सूचितं। सुरभिः सुगन्धः- शिखिवाहः वायुः, शिखिन वह्निं वाहयति नोदयति यः सः, वाति प्रवहति। तुषारमन्दारसुगन्ध-वातमिति पूर्वसंक्षिप्तोक्तेर्विवरणमिदम्। शिखिसमेधितेति देवता-मभिप्रेत्य कथनम्॥ १७॥

१८। (शिवलीलापक्षे) यस्मिन् सदानन्दनवातिमोदनिष्पन्दमूर्तं सुरसिद्धवृन्दं विश्वकर्म्मकारुत्वनैपुण्ययशःप्रकर्षं वाचं विना शसति इत्यन्वयः।

पदार्थविवरणम्। पुनः किम्भूतम्? यस्मिन् शिवपुरे सदानन्दः शिवः तस्य यो नवः स्तवः नुपातोरप्, तेन यः अतिमोदः महान् आनन्दः तेन निःस्पन्दभूत प्रस्तरमूर्त्तिवत् निश्चलं स्थितमित्यर्थः। सुराः देवाः सिद्धाश्च देवयोनिविशेषाः तेषां वृन्दं समूहः, विश्वकर्म्मा देवशिल्पी तस्य कारुत्वनैपुण्यं शिल्पपाटवं तेन यशः तस्य प्रकर्षं अतिशयं वाचं विना शसति स्वरूपेण व्याख्यापयतीत्यर्थः। अयं भावः यस्मिन् पुरे शिवमुद्दिश्य नूतनस्य स्तवपाठस्य श्रवणादानन्दातिशयेन वाग्विहीनः सर्वथा स्पन्दनरहितो जड़भूतो देवसिद्धसङ्घः विश्वकर्म-निर्म्मितप्रस्तरमूर्त्तित्वमात्मनः ख्यापयति। तेषां वाक्यशून्यत्व निष्प-न्दत्वञ्च प्रस्तरमूर्त्तित्वख्यापने हेतुः, एवञ्च नून तादृशप्रस्तरमूर्त्तीनां निर्म्माता विश्वकर्म्मा इति तद्यशः प्रकटितं भवति।

( पक्षान्तरे ) यस्मिन् सदा नन्दनवातिमोदनिष्पन्दभूत सुरसिद्धवृन्द विश्वकर्म्मकारुत्वनैपुण्ययशः प्रकर्ष वाच विना शसति इत्यन्वयः।

पदार्थविवरणम्। पुनः कीदृशम्? यस्मिन् स्वर्गपुरे, नन्दने वातिर्गतिविशेषो यस्य नन्दनवायुरित्यर्थः, तेन यो मोदः हर्षः तेन निष्पन्दभूत जडभूत सुरसिद्धवृन्द देवसिद्धसङ्घः सदा सतत कृत्रिममूर्त्ति-सद्भावदशायामपि विश्वकर्म्मणो रचनाकृतित्वमुद्घोषयतीत्यर्थ., अत्रापि पूर्ववत् आनन्दनिस्पन्दत्वं तत्र हेतुः॥ १८॥

१६। ( शिवलीलापक्षे ) यत्र मलिनितकटकुम्भगुण्डदण्डे प्रचुरतरे मददुर्द्दिनान्धकारे मधुकरनिकरस्य सन्निपातः करिपतिवक्त्रविलोलनाय ( भवति ) इत्यन्वयः।

पदार्थविवरणम्। पुनः कीदृश शिवपुरम्? यस्मिन् पुरे मलिनितः मलिनीकृतः गजाननसम्बन्धी कटः गण्डस्थल कुम्भः पिण्डाकृतिः शिरोऽवयव. शुण्डदण्डश्च येन तादृशे प्रचुरतरे महति 'मददुर्द्दिनान्धकारे' मदेन दानजलेन यद्दुर्द्दिन मेघाच्छन्नमहः तद्वत्प्रतीयमानत्वात्, तस्य यो अन्धकारः तस्मिन् 'मधुकरनिकरस्य' भ्रमरसमूहस्य 'सन्निपातः' समीपे गमनः आगमन, करिपतियक्त्रः गजाननः तस्य विलोलनाय चापल्याय दोलनाय भवतीति शेषः। शिवपुरे गजाननो विराजते, गजाननस्य गण्डकुम्भ-शुण्डदेशेभ्यः मदक्षरण भवति, तद्गन्धात् भ्रमराणां समागमः, तदानीं भ्रमरपातभयात् गणेशस्तु स्वशरीरम् सततम् आन्दोलयति इति भावः।

(पक्षान्तरे) अन्वयः पूर्व्ववत्।

पदार्थविवरणम्। यत्र स्वर्गपुरे मलिनित मलिनीकृत ऐरावत-सम्बन्धि कटकुम्भगुण्डदण्ट येन स तस्मिन्, प्रचुरतरे महति

मददुर्दिनान्धकारे मदस्रावेण दुर्दिनं तेन ये अन्धकारः तस्मिन्, मधुकरनिकरस्य अलिकुलस्य यः सन्निपातः सम्भूय पतनं करिपतिकपोलविलोलनाय ऐरावतमुखसञ्चालनाय भवतीति शेषः ॥ १६ ॥

२०। ( शिवलीलापक्षे ) यत्र श्रवसः श्रेय प्रीतिमंजननं भीमविक्रमसश्रितं यशः उच्चैः गीयते श्रूयते चापि इत्यन्वयः। चापि-भामेत्यन्वयो यद्वा कल्पाद् बोध्यः।

पदार्थविवरणम्। पुनः कीदृशं तत्पुरम्? यत्र श्रवसः कर्णस्य श्रोतुर्वा श्रेयःप्रीतिसञ्जननं मङ्गलप्रमोदयोः सम्यक् साधनं भीमस्य शिवस्य विक्रमसंश्रितं विविधलीलाकर्मसम्बन्धि यशः, यत्र उच्चैः गीयते च श्रूयते अपि। यत्र श्रोतॄणां मङ्गलकरं आनन्दजननं च शिवलीलामहिम्नः स्तोत्रं पठ्यते श्रूयते चेति भावः। यद्वा चापिभीमविक्रमसंश्रितं चापिनो धनुर्धरस्य भीमस्य शिवस्य यो विक्रमः त्रिपुरसंहारदशायां पराक्रमः तत्संश्रितं तदालम्बनम् यशः महिमा।

(पक्षान्तरे) यत्र उच्चैःश्रवसः श्रेयः प्रीतिसञ्जननं भीमविक्रमसंश्रितम् यशः गीयते च श्रूयतेऽपि इत्यन्वयः।

पदार्थविवरणम्। यत्र स्वर्गपुरे उच्चैःश्रवसः उच्चैःश्रवोनामकस्य इन्द्राश्वस्य भीमविक्रमसंश्रितम् भीमो रिपूणां भयङ्करो यो विक्रमः पदक्षेपः पराक्रमो वा तत् संश्रितं तत्सम्पृक्तं श्रेयः प्रशस्यतरं यशः प्रीतिसञ्जननं आनन्दजनकं यथा स्यात् तथा यत्र गीयते च श्रूयते अपि। अथवा श्रेयसां सत्पुरुषाणां प्रीतिसञ्जननं यशः गीयते च श्रूयतेऽपि ॥ २० ॥

२१। ( शिवलीलापक्षे ) यत्र निशि निशि दुर्दिनकरकरैव रुद्रचन्द्रोरस्मीनां निर्मला वारिधारा नितान्तः ( भावः ) -

उपनिपोदच्चित्रभानूग्रतेजःक्षतजलसुरसिन्धुं सततं सम्पूरयन्ति इत्यन्वयः ।

पदार्थविवरणम् । पुनः कीदृशम् ? यत्र शिवपुरे निशि निशि प्रतिनिशं तुहिनकरश्चन्द्रः आकाशस्थः शिवललाटस्थो वा तस्य करौघः किरणसमूहः तेन स्पृष्टा ये चन्द्रोपलाः चन्द्रकान्तमणयः तेषां निर्मलाः स्वच्छाः वारिधाराः निष्पतन्त्यः निर्गलन्त्यः सत्यः उपनिपोदन् समीपे स्थितः यः चित्रभानुः शिवललाटस्थानलः तस्य यद् उग्रं प्रखरं तेजः तेन क्षतं शोषित जलं यस्याः तादृशीं सुरसिन्धुं शिवशिरोविहारिणीं गङ्गां सम्पूरयन्ति । गङ्गा हि हरजटाकलापसञ्चारिणी अग्निश्च हरललाट-नेत्रस्थ इति तयोः सन्निधानम् । यद्वा उपनिपोदन् समीपस्थितः चित्रभानुः अग्निर्यत्र तादृशः उग्रः महादेवः तस्य तेजः तेन—शोषितजलापि गङ्गा यदीयचन्द्रकान्तस्यन्दमानजलैरापूर्य्यते तथाविधं पुरमितिभावः ।

(पक्षान्तरे) अन्वयः पूर्ववत् ।

पदार्थविवरणम् । यत्र स्वर्गपुरे प्रतिरात्रि चन्द्रकिरणस्पृष्टचन्द्रका-न्तमणिस्यन्दमाना निर्मला पार्थिवांशरहितत्वादनाविलाः वारिधाराः उपनिपोदन् सन्निहितः यः चित्रभानुः सूर्यः तस्य सुमेरौ सदा सन्निधान प्रसिद्धम्, तस्य उग्रतेजोभिः प्रखरकरैः क्षतजलां शोषित-सलिला सुरसिन्धुं मन्दाकिनीं सम्पूरयन्ति पूर्णां कुर्वन्ति ॥ २१ ॥

२२। (शिवलीलापक्षे) यस्मिन् शुकशशाङ्कशङ्खरसरस्वत्यादिशङ्का-स्पदं अमलच्छायादरी मुक्तामणिडतकूटकोटिः दृश्यते । ( यस्मिन्श्च ) रत्नाश्मवप्रस्थिता भीमब्रह्मकृशानुभानुमयता, नीलाश्मभास्तत्स्थले वैदुर्यग्रामित-कण्ठकण्ठकलना (भवति) इत्यन्वयः ।

पदार्थविवरणम् । पुनः कीदृशं शिवपुरम् ? यस्मिन् शुक्रः तन्नाम्ना प्रसिद्धो ग्रहः, शशाङ्कः चन्द्रः, शङ्करः शिवः, सरस्वती वाग्देवता आदिर्येषां ते, सर्वं एवैते शुभ्रवर्णाः अतएव तेषां शङ्कास्पदं तद्रूपतया सन्देहविषयः मुक्तामण्डितकूटकोटिः मुक्तैः शिवसालोक्यप्राप्तैः आमण्डिता सम्यग् भूषिता कूटकोटिः शिखराग्र बहुशिखराणि वा, कैलासशिखरकोटिरपि शुभ्रवर्णा अतएव शङ्का—किं शुक्रादि-देवताः अत्र विराजन्ते ? अमला निर्मलाः छाया कान्तिः दर्यः कन्दराश्च यस्याः सा अमलच्छायादरी दृश्यते । पर्वतान्तराणा कन्दरा. तमोवृता भवन्ति अस्य तु महाभास्वरस्य शिवगिरेः कन्दरा अपि समुज्ज्वला इति भावः । कैलासे रक्ताश्मना पद्मरागमणीना ये वप्राः प्राकारास्तेषु भौमादिदेवतास्वरूपत्व सदा वर्त्तते, भौमः मङ्गलग्रहः, ब्रह्मा चतुराननः, कृशानुः अग्निः, भानुः सूर्यः, एतेषां रक्तवर्णत्वात् पद्मरागमयप्राकारेषु एतद्देवतास्वरूपता प्रतीयते । नीलाश्मानः नीलमणयः तेषां भास्वत्स्थलानि दीप्यमानप्रदेशाः, तेषामुज्ज्वलनीलप्रभासु वैकुण्ठस्य श्रीकृष्णस्य, असितकण्ठः नीलकण्ठः तस्य यः कण्ठः गलदेशः तस्य च कलना निरूपणम् भवतीति शेषः । कैलासे नीलमणिमयप्रदेशः श्रीकृष्णवत् नीलकण्ठकण्ठवच्च प्रतीयत इति भावः ।

( पदान्तरे ) यस्मिन् शुक्रशशाङ्कशङ्करसरस्वत्यादिशङ्कास्पद अमलच्छाया मुक्तामण्डितकूटकोटिः दरीदृश्यते । रक्ताश्मवप्रस्थिता भौमब्रह्मकृशानुभानुमयता, नीलाश्मभास्वत्स्थले वैकुण्ठासितकण्ठकण्ठ-लना ( कच ) इत्यन्वयः ।

पदार्थविवरणम्। पुनः कीदृशं स्वर्गपुरम्? यस्मिन् सुमेरौ मुक्तानिचयमण्डितकोटिसङ्घकशुभ्रकान्तिभवनानि शुक्लवर्णसाम्यात् शुक्रग्रहचन्द्रमहादेववाग्देव्यादिस्वरूपेण सन्देहविषया भवन्ति। तथैव तादृशभवनकोटिः दरीदृश्यते भृशं दृश्यते (दृश्+यङ्) निरीक्ष्यते। सुमेरौ पद्मरागमणिमयाः प्राकाराः मङ्गलग्रहचतुर्मुखवह्निमानूनां स्वरूपं नीलकान्तमणिसमुज्ज्वलस्थलानि च श्रीकृष्णनीलकण्ठकण्ठयोः स्वरूपं प्रकटयन्तीति श्लोकार्थः ॥ २२ ॥

२३। ( शिवलीलापक्षे ) कनकरुचिरस्निग्धज्योतिःप्रकर्षविभूषिते प्रवालविलासिनि बहलरुधिरोद्गारे यस्मिन् महातमः मरकतचयच्छद्मच्छन्नं ( सत् ) *अरुणकिरणग्रासाशङ्कां विहाय चिराय विराजते* इत्यन्वयः।

पदार्थविवरणम्। पुनः कीदृशम्? कनकरुचिरः धुस्तूरकुसुमभूषणः स्निग्धज्योतिःप्रकर्षः शिवः, ज्योतिषां ज्योतिरिति श्रुतेः तादृशज्योतिषः स्निग्धत्व—अघोरस्य 'या ते रुद्र तनूरघोरा'—इति श्रुतेश्च। तेन विभूषिते शोभमाने, 'प्रवालविलासिनि' प्रवालाः किशलयानि तेषां विलासः विस्तारः तद्वति, शिवतपोवनमण्डिते कैलासे तरुषु नवपत्राणां सद्भावः, तेन प्रतीयते यथा अयं पर्वतो बहुलं प्रचुरं रुधिरं उद्गिरतीव तादृशे यस्मिन् कैलासपुरे, महातमः महान् अन्धकारः मरकतचयच्छद्मच्छन्नं मरकतमणिप्राचुर्यं नैसर्गिकं, तच्छलेन छन्नं आत्मगोपनरतं सत् रक्तवर्णदर्शनादरुणोऽयमुदित इति बुद्ध्वापि, अरुणकिरणग्रासाशङ्कां अरुणकरग्रासभीतिं विहाय चिराय विराजते विभाति।

( पक्षान्तरे ) अन्वयः पूर्ववत्।

पदार्थविवरणम् । कनकरुचिरे सुमेरोः स्वर्णमयत्वात् स्वर्णज्योतिःसमुज्ज्वले प्रवालनिलाशिनि विद्रुमरत्नप्रचुरे पद्मरागमणिबहुले च यस्मिन् इन्द्रपुरे मरकतमणिमयवप्रच्छलेन महान्धकाराः सूर्य्यकरग्रासभीतिं परित्यज्य विभान्ति । अत्र भाव.—प्रवालपद्मरागरक्तद्युतिपराजिता अरुणकिरणा अत्र नागमिष्यन्तीति तच्छङ्कारहिता अन्धकारा मरकतमणिवप्रच्छलेनात्र तिष्ठन्तीति कवेरुत्प्रेक्षा । तमसोऽपि नीलरूपत्वेन प्रतीतेः मरकतमणिसादृश्यम् ॥ २३ ॥

२४। ( शिवलीलापक्षे ) सविधससरच्छशिविभावसुज्योतिषा सदा निलुप्ततिमिरान्तरे प्रकृतिभास्वरे यत्पथे महीतनपुरोचितः कदर्थिकरसोदरः दण्डदीपोत्करः मित्रोज्झितं वसुचयं न हरति ( अथच वसु च यत् अमित्रोज्झितमपि हरति ) इत्यन्वय. ।

पदार्थविवरणम् । पुनः कीदृशम् ? सविधे निकटे ससरतोः सम्मिलतोः शशिविभावस्वोः शिवस्य ललाटचन्द्रतृतीयनेत्रानलयोः ज्योतिषा विलुप्ततिमिरं हतान्धकारं अन्तरं मध्यं यस्य । प्रकृत्या दुर्गया भास्वरे तत्प्रभया उज्ज्वलतमे यत्पथे यस्य शिवपुरस्य मार्गे महीतलपुरोचितः भूतलनगरयोग्यो यः दण्डदीपोत्करः लौहादिदण्डस्थितदीपसमूहः मित्रोज्झितं सूर्यदत्तं वसुचयं रश्मिसमूहं न हरति नात्मसात् करोति । अग्निः किल नक्तं सूर्यदत्तं तेजो गृह्णातीति शास्त्रप्रसिद्धिः । मर्त्यभूमौ तादृशदीपसमूहो नगरमार्गे ज्वलति, अतएव सूर्यतेजो गृह्णाति । अत्र तु तादृशदीपसमूहस्य निष्प्रयोजनत्वेनाभावात् तादृशदीपज्वलनं नास्तीति भावः । दण्डदीपोत्करः कीदृशः ? कदर्थिकरसोदरः कुत्सिता अर्थिनः कदर्थिनः प्राप्तार्था अपि याचनपराः सदा तृप्तिरहिता अर्थिनः, तत्करसोदरः सदा-

प्रसारितः करः इव। सादृश्यद्योतनाय शब्दश्लेषबोधकं वाक्यमिदं—'वसु च यत्रमित्रोज्झितं हरति', इति, कदर्थिकरो हि वसु धनं यत् प्राप्नुवन् अपि अमित्रोज्झितं शत्रुदत्तं च गृह्णाति, अश्रद्धया क्रोधेन पीडयन्नपि यदि कश्चित् कदाचित् किञ्चित् ददाति तदपि गृह्णातीति अर्थिनः कुत्सितस्य, तत्सादृश्यञ्च भूतलनगरस्थदण्डदीपोत्करे ॥ २४ ॥

( पक्षान्तरे ) अन्वयः पूर्ववत्।

पदार्थविवरणम्। पुनः कीदृशम् ? सुमेरोः सन्निहितगगने चन्द्रसूर्ययोः परिभ्रमणं प्रसिद्धम्। अतएव सविधे समीपे ससरतोः शशिविभावस्वोः चन्द्रसूर्ययोः ज्योतिषा किरणेन हृतं तमो यस्य तादृशम् अन्तरं मध्यं यस्य तस्मिन् अतएव 'प्रकृतिभास्वरे' निसर्गोज्ज्वले यत्पथे शक्रपुरस्य मार्गे, अवशिष्टांशः उभयपक्षे समानः। अर्थात् सततमालोकशालिनि तन्नगरमार्गे निष्प्रयोजनतया भूतलनगरोचिताः स्तम्भकल्पितदीपश्रेणयो न वर्त्तन्ते इति पद्यद्वयतात्पर्यम् ॥ २४ ॥

२५। (शिवलीलापक्षे) तत्र यथा महाश्रीफलजातगौरवं कुसुमेषुमाद्यंव यथा अमनोगं यथा च आगमसविधानकं तथा अन्यतः क्वचित् नैव विलोक्यते इत्यन्वयः।

पदार्थविवरणम्। तत्र शिवपुरे यथा यादृक् महाश्रीफलजातगौरवं श्रीफलजातविल्वसमूहः तस्मिन् महद् गौरवं सर्व्वेषां श्रद्धाबुद्धिः श्रीफलस्य शिवप्रियत्वात् इदानीं दृश्यमानकैलासस्थाने विल्ववृक्षाणाम् अभावेन शिवपूजाभिलाषिणा तत्रादरातिशयः। मायावृते शिवस्थाने श्रीफलवृक्षसमूहभारबाहुल्यं वस्तुतो वर्त्तत इति तु रहस्यम्। कुसुमेषो-

मंदनस्य मार्द्दवं प्रानल्पराद्दित्वम् यथा अमनोग मनसो न गोचरः, इतरैः मनसा न ग्रहीतुं शक्यत इत्यर्थः। अथवा मनोग तत्रत्यैः सर्व्वैः मनसानुभूयते, तत्रत्याः सर्व्व एव जितेन्द्रिया इत्यर्थः आगमाना तन्त्रशास्त्राणां संविधानकं अधिकारभेदेन विधिव्यवस्था आगमवक्ता शिवेन स्वयं व्यवस्थापनात्। तथा अन्यतः क्वचित् नैव विलोक्यते। एवम्भूतं पुरं प्रति शिवः प्रतस्थे इति पूर्वस्थितेन द्वादशसंख्यकश्लोकेन सह सम्बन्धः। द्वादशमारभ्य चतुर्दशभिः कुलकम्।

( पक्षान्तरे ) अन्वयः पूर्ववत्।

पदार्थविवरणम्। तत्र इन्द्रपुरे यथा महाश्रिया मुदरयाना फलजातानां गौरवं रसादिप्राचुर्य्येण आदरातिशयः। अथवा महत्याः श्रियाः समृद्धेः महतः फलात् जातं कर्म्मफलसम्भूतं गौरवम्। कुसुमेषु पारिजातादिषु पुष्पेषु मनोग मार्द्दवं कोमलता। मनसैव तादृशकोमलत्वमनुभवनीयमित्यर्थः मनोगं सुरुचिरं वा। तत्र अगमानां मन्दरादिदेवद्रुमाणाम् सविधाने भोग्यताव्यवस्था तथा अन्यतः क्वचित् न विलोक्यते, एवम्भूतं पुरं प्रति देवराजः प्रतस्थे इति द्वादशश्लोकेन सह सम्बन्धः। पक्षद्वयेऽपि कविसमकालीनवस्तुजातमादायेद वर्णनम् इति कुलकम्॥ २५॥

२६। (शिवलीलापक्षे) अथ प्राज्यमन्युः आसन्नपतनः सः (दक्षः) श्रीभवने सत्रप्रवृत्ते पुरोहिते मृगी स्थितः किं नार्त्तात्? इत्यन्वयः।

पदार्थविवरणम्। अथ अनन्तर, अथेति कथान्तरद्योतक च, प्राज्यमन्युः प्रचुरकोपः आसन्नपतनः आगतप्रायविनिपातः सः शिवहीनयज्ञप्रवृत्तो दक्षः श्रीभवने श्रिया लक्ष्म्याः भवनं उद्भवो यस्मात्, लक्ष्मीः

भृगुदुहितेति विष्णुपुराणम् इति लक्ष्म्याः जनके सवप्रवृत्ते सत्रः यज्ञः तत्र प्रकर्षेण प्राधान्येन वृते पुरोहिते भृगुनामके महर्षौ स्थितः अविचलितः किं नासीत्? अपितु आसीदेव।" अथच स्थितः स्थेयत्वेन निश्चयवान् आसीत्। स्थेयः संशयस्थले एकतरनिर्णेता। भृगुमवलम्ब्य तन्मन्त्रणया दक्षो यज्ञप्रवृत्त आसीदिति फलितार्थः। सङ्गच्छते चासन्नपतनस्य भृगुस्थितिरिति ध्वनिः। अनन्तरं क्रोधी दक्षः स्मरारिणाममगणयन् शिवहीनयज्ञानुष्ठानाय महर्षिं भृगुं प्रधानपुरोहितपदे वृतवानिति भावार्थः।

(पक्षान्तरे) अथ सः प्राज्यमन्युः सवप्रवृत्ते अभृगौ पुरोऽहिते श्रीभवने स्थितः किं आसन्नपतनो नासीत्? इत्यन्वयः।

पदार्थविवरणम्। (अथ) अमरावतीपुरप्रवेशानन्तरम्, सः 'प्राज्यमन्युः' = शतमन्युः इन्द्रः, 'सवप्रवृत्ते' वप्रेण प्राकारेण वृतं वेष्टनं वप्रवृत तेन सह वर्त्तमाने, 'अभृगौ' प्रपातभिन्ने 'पुरोऽहिते' अचिरभाविविपत्सूचकदुर्निमित्ते 'श्रीभवने' स्वीयप्रासादे 'स्थितः' किम् 'आसन्नपतनो' नासीत्? पतनशब्देनाधःसंयोगानुकूलव्यापारः अवनतिश्च बोध्यते। वेष्टनरहिते भृगुस्थाने स्थितस्य पतनं सम्भाव्यते तद्विपरीते निरापत्स्थाने स्थितोऽपि आसन्नपतनोऽभूदिति विरोधाभासः। इन्द्रस्तु स्वपुरं प्रविश्य प्राकारवेष्टिते सुरक्षिते प्रासादे स्थितोऽपि आसन्नानिष्टसूचकदुर्निमित्तदर्शनेन सम्भावितपतन एवासीदिति भावः॥ २६॥

२७। (शिवलीलापक्षे) एवमपि असमा सती देवर्षिविशेषाभ्युदिता अन्तःकर्मलोचनाय इच्छया अप्रसन्नम् (यथा स्यात्तथा)

पदार्थविवरणम् । 'एवमपि' दक्षस्य तादृग्यज्ञानुष्ठानेऽपि 'असमा' अनुपमा 'सती' दाक्षायणी 'देवर्षिणा' नारदेन 'विशेषेण' 'अभ्युदिता' कथिता सती अनन्तः पितुः दक्षस्य कर्मणो यज्ञस्य 'आलोचनाय' दर्शनाय 'इच्छया' आग्रहेण 'अप्रसन्न' यथा स्यात् तथा 'अचरत्' जगाम । शिवावहेलनारम्भश्रवणात् सत्याः दौर्मनस्यम् अतएवाप्रसन्नता ।

नारदवचनाद् जाताग्रहा सती पितुर्यज्ञदर्शनार्थं जगामेति भावः ।

( पक्षान्तरे ) एवं सति अपि देवर्षिविशेषाभ्युदितेच्छया अप्रसन्नमनः कर्म्मालोचनायासम् आचरत् । इत्यन्वयः ।

पदार्थविवरणम् । 'एव सत्यपि' अमरावतीप्रासादस्थितौ सत्यामपि देवराजस्य निश्चिन्तता नासीद् इत्यभिप्रायेणाह—( इन्द्रः ) देवानाम् ऋषीणाञ्च विशेषेण अभ्युदितं वृद्धिः तदिच्छया ( उपलक्षणे तृतीया ) । अप्रसन्न मनो येन तादृशस्य कर्म्मणः आलोचनायास स्वकृतापराधस्य दुर्व्वास.शापप्रदानस्य च विचारप्रयासम् आचरत् अकरोत् । कथ मङ्गल भवेत् किञ्च मया कृतमिति शक्रश्चिन्तयामासेति भावः ॥ २७ ॥

२८ । ( शिवलीलापक्षे ) दश-महाविद्याभासा दश दिशः अष्टा वीक्ष्य श्रीसत्याः भावमुन्नीय देवेशेन गति मता । इत्यन्वयः ।

पदार्थविवरणम् । सत्याः दक्षगृहगमन शिवेन कथ न निवारितमित्याशङ्कायामाह—अष्टा इति । 'दशमहाविद्याना' कालीताराप्रभृतीना 'भासा' तेजसा दशदिशः 'अष्टा' व्याप्ताः अशुङ्-अश् धातोः निष्ठाया रूपम्, वीक्ष्य 'श्रीसत्याः' श्रीमत्याः सतीदेव्याः 'भावम्'

अभिप्रायम् उन्नीय बुद्ध्वा 'देवेशेन' देवेन ईशेन शिवेन 'गतिर्मता' तस्याः पितृगृहगमनमनुमतम् ।

( पक्षान्तरे ) अष्टादश-महाविद्याभासा देवेशेन दश दिशो वीक्ष्य श्रीसत्याभावम् उन्नीय गतिः मता । इत्यन्वयः ।

पदार्थविवरणम् । अष्टौ अणिमाद्यैश्वर्य्याणि दश दिव्यादिव्यरूपाः शब्दादिविषयाश्च महाः उत्सवा यतः सा अविद्या, अस्मितादीनामेतन्मूलकत्वात् अविद्याशब्देन सर्वेषां तेषां ग्रहणम्, तस्याः भाः प्रकाशो यस्मिन् सः तेन देवेशेन इन्द्रेण दश दिशो वीक्ष्य श्रियाः लक्ष्म्याः सत्य वास्तवम् अभावम् उन्नीय निश्चित्य गतिः स्वदशा मता ज्ञाता । अविद्याशब्दगृहीताश्च अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेशश्चेति । अनया अविद्यया अणिमा, लघिमा, गरिमा, प्राकाम्य, महिमा, प्राप्तिः, ईशित्व, वशित्व, चेत्यष्टैश्वर्य्याणि, ( इति साख्यतत्त्वकौमुदी ) शब्दादिविषयाश्च पञ्च दिव्यादिव्यतया दशविधाः इत्यष्टादश यथा सम्भव सुखहेतवो भवन्ति । देवा अपि एतदविद्यावशगाः, येन ऐश्वर्य्याभिमानिनो भोगासक्ताः असुरादिभीताश्च भवन्ति । इन्द्रस्य तदानीम् अष्टादशाना सुखहेतूनामपायभयाद् व्याकुलता जातेति सूचनाय अष्टादशमहाविद्याभासेत्युक्तमिति बोध्यम् ॥ २८ ॥

२६ । ( शिवलीलापक्षे ) तस्मिन् क्षणे परिकरैः सहिता विधेः पौत्री श्रितवृषा भववारिधाम प्रयाता । सा शिवाशासद्भावत. शिवक्दर्शनतश्च जगद् दुःखाम्बुधौ निमज्ज्य नष्टा अपि । इत्यन्वयः ।

पदार्थविवरणम् । 'तस्मिन् क्षणे' शिवानुमतिप्राप्तिक्षणे 'विधेः पौत्री' ब्रह्मपुत्रस्य दक्षस्य दुहिता, 'परिकरैः' नन्द्यादिभि. परिजनैः

'सहिता' युक्ता 'श्रितवृषा' वृषारूढा सती भवचारिणः शिवप्रतिषेधिनः 'शिवसम्बन्धो' माभूत्' इतिनिषेधं कृतवत', दक्षस्येत्यर्थः धाम गृह, अथवा भववारि शिवामन्त्रणरहित धाम गता । तत्र गमनानन्तरं 'शिवाशासन्द्रावत.' शिवमागस्यासक्ता प्रेक्ष्य 'शिवकदर्थनत.' पितृकृतशिवनिन्दा निशम्य च जगत् दु.खाम्बुधौ शोकसमुद्रे निमज्ज्य मज्जयित्वा नष्टा नाश प्राप्ता च, इत्यदेह त्यक्तवतीत्यर्थः ।

(पक्षान्तरे) तस्मिन् क्षणे श्रितवृषा विधेः पौत्री परिकरैः सहिता अभववारिधाम प्रयाता । शिवाशासद्रावतः शिवकदर्थनतश्च जगत् दुःखाम्बुधौ निमज्ज्य नष्टा अपि । इत्यन्वयः ।

पदार्थविवरणम् । तस्मिन् क्षणे इन्द्रस्य लक्ष्मीभ्रंश-निश्चयसमये श्रितवृषा श्रित' अधिष्ठित' वृषा इन्द्रो यया अथवा वृषो धर्मः तदनुगता । विधेः पौत्री ब्रह्मनन्दनस्य भृगोः दुहिता लक्ष्मी, तदानीं लक्ष्मीः भृगुदुहिता आसीदिति पुराणवार्त्ता । परिकरैः ऐरावतादिभिः अथवा सहचरैः गुणादिभिः सहिता अभवस्य अजस्य विष्णोः वारिधाम क्षीरोदसागररूपं वासस्थानं प्रयाता प्राप्ता । केवलं न तत्स्थानप्राप्तिः, अपि तु नाश गतेत्याह शिवाशासद्रावतः शिवाशः दुर्वासाः, 'दुर्वासाः शङ्करस्याशः' इति विष्णुपुराणात् । तस्मिन् असद्रावतः असाधुव्यवहारात् शिवस्य मङ्गलस्य महर्षिदुर्वास.-प्रदत्तारी पूतपारिजातप्राप्तिरूपमङ्गलस्य कदर्थनतश्च हेलनात् न्यक्काराच्च जगत् दु खाम्बुधौ निमज्ज्य नष्टा अदर्शनं गता । लक्ष्मीविरहात् जगत् दु.खमयमेव जातमिति भाव. । अथच अभववारिधाम नास्ति भवः सप्तारो यत्र, तत्—वारिधाम्नो विशेषणम्, वारिधाम सागर:,

न गताना सखारो न भवति तेनास्येन्द्रानधीनत्व सूचितम्, दस्य वारिधाम गतेति वा। पूर्वं भृगुदुहितृरूपेणाविर्भूता लक्ष्मीः न्द्रस्य कल्याणाय स्थितवती, इदानीं दुर्व्वास.शापात् सा क्षीरोदस-द्रमध्ये प्रविष्टा ॥ २६ ॥

३०। ( शिवलीलापक्षे ) *तस्मिन् भूतसङ्घे इति अचिन्त्या विपदं* क्षमाणेऽपि किमिति किमिति वाच बोधशून्यं ( यथा स्यात् तथा ) ाचयन् तदानीं सकलकरणरोधी कोऽपि आन्तरः भावः उपनिहितप-ाऽभूत्। इत्यन्वयः।

पदार्थविवरणम्। 'तस्मिन्' देव्यनुचरे 'भूतसङ्घे' प्रमथगणे ति एवम्प्रकाराम् *सतीदेहत्यागरूपाम् अचिन्त्याम् अभावनीयां विपद* ीक्षमाणे पश्यति सत्यपि किमिति किमिति किं जातं किं जातमित्या-कारिका वाच बोधशून्य विशिष्टज्ञानहीनं यथा स्यात्तथा वाचयन् उच्चा-यन् तदानीं तत्काले आन्तरः मानस· कोऽपि भाव. दु.खातिरेकविस्मय-हितितत्त्वानिश्चयपुर.सरः सकलज्ञानविलोपी मोहः उपनिहितपदः पस्थितः अभूत्। *सतीदेहत्यागदर्शनमात्रेण देवीपरिजनाः प्रमथा.* दुःखातिशयविस्मय-सन्देहतत्त्वानिश्चयादिबहुभावविह्वलीभूताः बभूवु·।

(पक्षान्तरे) अन्वय प्रायेण पूर्ववत्। वीक्षमाणेऽपि तस्मिन् भूतगणे इति तु विशेषः।

पदार्थविवरणम्। इति एवम् अचिन्त्या कल्पनापथातीता विपदं लक्ष्म्याः *सागरप्रवेशरूपाम्, वीक्षमाणेऽपि—'अपि' कारात् अवीक्षमाण* त्यस्य लाभ। तेन ये क्षीरसागरसमीपस्थाः लक्ष्म्या सागरप्रवेश ददृशु ये च दूरस्था न ददृशु· सर्व एव ते विमूढा जाताः। तस्मिन् भूतसङ्घे

प्राणिसमूहे किमिति किमिति याच बोधशून्य वाचयन् तदानीं सकलक-रणरोधी सकलेन्द्रियं निष्क्रियं कुर्वन् आन्तरः कोऽपि भावः सहसा दुःख-विस्मयादिपुरःसरो मोहः उपनिहितपदः अभूत् समागतः। जगत् लक्ष्मीहीन सत् अज्ञातदुःखातिरेकेणापि विमूढ बभूवेति भावः ॥ ३० ॥

इति प्रथमसर्गटीका।

---

## द्वितीयः सर्गः।

१। (शिवलीलापक्षे) अथ तथाविधभावपरिक्षये (सति) उदिता विषमा दशाम् स्वनुभवन् स भूतगणः अतिरुरोद खलु, करुणारवैः रोदसी रुरोध च इत्यन्वयः।

पदार्थविवरणम्। 'अथ' कियत्क्षणानन्तर 'तथाविधभाव-परिक्षये' तादृशसम्भूतावस्थाविगमे सति 'उदिताम्' उपस्थिता 'विषमा' दारुणा 'दशा' सतीदेहत्यागान्मातृहीनावस्था 'स्वनुभवन्' विशेषेण बुद्ध्वा 'स.' 'भूतगणः' प्रमथगण. 'अतिरुरोद' भृशं चक्रन्द 'खलु' वाक्यालङ्कारे। 'च' किञ्च करुणारवैः करुणैः दीनताव्यञ्जकैः आरवैः शब्दैः 'रोदसी' द्या पृथिवीञ्च 'रुरोध' पूरयामासेत्यर्थः।

विश्वजनन्या. दुर्गायाः साक्षात् सेवकाः खलु भूता. पुत्रायमाणाश्चिरं ब्रह्मरूपिण्यास्तस्याः प्रत्यक्षलक्षणपरमानन्दमनुभूतवन्त इदानीं तद्दर्शन-जन्यदुःखानिशाय परिभ्रिष्टासवो बालभावेन तदुपासनमारमन्ते मातृनाम-गुणमहिमकीर्त्तनेन। बाल्येन तिष्ठासेदिति श्रुतिसम्मत भावमावेदयितुमय मर्ग. प्रारभ्यते। एतदुपासनविवरण ब्रह्मसूत्रशाङ्करभाष्ये द्रष्टव्यम्।

( पद्यान्तरे ) प्रथमपद्यवदन्वयः ।

पदार्थविवरणम् । अत्र विशेषः, विषमा दशा स्वर्गराज्यात् श्रीभ्रंशेन शोच्यावस्थाम् 'उदिता' समागता 'स्वनुभवन्' सम्यग् जानन् 'स भूतगणः' जीवगणः । लक्ष्मीसन्निधानज्ञानशालिना जीवाना नियतमेवानन्दसन्दोहसम्भोग आसीत्, सहसा तस्यास्तिरोधानेन तद्विपरीता दशा समापन्नेति प्रथम तेषा विमूढावस्था ततश्च दुःखातिशयबोधः ; इदानीमार्त्ताना तेषा दुःखहानये करुणरसपरिपूर्णा मातृस्तुतिः । सैव उपासनारूपा । आर्त्तानामुपासना तु शास्त्रसिद्धैव । तथा च भगवद्गीताया 'चतुर्व्विधा भजन्ते मा जनाः सुकृतिनोऽर्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' । बाल्येन तिष्ठासेदिति च श्रुतिसिद्धमार्त्तबालभावेनोपासन सूचितमस्मिन् सर्गे ॥ १ ॥

२ । ( शिवलीलापक्षे ) जगतीगतिं भगवतीं विधिसूनुसुता *विना जगत् न अजगणत् । अथवा किं गणयेत् ? यः चातकः* नवनीरदावलिम् ऋते मृत एव । इत्यन्वय. ।

पदार्थविवरणम् । जगत्याः गतिः उपायभूता ता 'भगवतीं'='सेव्यते या सुरैः सर्वैस्ताञ्चैव भजते यत. । धातुर्भजेति सेवाया भगवत्येव सा स्मृता ।' इति देवीपुराणोक्तलक्षणा 'विधिसूनुसुता' विधेः सूनुः दक्षः तस्य सुता दाक्षायणी ता 'विना' जगत् 'न' 'अजगणत्' गणयति स्म, ( भूतगण इति पूर्व्वानुवृत्त कर्त्तृपदम् ) जगत् तुच्छ मेने इति भावः । जगत आश्रये विनष्टे जगतः स्थितिरपि न सम्भाव्यते इति तत्र तुच्छता । *अथवा किं कथ गणयेत् ?* जीवत एव जगति भवत्यास्था न मृतस्य । दृष्टान्तेन समर्थ्यते—'नवनीरदावलि' नवमेघचयं 'विना'

सः 'चातकः' 'मृत' एव। यथा हि मेघविरहितं जगत् चातकानां न स्वल्पायाप्युपकाराय प्रभवति, मरणात्मकक्लेशमेव तेषां जनयति च, तथैव जननीविरहेण प्रमथानां पुरतो जगत् शून्यं निष्प्रयोजनञ्च प्रतिभाति मृतप्रायत्वाच्चेषाम्।

( पक्षान्तरे ) पूर्ववदन्वयः। अस्मिन् पक्षे विशेषः—'भगवतीम्' ऐश्वर्याद्यधिष्ठात्रीम्। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना' इतिस्मरणात्। तादृशो भगो विद्यते यस्याः, मत्वर्थः स्वामित्वम्। 'विधितनुसुता' विधिर्ब्रह्मा तस्य सूनुः भृगुः तत्सुता लक्ष्मीः, तां विना जीवाः मेघावलिं विना चातक इव मृता एव, जीवन्मृता इति भावः। विष्णुशक्तिस्वरूपाया लक्ष्म्याः स्थितौ जगतः स्थितिः, तदभावे जगतोऽपि विनाशः। आसन्नविनाशं तादृशं जगत् अकिञ्चित्करमेव जीवगणस्य। अथवा जीवगणः श्रीहीनः स्वयं मुमूर्षुरेव जातः, मुमूर्षोः किं कार्यं जगता ? ॥२॥

३। ( शिवलीलापक्षे ) अयं ह्रियं न, भियं न, धृतिं च नो, विनयं न, धियं न, पौरुषञ्च न तथा तदितरस्मरणं न अभजत्, यदि खेदमयः समजायत इत्यन्वयः।

पदार्थविवरणम्। अयम् प्रमथगणः 'ह्रियं' लज्जां 'न', 'भियं' भयं 'न', 'धृतिं' धैर्यं 'च' एव 'नो', नैव 'विनयं' शिक्षां 'न', 'धियं' बुद्धिं 'न', 'पौरुषं' पुरुषकारं च न अभजत् तथा = तेन प्रकारेण 'तदितरस्मरणं' न अभजत्, जननीवियोगादन्यत् किमपि चिन्तयामासेत्यर्थः। अनेके यावत् लज्जावशात् न शोकं प्रकटीकुर्वन्ति यदि सुधियः परपरिवादनहास्यतां गच्छेमेति। केचन गुरुजनादिभयात्

शोकान्निवर्त्तन्ते, केचन धृत्या वा शोक सवृण्वते, केचित् शिक्षया, बुद्धिबलेन साहसद्वारा वा शोकसागरमुत्तरन्ति परन्तु भूतगणस्य शोकातिशयाद् विमूढे मनसि लज्जाभयादिबोधस्यावकाश एव नासीदिति तात्पर्यम् ।

( पक्षान्तरे ) अन्वयः पूर्ववत् ।

जीवगणस्य सर्व्वस्यैव समावस्थतया कस्मात् कस्य वा लज्जाभयादिकम् ? शोकाधिक्याद् धृत्यादिक तदपनोदनाक्षम जातम् । शोकवेगरोधकलज्जाभयधृतिविनयादयस्तन्मनसि नोदिताः मनसो वृत्त्यन्तरमपि नासीत् इति सङ्क्षिप्तार्थः विष्णुशक्तिर्लक्ष्मीः सत्त्वस्वरूपा तदभावे जीवगणः शोकतमोऽभिभूतः शोकमूर्त्तिरूपेणैव परिणत इति भावः ॥ ३ ॥

४ । ( शिवलीलापक्षे ) कतिपये स्वम् उरः समताडयन् परे च कचम् अलं परिलुलुञ्चुः केचन भुवि विलुलुठुः, केचन इदम् अखिलं विदधुः कति च इतरत् ( विदधुः ) इत्यन्वय. ।

पदार्थविवरणम् । 'कतिपये' प्रमथा. 'स्व' निजम् 'उरः' वक्षः 'समताडयन्' कराघातेन पीडयामासुः 'परे' अन्ये प्रमथाः च 'कच' केशम् 'अलं' अतिशयेन 'परिलुलुञ्चुः' अपनिन्युः—चिच्छिदुः । 'केचन' प्रमथाः 'भुवि' भूतले 'विलुलुठु.' परिवर्त्तनपरा बभूवुः 'केचन' इदम् अखिल वक्षस्ताडनकेशोत्पाटनभूतलपरिवर्त्तनानि सर्व्वाणि कति च कियन्तश्च गणाः इतरत् अन्य शोकप्रकाशनप्रकार विदधुः चक्रुः ।

( पक्षान्तरे ) अन्वयः पूर्ववत् ।

पदार्थविवरणम् । लक्ष्मीतिरोधानदुःखातिशयेन कियन्तो जीवाः स्वस्वरस्ताडयामासुः अन्ये च स्वकेशानुत्पाटयामासुः केचन

भूलुण्ठिता बभूवुः केचन चैतत्सर्व्वमनुष्ठितवन्तः अन्ये च प्रकारान्तरम् इति समानोऽर्थः ॥ ४ ॥

५ । ( शिवलीलापक्षे ) प्रथमम् अपरिस्फुटैः विकस्वरस्वरविलापरवैः आविरभावि, तदनु अतिस्फुटैः दीनवचोभिः ( आविरभावि ) यथा गिरयोऽपि विगलिताः अभवन् ।

पदार्थविवरणम् । प्रथमम् आदौ अपरिस्फुटैः शाब्दबोधानर्हैः विकस्वरस्वरविलापरवैः विकस्वरः उच्चतरः स्वरः कण्ठध्वनिः यत्र तादृशाः विलापस्य रवाः सम्मिलिततया वाचकशब्दा अपि अवाचकीभूताः तैः कोलाहलस्वरूपैरित्यर्थः आविरभावि आविर्भूत ( आविः+भू+लुङ् त भावे ) तदनु तत्पश्चात् अतिस्फुटैः विशदैः अर्थबोधयोग्यैरित्यर्थः दीनवचोभिः कातरतापूर्णवाक्यैः आविरभावि यथा यद्द्वारा गिरयोऽपि जडाः पाषाणमया अपि विगलिताः अभवन् द्रवीभूताः, का कथा अन्येषामिति भावः ।

( पक्षान्तरे ) अन्वयः पदार्थविवरणञ्च पूर्व्ववत् ॥ ५ ॥

६ । ( शिवलीलापक्षे ) अम्ब ! अशुभदक्षमुनेः अशिवया तया अभिचारगिरा हा ! किं कृतम् ! यत तव निरागसः तनयाः तु कथं न स्मृतिपथं समुपस्थिताः ! इत्यन्वयः ।

पदार्थविवरणम् । अम्ब ! मातः सति ! अशुभ. अनिष्टहेतुः यो दक्षमुनिः तस्य, अशिवया शिवविरोधिन्या तया तादृश्या अथवा शिवघातया शिवं प्राप्तया, अभिचारगिरा निन्दावचनेन हा खेदे, किं कृतम् अहो स्वजीवनमेव परित्यक्तम् ! यत तव निरागसः निर्दोषाः तनयाः पुत्राः तु कथं न स्मृतिपथं समुपस्थिताः,

वात्सल्यात् निर्दोषपुत्रगणमुखापेक्षया माता स्वकीयं देयमपि जीवनं रक्षतीति मातृस्वभावः, तव तु प्राणत्यागकाले तादृशपुत्राणां स्मरणं किं नासीदिति खेदमयः प्रश्नः, यत्प्राणत्यागरूपं कर्म्म तत्तवानुचितम् अथवा अनेन कर्म्मणा दक्षस्य किं कृतम् ? एकस्य दक्षस्यापराधेन तत्प्रदत्तदेहत्यागाद् वयमसङ्ख्याः निरपराधास्ते तनया मृतकल्पा भवामः तन्न विचारितम्। अथवा एतेन कर्म्मणा अपराधिनो दक्षस्य न किमपि दुःखं वयन्तु निरपराधा कीदृशं दुःखम् अनुभवाम इति न गणितमिति भावः।

( पक्षान्तरे ) अन्वयः पूर्ववत्।

पदार्थविवरणम्। अम्ब ! मातर्लदिम ! अशुभदक्षमुनेः अशुभे अमङ्गलकर्म्मणि अशुभकथनरूपे दक्षस्य कुशलस्य मुनेः दुर्व्वाससः अशिवया कठोरया तया अभिशापगिरा 'अत्र श्रिया न स्थेयम्' इति, शापवाक्येन हा ! किं कृतम् ? अहो जगत्परित्यागरूपकर्म्मणा तद्वचसः सफलत्वसम्पादनं तवानुचितमिति भावः। तव लोकमातृत्वात् सर्व्व एव वयं ते तनयाः। शेषं पूर्व्ववत् ॥ ६ ॥

७। ( शिवलीलारते ) असंवरविक्रमे ! जननि ! यद्यपि खलु यासि, क्षणं विलम्बं कुरु। ननु वयमपि त्वया सह याम, जननीं विना नहि जिजीविषवः ( स्मः )।

पदार्थविवरणम्। असंवरविक्रमे संवरितुमशक्यः अप्रतिरोध्यः विक्रमः कर्म्मशक्तिः यस्याः सा तत्सम्बोधने प्रजापतिदक्षात् तथान्येषां मुनीनां समक्षमेव सती प्राणत्यागं कृतवती, तां निवर्त्तयितुं न कोऽपि शक्त इति भावः। अन्वयः सुगमम्।

( पक्षान्तरे ) अन्वयः पूर्ववत् ।

पदार्थविवरणम्। स्वयं देवराजोऽपि लक्ष्मीतिरोधानं प्रतिकर्त्तुं शशाकेति असवरनिक्रमे—अदम्यमङ्गलने ! अन्यत् सुगमम् ॥ ७ ॥

८। ( शिवलीलापक्षे ) यदि सुतागमम् अनपेक्ष्य गता असि, तथापि त्वरितमेव वयं गताः। शुभरती भवती किल त्रिभुवनस्य संश्रयः वयं पुनः आश्रिताः। इत्यन्वयः।

पदार्थविवरणम्। यदि सुतागम पुत्राणाम् आगमनम् अनपेक्ष्य त्वरावशात् अकिञ्चित्करं मत्वा, अथवा सुतानाम् आगमने सति वात्सल्याद् यदि गमनबाधा स्यात् इति तदागमनात् पूर्वमेव गता असि प्रस्थिता असि, तथापि त्वरितमेव शीघ्रमेव वयं गताः स्यामः इत्यर्थः भाविनि भूतप्रयोगः कर्त्तव्यस्य निश्चितत्वसूचनाय। कुतः इत्याह—शुभरती मङ्गलमयी भवती किल त्रिभुवनस्य त्रिलोक्याः संश्रयः आधारः, वयं पुनः आश्रिताः आश्रितानाम् आश्रयम् परिहाय स्थितिर्न सम्भवतीति भावः। मत्वाः जगदाश्रयत्वं 'आधारभूता जगतस्त्वमेका' इत्यादि सप्तशतीमन्त्रेषु प्रसिद्धम्।

( पक्षान्तरे ) पूर्ववदन्वयः।

पदार्थविवरणम्। यदि सुतागमम् अनपेक्ष्य गतासि— चपलास्वरूपत्वात् वयमपि शीघ्रमेव गताः स्यामः, सेवाभावे तथा लक्ष्मीर्नाधाधीनजाया इति स्मरणात् अचिरादेव नङ्क्ष्याम. इत्यर्थः। लोकमातृत्वेन लक्ष्म्याः त्रिजगदाधारत्वम्, मातृस्नेहं विना शिशुनाम् इयान्सकं आश्रयान्तरं नास्तीति भावः॥ ८ ॥

६। ( शिवलीलापक्षे ) जले विकले अम्बुज न हि म्रियते घटे च विघटे सति तद्गुणाः न ( म्रियन्ते ) इति जगति संश्रयसश्रित-पद्धतिः विधानविशेषनियन्त्रिता । इत्यन्वयः ।

पदार्थविवरणम् । पूर्व्वोक्त समर्थयते—नहीत्यादिना । जले विकले शुष्के सति अम्बुज पद्म न म्रियते जीवति, घटे च विघटे भग्ने सति तद्गुणाः घटाश्रिताः गुणा न म्रियन्ते इतिविपरिणत-वचनकस्य म्रियत इत्यस्यानुकर्षात्, इति एवम्प्रकारेण जगति संश्रयस-श्रितपद्धतिः आधाराधेयभावः विधानविशेषनियन्त्रिता विधानविशेषः नियमविशेषः व्याप्तिरित्यर्थः तन्नियन्त्रिता तदधीना अस्ति । जल विना जलोपजीविना जलजानामिव मातरं विना मातृस्नेहोपजीविनां तनयानामस्माक जीवन धारयितुमशक्यम् । जीवनकारणविघटने जोवननाशः अवश्यमेव स्वीकार्यः । घटतद्गुणयोर्यथा कदाचि-दपि पृथक्स्थितिर्न सम्भवति, तथैव तव चास्माक च पृथक्स्थितिर्न सम्भवति । तथा द्रव्यनाशे तदाश्रितगुणाना नाशस्तथा त्वदभावे अस्माकमपि नाशः इत्याधाराधेयभावे नाशनियम इति भाव. ।

( पक्षान्तरे ) पूर्व्ववदन्वय. पदार्थविवरणञ्च ॥ ६ ॥

१०। ( शिवलीलापक्षे ) हरिविरिञ्चिहराश्रितविग्रहे ! भगति ! नः प्रतिपालिका भवती, 'माम् पालय' इति वादिनः अदद ! अपर कं शरण करवामहे इत्यन्वयः ।

पदार्थविवरणम् । हरिर्विष्णुः, विरिञ्चिः ब्रह्मा, हरः शिवः तैः आश्रितः पूजितः विग्रहः मूर्त्तिर्यस्याः सा तत्सम्बोधने । हरेः पालन-शक्तिः ब्रह्मणः सृष्टिशक्तिः हरस्य संहारशक्तिः, त्वञ्च सर्वशक्तिरूपेति

तेषामपि आराध्या। त्वया वय चिरं पालिताः, इदानीं त्वदभावे माम् पालयेति वादिनः वदन्तः अन्य क वा शरणं रक्षितारं गच्छाम। महत्तमजनस्य शरणग्रहणानन्तरं क्षुद्रस्य कस्यचिद् आश्रयान्वेषणं विडम्बनमात्रमिति भावः।

(पक्षान्तरे) पूर्व्ववदन्वयः।

पदार्थविवरणम्। हरिविरिञ्चिहरैः विष्णुब्रह्ममहेश्वरैः अञ्चितः विशेषितः विग्रहः मूर्त्तिः यस्याः, अञ्चु-विशेषणे इति चुरादिगणीयो धातुः, लक्ष्मीविग्रहः साक्षात् विष्णुना विशेषितः, सरस्वतीविग्रहोऽपि लक्ष्मीरूपता। यत्ते 'लक्ष्मीर्मेधा धरा पुष्टिः' इत्यादि सरस्वत्यष्टमूर्त्तिषु लक्ष्मीरूपग्रहणात् स च ब्रह्मणा विशेषितः। दशमहाविद्यान्तर्गत-कमलात्मिकायाः लक्ष्म्याः विग्रहः शिवेन च विशेषितः इति हरिविरिञ्चि-हराञ्चितविग्रहा तत्सम्बोधने। शेषं पूर्ववत्॥ १०॥

११। (शिवलीलापक्षे) जननि क्षुधया उदरं ज्वलति हा! सत्वरं कियत् अपि प्रतिपादय। तत् अपि न उत्तरितम्! करुणा-मयि! तव सा करुणा अधुना क्व नु गता? इत्यन्वयः।

पदार्थविवरणम्। कदाचिन्मायामाश्रित्य क्वापि सन्निहित-स्थाने माता यदि अन्तर्हितशरीरा स्यादिति प्रमयाना स्वचेतसा विकल्पितं भाव स्वयमेव ते परीक्षन्ते जननि हेत्यादिना। वत्सला माता पुनारणा क्षुद्व्यथामुपेक्षितु न शक्नोति—सन्निहिता चेद् अवश्यमेव समागमिष्यतीति ज्ञापयति—क्षुधया उदरं ज्वलति हा! 'कियत् अपि' किञ्चिदपि मह्यं 'सत्वरं' 'प्रतिपादय' देहि। 'तदपि' तथापि 'न' 'उत्तरितं' न उत्तरं दत्तम् अतएव सा न सन्निहितेति

निश्चित्य अभियुङ्क्ते—हे करुणामयि ! सा तव करुणा अधुना क्व गता ? पुत्राणां क्षुधासमये त्वं कदाचिदपि नोपेक्षसे स्म, अद्य तु किमिदं निष्करुणत्वम्। पद्मयोः समानम् ॥ ११ ॥

१२। ( शिवलीलापक्षे ) जननि ! तव वियोगशुचा वयं कीदृशतापयुताः इति किम् उच्यते ? त्वदपहस्तितसुस्थितसम्पदाम् अपि विषमा दशा अद्य विलोक्यते इत्यन्वयः।

पदार्थविवरणम्। तनया वयम् अवक्तव्यं दुःखमनुभवामः इति न विचित्रं परन्तु त्वदपहस्तितसुस्थितसम्पदाम्—त्वया अपहस्तिता हस्ताद् भ्रंशिताः सुस्थिताः शोभनतया स्थिता स्थिरा इत्यर्थः सम्पद् सौभाग्यलक्ष्मीः येषां ते वक्ष्यमाणा किसलयादयः तेषामपि विषमा दारुणदुःखसङ्कुला दशा विलोक्यते।

( पद्मान्तरे ) पूर्ववदन्वयः पदार्थविवरणं च ॥ १२ ॥

१३। ( शिवलीलापक्षे ) तव पदद्वयलब्धपराजयमपि किसलयं शोकमलीमसं ( भवति ) तव अवयवश्रिया जितानि अपि कुसुमानि (अद्यैव) न सुषमां बिभ्रति इत्यन्वयः।

*पदार्थविवरणम्। अचेतनेष्वपि त्वया सह कृतवैरतयो-त्प्रेक्षितेषु* तव वियोगशोकः प्रकटितः। एवमेव तव सर्वभूतेषु *प्रतिष्ठितो महिमासीत् तथाहि, तव स्थितिकाले पदद्वयेन सह स्पर्द्धमानम्* किसलयं तव कोमलारुणचरणपद्मद्वारा निर्जितमासीत् किन्तु अद्य शोकमलीमसं शोकमलिनं दृश्यते। आर्त्तानां तथैवावगम इति सूचितम्। अन्यत् सुगमम्।

( पद्मान्तरे ) अन्वयः पदार्थविवरणञ्च पूर्ववत् ॥ १३ ॥

१४। (शिवलीलापक्षे) तव मुखेन जित अपि सुधाकर गुरुशुचा रुचिहीनकलेवर, दृशो रुचा दलित शतदलञ्च तव विनाशरुना न विराजते इत्यन्वय.।

पदार्थविवरणम्। चन्द्रो हि परमसुन्दर लोकलोचनानन्दनन इति चन्द्रस्यासीदभिमान, तव मुख तु सौन्दर्य्येण त जित्वा स्थितमिति तवोपरि चन्द्रस्य द्वेष एवोचित, तवान्तधाने सति तद्विजेतुरभावे तस्यानन्द एव स्वाभाविक किन्तु साम्प्रत दृश्यते यत् चन्द्रोऽपि त्वदभावे गुरुशोकवशात् म्लान एव। एवमेव तव नयनश्रिया निर्जित पद्ममपि तव तिरोभावक्लेशेन न शोभते। सर्व्वजगत कान्तिप्रदत्व तवैवासीदिति भाव। चन्द्रे पद्मे च शोकवत्त्वोपचार आत्माना तथावगतिनिबन्धन। शोकार्तानां तेषां दृष्टौ सुन्दराण्यपि वस्तूनि सुन्दरतया न भान्ति स्म। इति भाव।

(पक्षान्तरे) अन्वय पदार्थविवरणञ्च पूर्व्ववत्॥ १४॥

१५। (शिवलीलापक्षे) असौ दशशताशु अवलोक्यते, तदपि तमस अपसारण नो, अतिद्युतितारकापरिवृत उदित अपि रजनिनाथ तमोहर न (भवति) इत्यन्वय।

पदार्थविवरणम्। असौ दशशताशु सहस्ररश्मि सूर्य अवलोक्यते दृश्यते तदपि तथापि तमसा अन्धकाराणाम् अथ च शिवद्वयसचिवानाम् अज्ञानानाम् अपसारण विनाश नो—न भवति, अतिद्युतितारकापरिवृत द्युतिमत्कान्ताभि तारकाभि परिवृत रजनिनाथ चन्द्र उदितोऽपि तम अन्धकार अथ च तादृशाज्ञान तस्य हर नाशक न भवतीति शेष। सूर्य्या द्वादश तेषां यथा भग

पूषा मित्रश्च तेषां वीरभद्रेण निग्रहवर्णनात् अन्येषां सूर्य्याणां चन्द्रस्य च तदवर्णनाच्च, दक्षपक्षपातेऽपि पुराणवर्णितं शिवद्वेषाभाव-मूरीकृत्य प्रमथानामयं विलापः । शिवद्वेषरहितसूर्य्यचन्द्रसत्त्वेऽपि *शिवद्वेषिणामशननिवृत्तिस्तत् प्रभावेणापि न भवतीतिभावः ।*

( पक्षान्तरे ) पूर्व्ववदन्वयः ।

पदार्थविवरणम् । श्रीतिरोधानात् पूर्व्वोक्तेषु वस्तुषु तथा चन्द्रसूर्य्ययोरपि श्रीहीनतावश्यम्भाविनी । अथवा पक्षयोरुभयोरेव तमेव भान्तमनुभाति सर्व्वम् इति ब्रह्म-स्वरूपायाः शक्त्याः स्वमहिमोपसंहारात् सर्व्वत्रैव प्रकाशाभावः । अतिद्युतितारकापरिवृतः द्युतिमतिक्रान्ताः द्युतिशून्या यास्तारकाः नक्षत्राणि ताभिः परिवृतः वेष्टितः । तमः शोको या दिवा रात्रौ च शोकाभिभवोऽस्माकम् न लघूभवतीत्यर्थः । 'तमो ध्वान्ते गुणे शोके' इति कोषात् ॥ १५ ॥

१६ । ( शिवलीलापक्षे ) (अद्य) वसुमती रसातलं विशतीव, (अद्य) भुवं हरितः परितो भ्रमिभृतः, अद्य अम्बरं पतत् इव विलोक्यते, प्रतिसञ्चरः किमु समीपचरः ? इत्यन्वयः ।

पदार्थविवरणम् । अतिशोकार्त्तानां बुद्धिविभ्रमो वर्ण्यते वसुमतीत्या-दिना । हरितः दिशः परितः समन्तात् भ्रमिभृतः भ्रमन्तीत्यर्थः । अम्बरं आकाशं, प्रतिसञ्चरः प्रलयः (विष्णुपुराणे १ अंशे ३ अध्याये प्रमाणम् ) किमु समीपचरः आसन्नः ? पक्षयोरन्वयः पदार्थविवरणञ्च तुल्यम् ॥१६॥

१७ । ( शिवलीलापक्षे ) मातः ! अचिन्त्यविलङ्घनः अविचलधातृविधानमहत्तमं च्यवनसम्भवताम् अधिजग्मिवान् भृगुः अहह अधोभवतीति मन्महे ।

पदार्थविवरणम्। हे मातः! अचिन्त्यम् अभावनीयं विलङ्घनम् अतिक्रमो यस्य सः, अविचलेन स्थिरेण धातृविधानेन विधिविधानेन महत्तमः अतिपूज्यः, च्यवनसम्भवतां च्यवनजनकत्वम् अधिगमितवान् प्राप्तः अर्थात् च्यवननामकमहर्षेः उत्पादकः भृगुः तन्नामा महर्षिः ( दक्षस्य सहायभूतः ) अहह खेदे अधोभवतीति महत्त्वच्युतो भवतीति मन्महे अवबुध्यामहे। हे मातः! तव देहपातेन महर्षिर्भृगोरपि पतनमासन्नमिति जानीमः। तव देहपातमप्रतिषेधतो महर्षेर्भृगोरपि दुराचरणमिदमस्माकं दुःखातिरेकहेतुरिति तात्पर्यम्।

( पक्षान्तरे ) अन्वयः पूर्ववत्।

पदार्थविवरणम्। अविचलधातृविधानमहत्तमः अविचलः अविचलवृत्तः यो धाता तन्नामकपुत्रः तस्य विधानेन उत्पादनेन महत्तमः मान्यतमः। धाता विधाता लक्ष्मीश्च्यवनश्चेति भृगोरपत्यानीति पुराणवार्ता। भृगुः तन्नामा महर्षिः। अधो भवति कन्यया त्वया परित्यक्तः सद्य एव अवनतिं प्राप्तः। भवतीति वर्त्तमानसामीप्ये अतीते लट्। लक्ष्मीपितृत्वेन भृगोः प्रकर्षोऽस्य तदवसानेन विलीनः इति भावः।

अत्र व्यङ्ग्यार्थः—अचले पर्वते यत् विधातुर्निर्माणं तेन महत्तमः उन्नतमः च्यवनसम्भवताम् अन्येषां पतनहेतुतां प्राप्तः, अचिन्त्यविलङ्घनः— यस्य लङ्घनं चिन्तयितुमशक्यम्, तादृशः भृगुः प्रपातदेशः अधोभवति ऊर्ध्वदेशाद् विच्युतो भवतीत्यर्थः। प्रपातदेशमपि पतन्तं पश्यामीति भावः॥ १७॥

१८। ( शिवलीलापक्षे ) भगवति! भवदपायविघूर्णितपातका वयं

यदि गणेयमहाधयो न, त्वदनुग्रहभाग्नृपाक्षरावहीनविलापम् अपाकुरु इत्यन्वय ।

पदार्थविवरणम् । भवत्या अपायेन अभावन विमुचित पातक पाप येषा ते, तथाविधा वय प्रमथगणा न गणेयमहाधय गणेया ( गण + णिच् + यत्, णिचो लोपाभावो बाहुल्यादिति व्याकरणम् ।) गणनीया महाधय महान्त आधयो मन पीडा येषा ते तादृशा न स्याम इति शेष , अस्माक मनोव्यथा यदि भवत्या उपेक्षणीया स्यात् इत्यर्थ , ( तर्हि ) त्वदनुग्रहभाज तव कृपापात्रस्य नृपस्य य अक्षर-विहीन भाषारहितो विलाप शोकार्त्तरव, नीरवाश्रुपातो वा, तम् अपाकुरु दूरीकुरु स तु नोपेक्षणीय । नृपा हि वाहन भवत्या अनुग्रहविशेषभाजन सत्यपि तस्य तादृशपातके शुभागमनेन तद्दु ख-दूरीकरण तु भवत्या उचितमेवेति भाव ।

( पक्षान्तरे ) अन्वय पूर्ववत् ।

पदार्थविवरणम् । वयमिति जीवगणा । नृपा इन्द्र तस्य अक्षरविहीनविलाप मौनरोदनम्—स्वय कृतापराधे मानसविलाप प्रसिद्ध एव । तम् अपाकुरु दूरय । भवत्या अनुग्रहविशेषभाजनम् इन्द्र तस्य कृतापराधस्यापि दु खमोचन भवत्या कर्त्तव्यमिति भाव ॥ १८ ॥

१९ । ( शिवलीलापक्ष ) प्रतिरज प्रसरत्प्रमदामृते यत्र जगति वय चिरम् आसिता , अहो ! अपि तद् एतत् !—न हि , नवविधातु इय नवनिर्मिति युज्यते इत्यन्वय ।

पदार्थविवरणम् । प्रतिरज प्रसरत्प्रमदामृते प्रतिरज प्रतिधूलि

कण तस्मात् प्रसरन् प्रकाशीभान् यः प्रमदः आनन्दः स एव अमृतं सुधा मोक्षो वा यस्य, मोक्षस्य आनन्दमयत्वात्, तादृशे यत्र जगति चिरं चिरकाल व्याप्य वयम् आसिताः स्थिताः स्मः, अपिः प्रश्ने, एतत्—तत् ? इति प्रश्नः; उत्तरम् न हि न तदेतत्। अतएव नवविधातुः नूतनस्य ब्रह्मणः इयं नवनिर्मितिः नूतनसृष्टिः युज्यते युक्ता भवति। पुरातनस्य सुखमयस्य जगतः पूर्ण एव ध्वंसो जातः, इदानीं *नवमिदं दुःखमयं जगत् नवेन दुःखदेन विधात्रा निरमायीति भावः।*

( पक्षान्तरे ) अन्वयः पूर्व्ववत्।

पदार्थविवरणम्। प्रतिरजः प्रसरत् प्रमदामृते—प्रतिरजः रजसि रजसि प्रसरन् विस्तारी प्रमद आनन्दो यत्र तत्ताद‍ृशम् अमृतं सुधा यत्र, तादृशे यत्र जगति यस्मिन् स्वर्गाख्ये लोके वयं चिरम् आसित इत्यादि पूर्व्ववत्॥ १६॥

२०। ( शिवलीलापक्षे ) अयि सुचिरस्थिरप्रमदनिर्भरसम्भृत-चेतसः त एव वयम् ? किम् हृदयेन्धनदारुणज्वलनकीलकलापसमाकुलाः इतरे ? इत्यन्वयः।

पदार्थविवरणम्। सुचिर बहोः कालादेव स्थिराः अनपायिनः ये *प्रमदाः आनन्दाः तेषां निर्भरः अतिरेकः तेन सम्भृतानि पूर्णानि* चेतांसि येषां ते, त एव वयम् ? 'हृदयेन्धनदारुणज्वलनकीलकलापसमाकुलाः' = हृदयान्येव इन्धनानि काष्ठानि यस्य सः चासौ दारुणज्वलनश्चेति दारुणो भयङ्करः ज्वलनोऽग्निः तस्य ये कीलकलापाः शिखासमूहाः तैः समाकुलाः व्याप्ताः। अविरतदन्दह्यमानहृदयाः वयं किम् 'इतरे' अन्ये जाताः ? पूर्वं हृदयानि आनन्दमयानि सम्प्रति तु

*शोकमयानि, इति दशाविपर्य्ययेण स्वस्मिन् अन्यत्वशङ्का पद्ययोः समा* ॥ २० ॥

२१। (शिवलीलापद्ये पद्यान्तरे च) यदि साम्प्रत श्रवणम् अश्रवणम्, अनयोः नयनयोश्च तमोवृतिः, तदपि जननीविरहाकुलम् अवश मनः हा किमिव न स्मरयति ? इत्यन्वयः।

पदार्थविवरणम्। *साम्प्रत यदि यद्यपि श्रवणम् कर्णेन्द्रियम्* अश्रवण श्रवणशक्तिरहितम् अनयोः नयनयोश्च तमोवृतिः अन्धकारावरणम्। तथापि हा ! खेदे, जननीविरहाकुल मातुर्विरहेण विच्छेदेन आकुलम् अतएव अवश मनः किमिव न स्मरयति ? शोकातिशयात् *सर्व्वाणि बहिरिन्द्रियाणि विकलानि, मनस्तु केवल त्वत्सम्बन्धि* सर्व्व वस्तु आध्याययति ॥ २१ ॥

२२। (शिवलीलापद्ये, पद्यान्तरे च) सकलम् एव गत ननु गम्यताम्, हृदय चिरसस्तव मा जगणः। विधुः अम्बुरुहम् इव (त्व) मा तपसि, स च तेन (इव) च (त्व) मया अपि निपीड्यसे, इत्यन्वय.।

पदार्थविवरणम्। सकल बहिरिन्द्रियादि गत नष्ट गम्यता तत्र क्षतिर्नास्ति। हे हृदय ! चिरसस्तव बहुकालजात परिचय पुत्रमातृसम्बन्धरूप मा जगणः माङ्योगात् गणेर्लुङि मध्यमपुरुषैकवचन बहिरिन्द्रियाणि तावद् विमूढानि, तादृशपूर्वपरिचयस्मरणमेवाद्य दुःखकारण भवति, तत्र हृदयमन्तरिन्द्रियमेव स्मृतिसाधनमतः तदेवोद्दिश्य कथयति—हे हृदय, पूर्वपरिचयस्मृत्या मा तपसि *पीडयसि, यदि त्व न विस्मरसि तर्हि मया त्व निपीड्यसे भविष्यत्सामीप्ये* वर्त्तमानप्रयोगः, हृदयपीडाकर किमपि अनुष्ठास्यामीति

भावः । अत्र शोकवशात् हृदयस्यापि स्वतन्त्रतया परिगणनम् । तत्र सादृश्य 'विधु' चन्द्रः 'अम्बुरुहम्' पद्मं तपति 'तेन' 'च' अम्बुरुहेणापि 'सः' चन्द्रः 'च' निपीड्यते । चन्द्रकरः पीडादायक इति निशि कमलस्य निमीलन, कमलञ्च दिवा स्वकान्तिदिनकरकरेण चन्द्रतेजो हरतीति परस्पर पीडनम् कविसमयप्रसिद्धम् । एवमेवाधुना हृदय पूर्वसम्बन्धस्मरणेन मा पीडयति, अहमपि प्राणवायुसयोगविनाशद्वारा हृदय निगृहीत विधास्यामीति तात्पर्य्यम् । वस्तुतः, सकल वहिरिन्द्रियादि गत नष्ट ननु मे हृदय, गम्यता त्वयापीति शेषः, चिरसस्तव मया जीवेन चिरम् अनादिकाल व्याप्य सस्तव कर्त्तृकरणसम्बन्धरूपपरिचय मा जगण., न गणय, येन सम्बन्धगणनेन मत्परित्यागाद् विरत भविष्यसि तन्मा कार्षीः,—साम्प्रतमत्रावस्थान ते नोचितम्, यतस्त्वमत्र स्थित्वा मा क्लिश्नासि, मत्सम्बन्धात् त्वमपि क्लेशभाजन भवसि । मत्सम्बन्धे त्वया परित्यक्ते पूर्वानुभवजनितमातृस्मरणज तद्वियोगदु ख न मे स्थास्यति स्मृतिदु.खाद्युत्पत्तेर्मनोमूलकत्वात् मदीयतापस्तु त्वयापि न सम्बद्धो भविष्यति इत्यर्थ । सादृश्यव्याख्यानन्तु प्रथमव्याख्यावत् ॥ २२ ॥

२३ । ( शिवलीलापक्षे ) हे जननि ! ननु मादृशा सुखविधानम् अर्ते तव कुतश्चिद् अपि सुख न ( भवति ) इति नः निश्चितम् अद्य सुखमहाशयन गतया त्वया निसुदितम् इत्यन्वय. ।

पदार्थविवरणम् । हे जननि ! पुत्रमुखादेव तव सुखम्, न स्वतन्त्रतया ते सुखहेतुः कश्चिद्वर्त्तते इत्यस्माक निश्चित निश्चयः अद्य सुखमहाशयन सुखजनकमहानिद्रा गतया प्राप्तया त्वया निसुदितम्

*उन्मूलितम्*। *अद्य त्व महानिद्रारूपसुखान्तराकृष्टा निश्चिन्ता* वर्त्तसे इत्येतेनास्माक क्रन्दने कर्णपातमपि न करोषि। अस्मत्-सुखादेव चेत्तव सुखनिर्वाहोऽभविष्यत् तदा त्वमस्मत्सुखविधान-मुपेक्ष्य नात्मानमगोपयिष्यः, अतएवास्माक पूर्वविश्वासहानि.। सतीपक्षे सुखमहाशयन तनुत्यागान्मरणवरणम्। (पक्षान्तरे) नारायणाधि-ष्ठितसमुद्रप्रवेशः शयन निद्रा शय्या चेति पदद्वये यथायथ बोध्यम् इति विशेषः। अन्यदविशेषम्॥ २३॥

२४। (शिवलीलापक्षे) दया अनिलया, शमः अपि मुषित', *शरण्यता च शमनपाणिगता, तनयवत्सलता च निरालया,* तदपि सुस्वपिषि इति वयम् हताः इत्यन्वयः।

पदार्थविवरणम्। दया अनिलया—आश्रयहीना, त्वमेव एका दयावती आसीरित्यर्थः सर्वोपकारकरणाय सदार्द्रचित्तेति स्मरणात्। शमः शान्तिः मुषितः अपहृतः जगत इत्यर्थः। त्वदधिष्ठानादेव शान्तेरस्तित्वम् या देवी सर्वभूतेषु शान्तिरूपेण सस्थितेतिभावः। शरण्यता शरणे साधुरिति शरण्यः तस्य भावः शरण्यता शरणागतरक्ष-णमित्यर्थ शमनपाणिगता—विलुप्ता इत्यर्थः, 'शरणागतदीनार्त्तपरित्रा-णपरायणे' इति सप्तशतीमन्त्रात् तवैव शरण्यतामूलस्थानत्वम्। तनयवत्सलता पुत्रस्नेह' च निरालया आधारहीना जाता, जगन्मातृत्वात् स्नेहपारावारस्वरूपता च तवैव। तवान्तर्धानात् ससाररक्षा हेतुभूता इमे *गुणा अपि चिराय विलुप्ता*, तदपि तथापि सुस्वपिषि सुखेन निद्रासीति वय हता' चरमदुरवस्था नीता इत्यर्थः।

(पक्षान्तरे) पूर्ववदन्वय', पदार्थविवरण तु—लोकमातृत्वेन

दयाशान्तिशरण्यतावात्सल्याना त्वमेवैकाश्रय, तव तिरोभावात् सर्व एवैते गुणाः विनश्यन्तीति सक्षेपः ॥ २४ ॥

२५। ( शिवलीलापक्ष ) हे नन्दनवत्सले ! सुतगणप्रतिपालनम् अन्तरा अहो कथम् निर्वृतिम् समुपैष्यसि, इति विचिन्तय, त्वरितम् एहि, दुराग्रह जहीहि इत्यन्वयः।

हे नन्दनवत्सले ! हे पुत्रस्नेहमयि ! सुतगणप्रतिपालनम् अन्तरा विना अहो विस्मये कथ निर्वृति सुख समुपैष्यसि प्राप्स्यसि ! पुत्रस्नेहशीलाया. पुत्रप्रतिपालन विना सुख न सम्भवतीति नन्दनवत्सले इति सार्थक सम्बोधनम्। इति एव युक्तियुक्त विषय विचिन्तय मनसि विचारय। अवश्यमेव तद सत्वरमागमन चिन्तायाः फल भविष्यतीत्यतः आह्वयति—त्वरितम् एहीति। दुराग्रह दुरन्तम् आग्रहम् निर्बन्ध पुत्राणा परमानिष्टकरे तिरोधाने दृढ सङ्कल्पमित्यर्थः जहीहि त्यज।

( पक्षान्तरे ) सुतगणप्रतिपालनम् अन्तरा अहो कथ निर्वृति समुपैष्यसि ! इति विचिन्तय हे नन्दनवत्सले ! त्वरितम् एहि, दुराग्रह जहीहि इत्यन्वयः।

पदार्थविवरणम्। सुतगणेति, अन्यथा लोकमातेति तव नामैव व्यर्थ स्यात्। हे नन्दनवत्सले, नन्दनवनप्रिये ! चिर स्वर्गराज्ये स्थिताया इन्द्रवात्सल्यात् नन्दनवनेऽपि ते प्रियतातिशयो जातः, तेन त्वरितमेहि दुराग्रह जहीहि ॥ २५ ॥

२६। ( शिवलीलापक्षे ) अधुना यदि भवती तनयभावसमानतया जगदन्तर विपालयितुः गतवती, अम्ब ! ननु मादृशा का गतिः भविष्यति कथय।

पदार्थविवरणम्। अधुना यदि तनयभावसमानतया सर्वेषां जगतां मातास्मि न केवलं युष्माकमिति पुत्रत्वाविशेषेण जगदन्तरं अन्यज्जगत् पिपालयिषुः पालयितुमिच्छुः गतवती गतासि, हे अम्ब! मातः! ननु सानुनयप्रश्ने, मादृशा पुत्राणां का गतिः उपायो भविष्यति इति कथय। पुत्रत्वाविशेषेण यदि अन्येषां केषाञ्चित् पालनं तर्हि कथं न मादृशाम्? वयं मातृस्नेहवञ्चिताः कां गतिं प्राप्स्याम इति कथय। पक्षयोरविशेषः ॥ २६ ॥

२७। (शिवलीलापक्षे, पक्षान्तरे च) जननि सत्वरं सन्निहिता भव, वयं पुनः न क्षणविलम्बसहाः, यदि न वचः शृणोषि, ननु तदा अचिरात् दुर्व्वहां तनुम् अपजहाम इत्यन्वयः।

पदार्थविवरणम्। क्षणस्य विलम्बः क्षणविलम्बः तस्य सहाः, सहधातोरच् प्रत्ययेन सहेतिरूपम्। तनुः दुर्व्वहेति तस्या अपजिहासा सुतरामेव। अपजहामेति लोटो रूपम् ॥ २७ ॥

२८। (शिवलीलापक्षे) रुचिरशीतकरार्द्धसमुज्ज्वलप्रभललाटतले! किं कथयाम, हे जगत्प्रसूः! किम् अपरं करवाम इति वयं विवेकविहीनहृदः (स्मः) इत्यन्वयः।

पदार्थविवरणम्। रुचिरं मनोहारि यत् शीतकरार्द्धं चन्द्रखण्डः तेन समुज्ज्वला प्रभा यस्य तत् तादृशं ललाटतलं यस्याः सा तत्सम्बोधने हे चन्द्रशेखरे मातः! विवेकविहीनहृदः कर्त्तव्यविमूढाः स्मः।

(पक्षान्तरे) रुचिरशीतकरार्द्धवत् निर्म्मलचन्द्रखण्डसदृशम् उज्ज्वलं ललाटतलं यस्याः सा तत्सम्बोधने। उभयपक्षयोः अन्यत् मूलपादटीकातो ज्ञातव्यम् ॥ २८ ॥

२६। (शिवलीलापक्ष) इति विफलविलापोल्लापिभूतेषु विषमतमविषादा अनेके भवस्य अन्त जग्मु, विगलदसहताप-प्रनयानीतमोहा विहितविविधयोगा यत्प्रपञ्चे यतन्ते इत्यन्वय ।

पदार्थविवरणम्। इति एवम् विफला व्यथा इष्टसिद्धरभावादित्यर्थ विलापा तान् पुन पुन उल्लपन्ति उच्चै कथयन्ति ये ते विफलविलापानाम् उल्लापिन उल्लापयन्त इति वा विफलविलापोल्लापिन। तादृशाश्च ते भूताश्चेति तेषु। अन्यत् मूलस्य पादटीकातो द्रष्टव्यम्।

(पक्षान्तरे) इति • भूतेषु अनेके विषमतम विषादा सन्त भवस्य अन्त जग्मु। शेष पूर्व्ववत्।

पदार्थविवरणम्। विहितविविधयोगा विहिता कृता विविधा मृत्युसाधनप्रयोगा यै ते। 'योगोऽपूर्व्वार्थसम्प्राप्तौ सङ्गतिध्यान युक्तिषु। वपु स्थैर्ये प्रयोगेऽपि विष्कम्भादिषु भेषजे' इति मेदिनी। प्रथमपक्षे योगो ध्यानम्। अन्यत् मूलपादटीकात सङ्गमनीयम्॥ २६॥

३०। (शिवलीलापक्षे) जननमरणहीना सर्व्वतो वर्त्तमाना इव हारशक्ति प्रकृत्या त्रिभुवनजननी, तस्या उदयविलयलीलाडम्बरो दिनकृत उदयास्तम्भावकत् लोकाख्द नाम इत्यन्वय ।

पदार्थविवरणम्। जननमरणहीना सनातनी सर्व्वतो वर्त्तमाना सर्वव्यापिनी इव हारशक्ति हरस्य इय हारी (तस्येदमित्यण) शक्ति हारशक्ति प्रकृत्या स्वभावत त्रिभुवनजननी त्रिलोक्या उत्पादयित्री। (शाक्तसिद्धान्तमते शक्तरेव ब्रह्मस्वरूपत्वम्) यत्र निल सर्वाणि जगन्त्य धिष्ठितानि अतो नास्त्येव तस्या विलय। तथापि सयास्तनुत्यागे

नान्तर्धानं विलयरूपेण यत् प्रतिभात तत्तु लीलामात्रम्। 'तस्याः' 'उदयविलयलीलाडम्बरः' उदयविलययोः आविर्भावतिरोभावयोः लीलाडम्बरः क्रीडायोजनम् दिनकृतः सूर्यस्य उदयास्तम्भाववत् उदयास्तमनसदृशः लोकसिद्धः लोकव्यवहारविषयः। यथा सूर्यस्य उदये अस्तमने वा न तावत् सूर्यस्य उत्पत्तिः नाशो वा सिध्यति, परन्तु स्थितस्य तस्य क्वचिद् दर्शन क्वचिददर्शनञ्च अवस्थाविशेषमात्रम् उदयास्तमननाम्ना लोकव्यवहारविषयो भवति, तथैव शक्तेः क्वचित् सतीरूपेणाविर्भावः तत्तनुत्यागो वा तस्याः लीलाकैवल्यम्।

( पक्षान्तरे ) पूर्ववत् अन्वयः।

पदार्थविवरणम्। 'हरशक्तिः'—हरेः शक्तिरिति विशेष. ॥ ३० ॥

३१। ( पक्षद्वये ) शिशुशशधरमौलिः चक्रपाणिः, शिवा श्रीः, हरिः शितिकण्ठः अपि, इन्दिरा दक्षकन्या च, सः विबुधराजः खलु, सा च शची, इत्यलं—वा, सः हि निखिलपुमांसः, सा च समस्ताः नार्यः।

पदार्थविवरणम्। इदानीं शिवदुर्गास्वरूप लक्ष्मीनारायणस्वरूप च प्रकटयति—शिशुशशधरेत्यादिना। यः शिशुशशधरमौलिः शिवः स एव चक्रपाणिः नारायणः, या च शिवा शिवशक्ति सैव श्रीः लक्ष्मीः, हरिरेव शितिकण्ठः प्रलयकर्त्तुः शिवस्यापि शिशुशशधरमौलिरित्यनेन सुधांशुसम्बन्धात् अमृतप्रदत्त्वम्, शितिकण्ठ इत्यनेन च जगद्दाहकगरलभक्षणात् महादेवस्यापि जगतो रक्षाकरत्वम्। चक्रपाणिरिति हरिरिति च शब्दव्युत्पत्त्या लीलावैचित्र्येण च पालनकर्त्तुरपि नारायणस्य ध्वंसकरत्व इत्युभयोरभेदः। शिवा सर्वमङ्गला श्रीस्वरूपैव।

'स' महादेव (पक्षान्तरे—हरि) (च) त्रिभुवराज इन्द्र खलु, सा' सती (पक्षान्तरे—इन्दिरा) च शची इन्द्रशक्तिरपि इति एवम् अधिकरणेन अल वा प्रयोजन नास्ति, हि यत स शिव (हरि) च निखिलपुमास जगता यावत्पुरुषस्वरूप, सा सती (इन्दिरा) च समस्ता नार्य 'स्त्रिय समस्ता सकला जगत्सु' इति सप्तशती स्मरणात् ॥ ३१ ॥

३२। (शिवलीलापक्षे) तत्त्वरूप अवगततत्त्व परात्मा भरु यत्प्रवृत्त्या मुग्ध इव कतिचन लीला अकृत, तदविहितबोधा तदन्त मन्यमाना (जीवा) शुशुचु इति न चित्र जाता हि स्वल्पबोधा इत्यन्वय।

पदार्थविवरणम् मूलस्याधस्तात्पादटीकाया द्रष्टव्यम।

(पक्षान्तरे) अन्वयव्याख्याने तत्रैव प्रपञ्चिते ॥ ३२ ॥

इति द्वितीयसर्गटीका।

---

## तृतीयः सर्गः।

१। (शिवलीलापक्षे) अथ नागकूटनिलय स वृषाहितेश्वर क्रुधा उद्धत अतएव धग्धगुज्ज्वलविलोचनानल (सन्) लयकाल भीरिव (अत) दु सह सम्बभूव इत्यन्वय।

पदार्थविवरणम्। 'अथ सतीमरणवार्ताश्रवणानन्तर 'नागकूटनिलय' सर्पराशेराश्रय 'स' 'वृषाहितेश्वर' वृषाहितश्चासौ ईश्वरश्चेति वृषण स्वपृष्ठे आरोपित शिव क्रुधा कोपेन उद्धत उत्तजित अतएव 'धग्धगुज्ज्वलविलोचनानल' धग्धग् इति

दहधातोः कर्त्तरि क्विपि प्रकारे गुणवचनस्येति द्विरुक्तात्; धग् धक् दाहकरूपः अथ च धगधगिति वह्निज्वलनस्याव्यक्तशब्दः तेन उज्ज्वलति उज्ज्वलः, उज्ज्वलः उद्दीप्तः विलोचनानलः तृतीय-नयनस्थो वह्निः यस्य सः तादृशः सन् 'लयकालभीषणः' संहारकालवत् भीषणः भयङ्करः मूर्त्तिमान् प्रलयकाल इव, अथवा रुद्रस्यैव संहार-कर्तृत्वात् संहारकाले यथा भीषणो भवति तथा भयङ्करः अतएव 'दुःसहः' परैः सोढुमशक्यः 'सम्बभूव' जातः। सतीमरणस्य दक्ष एव निमित्तमिति तमुद्दिश्य शिवस्य क्रोधोद्रेकः स्वाभाविकः इति तात्पर्य्यम्।

( पक्षान्तरे ) अन्वयः पूर्व्ववत्।

पदार्थविवरणम्। 'अथ' इन्द्राभिषेकस्थानात् श्रीभ्रंशानन्तर 'नागकूटनिलयः' नागाना सर्पाना कूटः गृह ( गृहगेहोदवसितमित्युपक्रम्य वासः कूटो द्वयोः शाला इत्यमरः) नागालयः पातालमित्यर्थः तत्र निलयः वासो यस्य सः तादृशः 'सः' प्रसिद्धः 'अदितेश्वरः' वृत्रः इन्द्रस्य अदिताः शत्रवः असुराः तेषाम् ईश्वरः पतिः असुरराज इत्यर्थः क्रुधा उद्धतः 'धग्धगुज्ज्वलविलोचनानलः' धगधग् इति पूर्ववत्, उज्ज्वलः दीप्यमानः विलोचनस्वरूपः अनलः विलोचनस्य अनलः नयनतेजो वा यस्य सः तादृशः 'लयकालभीषणः' लये संहारे कालवत् यमवत् भीषणः अतएव दुःसहः परैरसह्यः सम्बभूव। इन्द्रस्य श्रीभ्रंशे शत्रुः पूर्व्ववैरी पातालस्थः असुरराजः लब्धावसरः क्रोधोद्दीप्तः सन् शत्रुमर्दने शमनवत् आचकरोऽभूदित्यर्थः ॥ १ ॥

२। ( शिवलीलापक्षे ) वीरभद्रदरोरभासुराः शिवेक्षणगनुष-

वायुधाः वलोद्धताः ते भीमसैनिकगणाः अदितिसम्भवालयम् अभ्ययान् इत्यन्वयः ।

( पक्षान्तरे ) वलोद्धताः शिवेक्षणसमुद्यतायुधाः भीमसैनिकगणाः ते वीरभद्रहररोषभासुराः अदितिसम्भवालयम् अभ्ययान् इत्यन्वयः ।

पदद्वयस्य पदार्थविवरणं मूलकाव्यपादटीकातो द्रष्टव्यम् ।

( शिवलीलापक्षे ) श्लोकार्थस्तु—साक्षाद् हरक्रोधस्वरूपवीरभद्र-नामा भटः तेनोद्दीप्ताः ( वीरभद्रस्य महादेवरोषच्छिन्नजटोत्पन्नत्वात् तस्य हररोषस्वरूपेण वर्णनम् ) शिवसङ्केतमात्रेण समुद्यतास्त्राः बलदृप्ताः शिवसैनिकगणाः तदानीं दक्षालयं प्रति कृताभियाना अभवन् ।

( पक्षान्तरे ) बलनामकासुरसेनापतिना लम्भितदर्पाः शुभनिमि-त्तदर्शनेन समुद्यतास्त्राः वीराः विश्वमङ्गलविनाशिरोषप्रदीप्ताः ते भया-नकसैनिकगणान्विताः असुराः स्वर्गालयं प्रति कृताभियाना अभवन् इति ॥ २ ॥

३ । ( शिवलीलापक्षे ) भूभृतोदरसहस्रमूर्च्छिताः पृथक् पृथक् भीमवाद्यनिनदाः क्षणात् एकताम् उपगताः इव तरसा दिङ्-मुखानि तिरोदधुः इत्यन्वयः ।

( पक्षान्तरे ) पृथक् पृथक् भीमवाद्यनिनदाः भूभृतोदरसहस्र-मूर्च्छिताः ( सन्तः ) क्षणाद् एकतामुपागताः इव तरसा दिङ्मुखानि तिरोदधुः इत्यन्वयः ।

पदार्थविवरणम्, पक्षद्वयस्यापि मूलकाव्यपादटीकातो द्रष्टव्यम् ।

शिवलीलापक्षे श्लोकस्य भावार्थस्तु—तदानीं शिवस्य विभिन्नाः वाद्यध्वनयः कैलासपर्वतस्य बहुरन्ध्रभागेषु प्रतिहताः प्रति-

ध्वनिरूपेण वृद्धिं प्राप्ताः निमेषात् एकीभूता इव वेगेन सर्व्वा दिशः छादयामासुः ।

पक्षान्तरे असुरराजस्य नानाविधाः भीषणाः रणवाद्यनिनदाः भूगभसमूहेषु अनन्तनागस्य मुखरन्ध्रसमूहेषु वा प्रतिघातेन वर्द्धिताः सन्तः निमेषात् एकीभूता इव वेगेन दिगन्तराणि छादयामासुः ॥ ३ ॥

४ । ( शिवलीलापक्षे ) तत्र पत्तिगणसेवितः स्वनन्नागनाग-विभवाजिनान्तरः प्रभः त्वरित-गोरथः अदितिसूतसौभगं रेचयन् अत्यभात् इत्यन्वयः ।

( पक्षान्तरे ) तत्र पत्तिगणसेवितः स्वनन्नागनागविभवाजिनान्तरः त्वरितगः प्रभो: रथः अदितिसुनिसौभग रेचयत् अत्यभात् इत्यन्वयः ।

द्वयोः पक्षयोः पदार्थविवरणम् मूलकाव्ये पादटीकातो द्रष्टव्यम् ॥ ४ ॥

५ । ( शिवलीलापक्षे ) तदा देवताः सर्व्वलोकविनिपातनक्षमं तम् उद्यमम् अवलोक्य भीतिविह्वलहृदः किं भवेत् इति विचारतत्पराः आसत ।

पदार्थविवरणम् । 'तदा' रुद्रस्य अभियानकाले दक्षदौहित्रादिरूपतया दक्षपक्षपातिन्यः 'देवताः' 'सर्व्वलोकविनिपातनक्षमं' सर्व्वेषां लोकानां भुवनानां 'लोकः स्याद्भुवने जने' इत्यमरः, भूर्भुवस्वरादयः सप्त लोकाः तेषां विनिपातनं विनाशनं तत्र क्षमं समर्थं 'तम्' उद्यमम् रुद्रस्य समरसज्जाम् अवलोक्य 'भीतिविह्वलहृदः' भयमूढचित्ताः सन्तः किं भवेत् इति विचारतत्पराः तर्कनिरताः आसत स्थिताः ।

( पक्षान्तरे ) अन्वयः पूर्व्ववत् ।

पदार्थविवरणम् । 'सदा' असुरपतेः अभियानकाले देवताः स्वर्गस्थाः सुराः स्वर्गादिसर्व्वलोकविनाशनसमर्थं 'तम्' 'उद्यमम्' असुरसैनिकसज्जाम् अवलोक्य दृष्ट्वा इततः शिष्ट समानम् । असुरेभ्यो देवाना भीतिः प्रसिद्धा ॥ ५ ॥

६ । ( शिवलीलापद्ये ) शैलसागरवनादिसभृता मेदिनी तच्च-मूपदभरेण यत् सद्य एव बलिसद्म न अविशत् ततः हि सा स्थिरा ( इति ) सुविदिता इत्यन्वय ।

पदार्थविवरणम् । कैलासान्मेदिनीपृष्ठे समुपागतेषु सैनिकेषु शैलसागरवनादिभिः मवृता सयुक्ता मेदिनी समग्रा पृथिवीति यावत् सा चाशौ चमूश्चेति तच्चमूः प्रमथसेना इत्यर्थः तस्याः पदभरेण 'यत्' यस्मात् 'सद्य एव' तत्क्षणादेव 'बलिसद्म' रसातल न अविशत् प्रविष्टा 'ततः' 'हि' तस्मादेव हि अवधारणे सा पृथिवी 'स्थिरा' इति 'सुविदिता' पूर्व्वं तु पृथिवी स्थिरेति नाममात्रेण परिचिता, इदानीं तु स्थितिशक्तिपरीक्षया सा सुष्ठुतर ज्ञातेति भावः ।

( पक्षान्तरे ) अन्वयः पूर्व्ववत् ।

पदार्थविवरणम् । स्वर्गमभियातृणा रसातलान्मेदिनीपृष्ठमा-रूढवतामसुरसैनिकाना पदभरेणेति विशेषः ॥ ६ ॥

७ । ( शिवलीलापद्ये ) दैवबलवत्सु तेषु मानसूत्रवनकर्त्तना-युधन्यक्षपद्धतिकरोपपत्तयः दिग्विनिर्णयनयन्त्रयन्त्रणा ( च ) न अभवन् इत्यन्वयः ।

पदार्थविवरणम् । लोके युद्धयात्राकाले सैनिकाना मार्गनिर्माणार्थं मानसूत्रं वनच्छेदनास्त्र अन्यान्युपकरणानि च समहर्णीयानि भवन्ति,

तमोऽन्तकम् । अतिरौद्रतेजस वीक्ष्य पाशुपायसि ममज्ज । इत्यन्वयः पक्षयोः प्रायेण समानः ।

पदार्थविवरण मूलकाव्ये पादटीकाया द्रष्टव्यम्' अन्वयश्च ॥११॥

१२ । दिनमणिः तद्बलस्य भुवि पादविक्रमे प्रोद्धुतेन घनरेणुराशिना अम्बरविलङ्घने च स्वय तेन दुर्द्दिने निपातितः, इत्यन्वयः पक्षयोः समानः ।

पदार्थविवरणम् । 'दिनमणि' सूर्यः 'तद्बलस्य' प्रमथसैन्यस्य पक्षान्तरे असुरवाहिन्याः 'भुवि' भूतले 'पादविक्रमे' पदसञ्चालने सति 'प्रोद्धुतेन' प्रोच्चलितेन 'घनरेणुराशिना' निविडधूलिजालेन, 'अम्बरविलङ्घने' आकाशोत्पतने च सति 'स्वय तेन' तद्बलेन 'दुर्द्दिने निपातितः' मेघावृत इव कृतः । यदा तद्बल भूतलचारि तदा तद्गतिवेगोत्थितधूलिराशिराकाशे मेघायमान. सूर्यविम्बमावृणोति स्म, यदा च गगनचारि तदा सख्यातीत तद्बल स्वयमेव मेघाडम्बर विडम्बयद् दिनमणि दुर्द्दिनमलिन करोति स्म । एतेन दक्षयज्ञे दक्षदौहित्रस्य सूर्यस्य भावी निग्रहो ध्वनितः । असुरपक्षे च देवानामन्यतमस्य सूर्यस्य असुरकर्त्तृकः पराभवः सूचित ॥ १२ ॥

१३ । १४ । ( शिवलीलापक्षे, पक्षान्तरे च ) अपारतद्बल खेचरीभवत् तपनभानुसम्पदा जित्वर ( सत् ) परिस्फुटाः कमलिनी. मीलयत्, निमीलिताः कुमदिनीं मोदयत्, चक्रवाकमिथुनानि पीडयत् सान्ध्यकर्मजनितद्विजरवर लोललोचनचकोरवीक्षित ( च सत् ) यामिनीक्षणरुचि समाददे इति श्लोकयोरन्वयः ।

पदार्थविवरणम् । 'अपारतद्बल' अनन्त तत्सैन्य 'खेचरीभवत्'

गगनमार्गेण गच्छत् 'तपनभानुसम्पदाम्' अशेषसूर्यकिरणाना 'जित्वरम्' आच्छादक सदित्यर्थ 'परिस्फुटा' प्रफुल्ला 'कमलिनी' पद्मिनी 'मीलयत्' मुद्रिता कुर्व्वत् 'निमीलिता' मुद्रिता 'कुमुदिनी' 'मोदयत्' विकाशयत् 'चक्रवाकमिथुनानि' कोकद्वन्द्वानि 'पीडयत्' पृथक्करणेन विरहार्त्तानि कुर्वत् 'सान्ध्यकर्मजनितद्विजत्वरम्' सान्ध्यकर्मणि सायमुपासनाविधौ जनिता उत्पादिता द्विजत्वरा द्विजाना व्यग्रता येन तत् 'लोललोचनचकोरवीक्षितम्' लोललोचना चञ्चलनयना रात्रिरागतेति चन्द्रोदयसम्भावनया उत्सुका ये चकोरा तै वीक्षित दृष्ट सत् 'यामिनीक्षणरुचि' रात्रिक्षणस्य शोभा 'समाददे' दधार। यदा अगणित तद्बल गगनपथेन चचाल, तदा अशेष सूर्यकर सरुद्ध, ततश्च रात्रि कालसाधर्म्य सर्व्वत प्रकटीबभूव, तथाच—पद्मिनीमुद्रण कुमुदिनी विकाश, चक्रवाकविरह, चकोराणा च द्रदर्शनाय चाञ्चल्य, द्विजानाञ्च सायमुपासनाविधौ सत्वरत्वम् इति भावार्थ। विशेषप्रतिपत्तिश्च मूला शोधवृत्तविधेया ॥ १३। १४ ॥

१५। (शिवलीलापक्षे पद्यान्तरे च) वायनाचलदिगम्बरस्थिरा भीषणा गगनभच्छदा भटा कालिकाक्षणत्रिलोकहेतुका परा नीलकण्ठमुदम् आदधुरित्यन्वय।

पदार्थविवरणन्तु मूलाध स्थितटीकाया सविस्तर प्रतिपादितम् ॥ १५ ॥

१६। (शिवलीलापक्षे, पद्यान्तरे च) अनगल रौद्रकर्म्मरत भुवनशोषणक्षमम् अपि तद्बल मार्गवर्त्तिनगरादिशोषणोत्पादनादिकरता न शिश्रिये इत्यन्वय।

अत्र तु दैत्यसैन्यस्य शिवलीलायाम् अलौकिकशक्तिमत्सु तेषु प्रसंगेषु मानसूत्रखनकसंनाहुधध्वच्छदनिवहोपयत्तयः—मानसूत्रं विस्तारपरिमाणः मार्गः विनिर्मेयः इति परिमाणार्थं सूत्रं मानसूत्रं खनकसंनाहुधः खनच्छेदनार्थं यथा ध्वजच्छदादिवितानवत्तयः, खन्यः पादपः तत्र पदातिकराः पर्यङ्गन्यादिकाः याः उत्तरत्वयः साधनानि उपकरणानीति यावत्। *दिग्विनिर्णययन्त्रेण दिक्प्रसवारणयन्त्रेण वा यन्त्रगा* नियन्त्रणं नियमनमिति भावः ता च न अभवन् स्थिताः। शिव-सैनिकानां कामचारित्वात् बाध्यादिपरिहारः सम्भवति अतएव मान-सूत्रादीनामनावश्यकत्वम्। इच्छावशात् कुमार्गे च मेदिन्या गमनमिति पूर्वश्लोकार्थोऽपि नासङ्गतः।

( पक्षान्तरे ) अन्वयादि पूर्ववत्।

पदार्थविवरणे विशेषस्तु, असुराणां तपश्चर्यादिकं पुराणप्रसिद्ध-मिति *तेषां दैवबलं तपोविशेषजनितभाग्यबलं ( दैवं दिष्टं भागधेयं* भाग्यमित्यमरः ) ॥ ७ ॥

८। ( शिवलीलार्णवे ) कामगा वरूथिनी यानविघ्नविनिपात-काम्यया सेतुसंक्रमविधानकौशलं तथा शैलपाटनपरिश्रमं न विदधे इत्यन्वयः।

पदार्थविवरणम्। 'कामगा' कामचारिणी 'वरूथिनी' शिवस्य सेना 'यानविघ्नविनिपातकाम्यया' गमनबाधापसारणेच्छया 'सेतुसङ्क्रम-*विधानकौशलं*' सेतुश्च सङ्क्रमश्च नद्युपरि स्थापितः पारहेतुः पाषाणादिबन्ध. सेतुः, प्रणाल्यादि पारहेतुः काष्ठादिमयो बन्धः संक्रमः ( साँको इति वङ्गभाषा ) तयोः विधानं रचना तत्र कौशलं तथा 'शैल-

पाटनपरिश्रम' पर्व्वतविदारणायासं 'न विदधे' न चकार। कामगेति विशेषण हेतुरूपेणोपन्यस्तम्।

( पक्षान्तरे ) अन्वयादिकं पूर्ववत्। वरूथिनी असुरसेना इति विशेषः ॥ ८ ॥

९। ( शिवलीलापक्षे ) असौ प्रभुः कामचारिणः तद्बलस्य पथि भोजनोपकरणोपपादने पटवेश्मना सज्जने च न किमपि सव्यधत्त किल इति पक्षद्वयेऽपि अन्वयः समानः।

पदार्थविवरणम्। 'असौ प्रभु.' प्रमथेशः शिव इत्यर्थः।

( पक्षान्तरे ) असौ प्रभुः = असुरपतिः, ( पक्षयोः ) 'कामचारिणः' इच्छामात्रेण यत्र तत्र गमनभोजनसमर्थस्य तद्बलस्य तत्सेनायाः पथि 'भोजनोपकरणोपपादने' आहार्यसम्पादने 'पटवेश्मना' वस्त्रनिर्मितगृहाणां 'सज्जने' कल्पने 'किमपि' किञ्चिदपि 'न' 'सव्यधत्त' सविधानम् आयोजनं कृतवान् किल वार्त्तायाम्, प्रयोजनाभावादित्यर्थः। सैनिकाः किल भोजन शयनञ्च यथेच्छं निष्पादयितुं समर्था इति प्रयोजनाभावः ॥ ९ ॥

१०। ( शिवलीलापक्षे ) विनतेप्सितार्थदा वज्रदुर्ज्जयगरिष्ठ-विक्रमा वेगवेपितमनोऽनिला वाहिनी च क्वचन भूचरी क्वचित्खेचरी अभवत्। इत्यन्वयः। पक्षान्तरेऽपि तथा। पक्षयोः पदार्थविवरणं मूल-श्लोकपादटीकायां द्रष्टव्यम्। चकारः कर्तृभेदापेक्षक्रियाभेदसमुच्चय-द्योतकः। प्रमथवाहिन्यपि ( पक्षान्तरे ) असुरवाहिन्यपि, क्वचन भूचरी क्वचित्खेचरी अभवत्। वाहिनीं विशिनष्टि विनतेत्या-दिना॥ १० ॥

११। तद्बलेषु भूतले विचरत्सु वासरः भीममौलिम् वल्लभरिपुम्

तमोऽन्तकम् । अतिरौद्रतेजस वीक्ष्य पाशुपाथसि ममज्ज । इत्यन्वयः पक्षयोः प्रायेण समानः ।

पदार्थविवरणं मूलकाव्ये पादटीकाया द्रष्टव्यम्' अन्वयश्च ॥११॥

१२ । दिनमणिः तद्बलस्य भुवि पादविक्रमे प्रोद्धुतेन घनरेणुराशिना अम्बरविलङ्घने च स्वयं तेन दुर्दिने निपातितः, इत्यन्वयः पक्षयोः समानः ।

पदार्थविवरणम् । 'दिनमणिः' सूर्यः 'तद्बलस्य' प्रमथसैन्यस्य पक्षान्तरे असुरवाहिन्याः 'भुवि' भूतले 'पादविक्रमे' पदसञ्चालने सति 'प्रोद्धुतेन' प्रोच्चलितेन 'घनरेणुराशिना' निविडधूलिजालेन, 'अम्बरविलङ्घने' आकाशोत्पतने च सति 'स्वयं तेन' तद्बलेन 'दुर्दिने निपातितः' मेघावृत इव कृतः । यदा तद्बल भूतलचारि तदा तद्गतिवेगोत्थितधूलिराशिराकाशे मेघायमानः सूर्यविम्बमावृणोति स्म, यदा च गगनचारि तदा सख्यातीतं तद्बल स्वयमेव मेघाडम्बरं विडम्बयद् दिनमणिं दुर्दिनमलिनं करोति स्म । एतेन दक्षयज्ञे दक्षदौहित्रस्य सूर्यस्य भावी निग्रहो ध्वनितः । असुरपक्षे च देवानामन्यतमस्य सूर्यस्य असुरकर्तृकः पराभवः सूचितः ॥ १२ ॥

१३ । १४ । ( शिवलीलापक्षे, पक्षान्तरे च ) अपारतद्बलं खेचरीभवत् तपनभानुसम्पदा जित्वर ( सत् ) परिस्फुटाः कमलिनीः मीलयत्, निमीलिताः कुमुदिनीः मोदयत्, चक्रवाकमिथुनानि पीडयत् सान्ध्यकर्मजनितद्विजत्वर लोललोचनचकोरवीक्षितं ( च सत् ) यामिनीदयरुचि समाददे इति श्लोकयोरन्वयः ।

पदार्थविवरणम् । 'अपारतद्बल' अनन्तं तत्सैन्यं 'खेचरीभवत्'

गगनमार्गेण गच्छत् 'तपनमानुसम्पदाम्' अशेषसूर्यकिरणानां 'जित्वरम्' आच्छादकं सदित्यर्थः 'परिस्फुटाः' प्रफुल्लाः 'कमलिनीः' पद्मिनीः 'मीलयत्' मुद्रिताः कुर्व्वत् 'निमीलिताः' मुद्रिताः 'कुमुदिनीः' 'मोदयत्' विकाशयत् 'चक्रवाकमिथुनानि' चेकद्वन्द्वानि 'पीडयत्' पृथक्करणेन विरहार्त्तानि कुर्वत् 'सान्ध्यकर्मजनितद्विजत्वरम्' सान्ध्यकर्मणि सायमुपासनाविधौ जनिता उत्पादिता द्विजत्वरा द्विजानां व्यग्रता येन तत्, 'लोललोचनचकोरवीक्षितम्' लोललोचनाः चञ्चलनयनाः रात्रिरागतेति चन्द्रोदयसम्भावनया उत्सुकाः ये चकोराः तैः वीक्षितं दृष्टं सत् 'यामिनीक्षणरुचिं' रात्रिक्षणस्य शोभां 'समाददे' दधार । यदा अगणित तद्बलं गगनपर्यन्तं चचाल, तदा अशेषः सूर्यकरः सरुद्धः, ततश्च रात्रिकालसाधर्म्यं सर्व्वतः प्रकटीबभूव; तथाच—पद्मिनीमुद्रणं कुमुदिनीविकाशः, चक्रवाकविरहः, चकोराणां चन्द्रदर्शनाय चाञ्चल्यं, द्विजानाञ्च सायमुपासनाविधौ सत्वरत्वम् इति भावार्थः। विशेषप्रतिपत्तिश्च मूलाधोविवृतेर्विधेया ॥ १३ । १४ ॥

१५ । ( शिवलीलापक्षे पक्षान्तरे च ) वाशनाचलदिगम्बरस्थिरा भीषणाः गगनसंच्छदाः भटाः कालिकाक्षणत्रिलोकहेतुका परा नीलकण्ठमुदम् आदधुरित्यन्वयः ।

पदार्थविवरणन्तु मूलाधःस्थितटीकायां सविस्तरं प्रतिपादितम् ॥ १५ ॥

१६ । ( शिवलीलापक्षे, पक्षान्तरे च ) अनर्गलं रौद्रकर्म्मरत भुवनशोषणक्षमम् अपि तद्बलं मार्गवर्त्तिनगरादिशोषणोत्सादनादिकरता न शिश्रिये इत्यन्वयः ।

पदार्थविवरणम्। 'अनर्गल' निर्बाध यथा स्यात् तथा 'रौद्र-कर्म्मरतम्' रुद्रसम्बन्धिकार्यव्यापृत 'भुवनशोषणक्षम' जगत्संहारशक्तम् अपि तद्वल 'मार्गवर्त्तिनगरादिशोषणोत्सादनादिकरता' न शिश्रिये यानि च नगरादीनि तद्गमनपथवर्त्तीनि भवन्ति तेषा शोषण ध्वंसञ्च नाकरोदिति भावः। अत्र विरोधाभासः, रौद्रकर्म्मेति आतपकर्म्मरतम् अथच न शोषणकरम् इति विरोधः, शिवकार्यरतमिति तत्परिहारः, पक्षान्तरे च भीषणकर्म्मरतमिति तत्परिहारः। पक्षद्वयेऽपि भुवनशोषणक्षम जगल्लुण्ठनसमर्थम् अथच नगरोत्सादन नाकरोदिति विरोधः, प्रमथानाम् दानवानाञ्च देवयोनिविशेषमहिम्ना तत्परिहारः। सेना-सामान्यत्वेऽपि न तेषामुपद्रवप्रियत्वमासीदिति भावः॥ १६॥

१७। ( शिवलीलापक्षे, पक्षान्तरे च ) मातृमन्युम् अपनेतुम् इच्छुक शैलसारसुदृढं ( तत् ) चलद्वल वीक्ष्य ( जनेन ) बुद्ध ( यत् ) अधुना रयो न अवशिष्टता लप्स्यते अरयश्च न ( अवशिष्टतां लप्स्यन्ते ) इत्यन्वयः।

पदार्थविवरणम् मूलटीकाया अवगन्तव्यम्॥ १७॥

१८। ( शिवलीलापक्षे, पक्षान्तरे च ) अदितिप्रभवकर्म्मचिन्तया स्वस्वदु:स्थितिविनिर्णयेन च क्लेशरोषकलुषीकृताशयाः ते गमनवेगवर्द्धन चक्रिरे इत्यन्वयः।

पदार्थविवरणम्। ( शिवलीलापक्षे ), अदितिप्रभवस्य दक्षस्य कृतकार्यभावनया स्व-स्व-दुरवस्था निश्चयेन च क्लेशरोषाभ्यां कलुषीकृता विकृताः आशयाः चित्तवृत्तयो येषां ते तादृशाः 'ते' सैनिकाः सत्वरतरां गतिं चक्रुः। पक्षान्तरे—अदितिप्रभवाणां वैमात्रेयभ्रातृभूतानां

देवाना कर्म्मचिन्तया पूर्व्वकृतवैरस्मरणेन पातालस्थितिरूपदुःखानुभवेन च। अन्यत्समानम् ॥ १८ ॥

१६। (शिवलीलापक्षे, पक्षान्तरे च) अरुणारुणकनीयसोः मनोवातयोः अपि विचेयरंहसा प्रस्थिताः अपि रिपुक्षयोद्यताः उत्सुकाः ते गतिविलम्बं मेनिरे इत्यन्वयः।

पदार्थविवरणम्। अरुणः सूर्यः, अरुणकनीयान् अरुणस्य सूर्यसारथेः भ्राता गरुडः तयोः मनसो वायोरपि 'विचेयरंहसा' सूक्ष्मवेगेन 'प्रस्थिताः' अपि 'रिपुक्षयोद्यताः' 'उत्सुकाः' शत्रुनाशोत्साहव्यग्रतयेत्यर्थः गतिविलम्बं गतिमान्द्यं मेनिरे उत्प्रेक्षितवन्तः ॥ १६ ॥

२०। (शिवलीलापक्षे, पक्षान्तरे च) भीमकान्तगहना आहदारुणा भूरिशृङ्गसहिता इयं चमूः मानगौरवविशेषभाजनं जङ्गमो गिरिः इव अवलोक्यते इत्यन्वयः।

पदार्थविवरणन्तु मूलाधोविवृतौ विशदरूपेण प्रदत्तम् ॥ २० ॥

२१। (शिवलीलापक्षे, पक्षान्तरे च) नैकसख्यदरसंयुतात्मनि क्षौणिमात्रधरणोचिते गिरौ, निर्द्दरस्थितिहृदः जगद्धतिप्रोद्यतस्य च बलस्य तुला का? इत्यन्वयः।

पदार्थविवरणम्। पूर्व्वश्लोके चमूः गिरिरिवावलोक्यत इत्युक्तम्, अस्मिन् श्लोके तयोः साम्यं न सम्भवतीति सिद्धचारणाना मध्ये विपरीतवादिनः कस्यचिद् वाक्यमुपन्यस्यति—नैकसख्येत्यादि। न एका नैका (नञर्थेन न शब्देन सह सुप्सुपेति समास इति सिद्धान्तकौमुदी) संख्या येषा ते बहव इत्यर्थः न एका सख्या येषाम् इति त्रिपदबहुब्रीहिर्वा, नैकसख्याः दराः गर्त्ताः तैः संयुतः युक्तः आत्मा शरीरं यस्य स तस्मिन्

बहुकन्दरविशिष्टस्वरूपे अथच ( दरः भय, आत्मा मनः इति ) बहुविधभयपूर्णमनसि, क्षौणिमात्रधरणोचिते केवलपृथिवीधारणशक्ते गिरौ पर्व्वते, निर्द्दरस्थितिहृदः नास्ति दरस्थितिः भयस्थानं यत्र तादृक् हृत् अन्तःकरण यस्य भयस्थितिशून्यहृदयस्य जगद्धृतिप्रोद्यतस्य त्रिभुवनहरणोत्साहिनः अथच जगतां पृथिवीतरलोकानामपि धृतिप्रोद्यतस्य ( धृतिहृतिशब्दयोः श्लेषात्तथार्थलाभः ) बलस्य दृश्यमानसैन्यस्य का तुला उपमा। दरसंयुतात्मनि निर्द्दरस्थितिहृदः, क्षौणिमात्रधरणोचिते जगद्धृतिप्रोद्यतस्य च नैव सादृश्यमिति भावः। 'दरोऽस्त्री साध्वसे गर्त्ते', 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपी'ति च मेदिनी ॥ २१ ॥

२२। ( शिवलीलापक्षे, पक्षान्तरे च ) उग्रशक्तिपरमङ्गसङ्गतं घोरघोषजितवज्रगर्ज्जितं सत्त्वसम्भृतम् अपारम् अक्षयम् बलमिदं सिन्धुवत् विराजते इत्यन्वयः।

पदार्थविवरणम्। सिद्धचारणेषु कश्चित् तद्बलस्य सिन्धुसादृश्यं वर्णयति—'उग्रशक्ति' उत्कटबलं 'परमङ्गसङ्गतं' शिवसेनापक्षे परः शत्रुः दक्षः इत्यर्थः। दैत्यसेनापक्षे परः देवगणः। तस्य भङ्गाय पराजयाय सङ्गतम्, अथवा शिवसेनापक्षे उग्रशक्ति उग्रस्य शिवस्य शक्तिरिव शक्तिः यस्य तत्। 'सङ्गतम्' एकत्रीभूतम् घोरः भयङ्करः यो घोषः विविधवाद्यध्वनिः सेनाकलकलश्च तेन जितं वज्रगर्ज्जितं अशनिशब्दः येन तत्, सत्त्वसम्भृतम् उत्साहपूर्णम् अपारम्, अनन्तम् अगणितमित्यर्थः अक्षयम् अक्षं रुद्राक्षं याति धारणार्थं प्राप्नोति, दैत्यसेनापक्षे विनाशरहितम्, इदं बलं सिन्धुवत् सागर इव विराजते शोभते। सिन्धुरपि

उग्रशक्तिभिः भीमबलैः परैः श्रेष्ठैः महद्भिरित्यर्थः भङ्गैः तरङ्गैः कल्लोलैरिति समुदितार्थ सङ्गतः युक्तः, घोरघोषैः विषमशब्दैः जित वज्रगर्जित येन, सत्त्वैः प्राणिभिः सम्भृतः पूर्णः अपारः अक्षयश्च ॥२२॥

२३ । ( शिवलीलापक्षे, पक्षान्तरे च ) यत् जलप्रकृतितो विलक्षण भङ्गहीनम् उपलोपमं दृढ तस्य भङ्गभागिनि मृदौ जलात्मके तत्र उपमानता किमिव ? इत्यन्वयः ।

पदार्थविवरणम् । सिन्धुतुल्यतायाम् अपरः प्रतिवदति—'यत्' बल 'जलप्रकृतितः' डलयोरभेदात् जडप्रकृतेर्विलक्षण विभिन्नरूप कर्म्मकुशल धीमच्च इति भाव. 'भङ्गहीन' पराजयशून्य.अथच तरङ्गवर्ज्जितम् 'उपलोपम' पाषाणतुल्य दृढ कठिन 'तस्य' बलस्य 'भङ्गभागिनि' तरङ्गशालिनि अथच पराजययुक्ते 'मृदौ' द्रवरूपत्वात् कोमले 'जलात्मके' जलमये अथच जडात्मनि 'तत्र' सिन्धौ 'उपमानता' सादृश्य किमिव कथमिव सम्भवेत् ? जडाजडयोः भङ्गाभङ्गवतो. मृदुकठिनयोः सादृश्यमसम्भवमेवेति भावः ॥ २३ ॥

२४ । ( शिवलीलापक्षे, पक्षान्तरे च ) शूरराजपरिवेषशोभितः तारकोपचितिः अन्तवर्ज्जितः भूतभावविदितः सवैभव भटव्रजः गगनवत् भ्राजते इत्यन्वय ।

पदार्थविवरणम् । अन्यो बलस्य गगनसादृश्य व्यवस्थापयति—शूरशब्दः सूर्य्यार्थकोऽपि, सूरः शूरोऽपि चादित्य इति द्विरूपकोषात् । अस्य श्लोकस्य विस्तृतव्याख्या च मूलाधस्तात् टीकातो ज्ञेया ॥ २४ ॥

२५ । ( शिवलीलापक्षे, पक्षान्तरे च ) विग्रहात्मनि तीव्रवेग-

भृति नैकरूपभृति तत्र बहुमहात्मके निष्क्रियोदये रूपवर्जिते खे च नेतरा विधर्म्मता इत्यन्वयः ।

पदार्थविवरणम् । अपरः कश्चिद् बलस्य गगनतुल्यतायां प्रतिवदति—तथाच 'विग्रहात्मनि' युद्धयत्नवति ( 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि' इति मेदिनी ) अथच ग्रहहीनस्वरूपे 'तीव्रवेगभृति' अतिवेगयुक्ते 'नैकरूपभृति' नानारूपधारिणि 'तत्र' शिवबले, पक्षान्तरे दैत्यबले, 'बहुमहात्मके' सूर्यादिबहुग्रहयुक्तस्वरूपे 'निष्क्रियोदये' स्पन्दोत्पत्तिहीने 'रूपवर्जिते' नीरूपे 'खे' आकाशे च 'नितरां विधर्म्मता' वैसादृश्यं तच्च यथासम्भवं बोध्यम् ॥ २५ ॥

२६ । २७ । ( शिवलीलापक्षे, पक्षान्तरे च ) दूरतो बलविलोकने रतः सिद्धचारणगणः परस्परम् इत्थम् अद्भुतविवादकौशले हृदयं यावदेव समादधे, तावदेव मन्युवेगविकटाः हुहूकृतः विश्वघस्मरघनारवाः भटाः भुवनत्रयव्यस्तमम्बरदितिसम्भवास्पदं प्राप्नुवन् । इत्यन्वयः ।

पदार्थविवरणम् । 'दूरतः' ऊर्द्ध्वगगनमालम्ब्य 'बलविलोकने' सैन्यदर्शने 'रतः' 'सिद्धचारणगणः' सिद्धाः तन्नाम्ना प्रसिद्धा देवयोनिविशेषाः चारणाः गन्धर्व्वविशेषाः, 'गन्धर्वाणां सतो लोकः परतः सतयोजनात् । देवानां गायनाश्चैव चारणाः स्तुतिपाठकाः' इति पद्मपुराणस्वर्गखण्डवचनात्, तेषां गणः समूहः 'परस्परम्' 'इत्थं' पूर्वोक्तप्रकारेण 'अद्भुतविवादकौशले' अद्भुतं विचित्रं यद् विवाद-कौशलं स्वस्वपक्षस्थापनरसन-नैपुण्यं तस्मिन् 'हृदयं' मनः 'यावदेव' यस्मिन्नेव क्षणे 'समादधे' एकाग्रं कृतं, 'तावदेव' तस्मिन्नेव क्षणे 'मन्युवेगविकटाः' क्रोधवेगेन भयङ्कराः 'हुहूकृतः' हुङ्कारकराः घोरत्वदर्शकध्वनिं कुर्वन्तः

'विश्वसंहरणशक्तयः' जगन्नाशनसमर्थाः 'भटाः' वीराः शिवलीलापक्षे शिवसम्बन्धिनः, दैत्यपक्षे दानवीयाः; 'भुजतारडवपटलं' बाहुबलप्रकाशनेनम 'अदितिसम्भवास्पदम्' अदितेः सम्भवो जन्म यस्मात् सः अदितिपिता दक्षः तस्य आस्पदं स्थानं पक्षान्तरे अदितेः सम्भवो येषां ते अदितिपुत्राः देवाः तेषाम् आस्पदं पदं स्थानं स्वर्गमिति यावत् 'प्राप्नुवन्' गतवन्तः। युग्मकम् ॥ २६—२७ ॥

२८। (शिवलीलापक्षे) अथ तेन पत्या दक्षेण सुगुप्तमपि नगरं विकटभटाना सन्निपातेन दूनं ; दिनेशे तपति अपि तुहिनपाते भवति अम्भोजिनीनां ग्लानिः कस्य दृष्टिं न याता। (पक्षान्तरे) अथ तेन दक्षेण पत्या इत्येव विशेषः। इत्यन्वयः।

पदार्थविवरणम्। (शिवलीलापक्षे) अथेत्यस्य वृत्तान्तरारम्भसूचकत्वम्। 'तेन पत्या' प्रजापतिना 'दक्षेण' 'सुगुप्त' सुरक्षितम् 'अपि' 'नगरं' पुरं 'विकटभटाना' भीषणयोद्धॄणा 'सन्निपातेन' सम्भूय समागमेन आक्रमणेनेति भावः। 'दून'' उत्पीडितम्, 'दिनेशे' सूर्ये 'तपति' करं वितरति अपि 'तुहिनपाते' हिमपाते 'भवति' जायमाने 'अम्भोजिनीनां' पद्मिनीनां 'ग्लानि.' पीडा 'कस्य दृष्टिं' न' 'याता' प्राप्ता सर्व्वस्यैव प्रत्यक्षीभूता इति भावः। भाविवर्णनसूत्रमेतत्।

(पक्षान्तरे) अथ तेन दक्षेण युद्धकुशलेन पत्या स्वर्गाधिपतिना इन्द्रेण। अन्यत् समानम् ॥ २८ ॥

इति तृतीयसर्गटीका।

## चतुर्थः सर्गः ।

१ । ( शिवलीलापक्षे ) प्रजापः दक्षः अदेवयोग्यं स्वप्नम् अवेद्य अयं पुरात् इति दध्यौ, स्वप्नदृशः ततः तद्गुरुणा अभव्यदः सः सशङ्कम् अनुश्रुतश्च इत्यन्वयः ।

पदार्थविवरणम् । मूलादधो द्रष्टव्यम् । 'पुरात्' पुरमत्ति भक्षयति नाशयतीति यावत् 'अदोऽनन्ने' इति विट् प्रत्ययेन सिद्धम् । अत्रैव पक्षे अन्वयान्तरमर्थान्तरञ्च तत्रैव ज्ञेयम् ।

( पक्षान्तरे ) पुरा दक्षः प्रजापः यम् अदेवयोग्यं स्वप्नम् अवेद्य दध्यौ, तद्गुरुणा स्वप्नदृशः अभव्यदः सः ततश्च तत एव अनुश्रुतः । इत्यन्वयः । सर्व्वेषां देवानामशुभसूचक इति तेषां मातुर्दुःस्वप्नदर्शनम् न केवलस्य इन्द्रस्येति गूढम् । अत्रापि पदार्थविवरणं मूलादधस्ताद्द्रष्टव्यम् ॥ १ ॥

२ । इति एवम्भूतं यं स्वप्नमाचचक्षे इत्युत्तरवर्त्ति चत्वारिंशश्लोकेन यस्य कथनमुपन्यसिष्यते तं स्वप्नं स्वच्छमित्याद्यष्टात्रिंशता श्लोकैर्वर्णयति । स्वप्नोऽयं प्रायेण पक्षयोः समानार्थकः । विशेषस्तु मूलादधो व्याख्यातः ।

नभः स्वच्छं अम्बुजातं ( नदीतडागादिभेदभिन्नाना जलानां जातं समूहः ) निर्म्मलं, शशाङ्कः पूर्णः, अम्बुजातं ( अम्बुजं पद्म ) स्फुटं ( प्रफुल्लम् ) निशा दिवा च समानकान्ते तुल्यकान्तियुते— ( निशा स्वच्छनभसि पूर्णचन्द्रः दिवा निर्म्मलजले प्रफुल्लपद्ममिति कान्तिसादृश्यम् ) सदास्मितोन्द्रासिविमानकान्ते ( भवतः ) इत्यन्वयः । अन्तिमचरणस्यार्थः मूलादधो द्रष्टव्यः ॥ २ ॥

३। नदीतरङ्गेषु ( नदीनां तरङ्गेषु लहरीषु ) अतिरिङ्गितानाम् ( अत्यर्थं चलितानां चञ्चलीभूतानां ) प्रतिमाविधूनाम्, ( प्रतिबिम्बित-चन्द्राणाम् ) लीलाविलासः ( लीला शोभा तस्याः विलासः प्रकाशः, लीलेव क्रीडेव विलासः विशिष्टा कान्तिर्वा ) मन्दाकिनीस्रोतसि ( मन्दाकिनी स्वर्गगङ्गा—तस्याः स्रोतसि वेगवत्या धारया ) लीयमानाम् ( आमज्जन्तीम् ) स्वर्णाम्बुजश्रेणिम् (सुवर्णपद्मानां श्रेणिम् आवलिम्) अधःकरोति ( न्यूनतां नयति, पराजयते ) इति व्याख्यानगर्भोऽन्वयः।

नदीतरङ्गेषु पतितानि तरङ्गवेगचञ्चलानि चन्द्रप्रतिबिम्बानि स्वच्छेन मन्दाकिनीस्रोतसा ह्रियमाणानि सुवर्णकमलानीव विभान्ति इति भावः॥ ३॥

४। भुवः प्रसादः ( पृथिव्याः पङ्कादिशून्यत्वम् ) सलिल-प्रसादः ( जलस्य स्वच्छता ) ज्योतिःप्रसादः ( ज्योतिषां चन्द्रसूर्यनक्ष-त्राणां मेघावरणरहितः प्रकाशः ) मरुतः ( वायोः ) प्रसादः ( धूलीनामनुड्डयनेन निर्मलत्वम् ) नभोदिशोः ( आकाशस्य दिशश्च ) किञ्च ( अपिच ) हृदः ( मनसः ) प्रसादः ( कृष्णमेघशून्यत्वम् आकाशस्य प्रसादः, विलोकनप्रसारबाधाभावो दिक्प्रसादः, ( सर्वत्र निर्मलतया सुखोत्पादनं मनसः प्रसादः ) आत्मप्रसादः ( आत्मनः प्रसादः सौमनस्यम् ) अपि ( च ) समयेन ( शरत्कालेन, अपवर्गे तृतीया) सिद्धः ( सम्पन्नः ) इति व्याख्यागर्भोऽन्वयः। भुवः इत्यादिना,—क्षित्यप्तेजोमरुद्व्योमदिङ्मनआत्मनां समयेन इत्यनेन कालस्य कथनात् न्यायवैशेषिकमतसिद्धानां सर्वेषां द्रव्याणामत्र प्रदर्शनं बुभुत्सुबोधनायेति बोध्यम्॥ ४॥

५। पयोविहीना: ( जलशून्याः, अतएव ) तूलोपमानाः ( तूल-सदृशाः शुभ्रवर्णाः) क्रमलीयमानाः (क्रमेण लीयमानाः ह्रासं प्राप्नुवन्त.) क्षणम् ( अल्पकाल व्याप्य ) आकाशकोणे ( गगनैकदेशे ) दृश्यमाणाः ( दृश्यमानाः) घनानां ( मेघानां ) शकलाः ( खण्डानि, भित्त शकल खण्डे वा पु सीत्यमरः ) शशाङ्कलेखाभ्रम ( चन्द्रखण्डभ्रान्तिम् ) अर्पयन्ति ( प्रयच्छन्ति द्रष्टृभ्य इति शेषः ) शुक्लमेघस्य क्रमलयेन अवशिष्टाः क्षुद्रांशाः गगनतले चन्द्रकलावत् प्रतीयिरे लोकैरिति भावः ॥ ५ ॥

६। कालेन ( शरदृतुना ) प्रफुल्लाः ( प्रस्फुटिताः ) काशावलयः ( काशकुसुमश्रेणयः ) पयोदकृष्णाम्बरसंवृतानाम् ( पयोदैः मेघैः कृष्ण यत् अम्बरम् आकाश. तेन संवृतानाम् तिरोहितानाम् अथच पयोदवत् कृष्ण यदम्बर वस्त्र तेन संवृतानाम् आच्छादितानाम्) गलिताश्रुवाराम्, ( गलितम् अश्रुसदृश वाः वारि यासा ) दिगङ्गनानाम् ( दिश एव अङ्गनाः तासा ) शुक्लांशुकच्छायम् (शुक्लम् अंशुक वस्त्र तस्य च्छाया कान्तिः 'छाया बहुत्वे वान्यत्र' इति वैकल्पिकक्लीवत्वम् तत् ) अभिश्रयन्ति (आश्रयन्ति)। वर्षासु दिशो मेघावृता आसन् शरदि काशपुष्पभूषिता भवन्ति इति भावः। सद्योभर्तृमरणेन यथा नारी कृष्णाम्बरा रोदनपरायणा च, पश्चात् तथाविधवज्राघातसदृश-दुःखापगमे शुक्लवस्त्रसवीता शुद्धवैधव्यव्रतमाचरति तद्व्यवहारसमारोपो दिक्षु वर्त्तते। रूपकनिदर्शनासमासोक्तीना सङ्कर.। शुक्लांशुकच्छायमित्यत्र निदर्शना।) इति व्याख्यागर्भोऽन्वयः॥ ६ ॥

७। चञ्च्वा ( चञ्चुपुटेन ) मृणालीशकल (क्षुद्रमृणालखण्डं)

यहन्तो हंसाः हर्षेण ( कान्तादर्शनानन्देन ) कान्ताम् ( स्वस्वप्रणयिनीं हंसीम् ) अभियान्ति ( अभिलक्ष्य सन्तरन्ति ) तु ( किंतु ) हंस्यः— ( एकैकहंसापेक्षया कान्तामित्यत्रैकवचनम्, अत्र तु सर्व्वा एव ताः हंसकान्ताः इति बोधयितुं बहुवचनम् ) तत्र ( तेषु हंसेषु ) उदिततूलपुञ्जभ्रमाः ( उदितः उत्पन्नः तूलपुञ्जभ्रमः तूलपुञ्जा एते जले स्रोतसा वायुना वा नीयन्ते इति भ्रमः यासां ताः ) अपरत्र ( स्थानान्तरे ) कान्तम् ( स्वस्वप्रणयिनं हंसम् ) विचिन्वन्ति (अन्विष्यन्ति) भ्रान्तिमदलङ्कारः। इति व्याख्यागर्भोऽन्वयः ॥ ७ ॥

८। पङ्कासितविग्रहेण ( पङ्कवत् कृष्णवर्णमूर्त्तिना ) घनेन ( मेघेन ) तेजस्विनं ( तेजोविशेषवन्तं सूर्य्यरश्मिविशेषवन्तं ) रौद्रमुखावभासम् (रौद्रमुखः आतपाद्यः अवभासः प्रकाशो यस्य तम्, ) वराहसङ्घम् ( वराणि दुर्दिनत्वशून्यतया श्रेष्ठानि च तानि अहानि दिनानि चेति वराहाणि तेषां सङ्घम् समूहम् ) समागतं ( उपस्थितम् ) वीक्ष्य ( दृष्ट्वा ) भीत्या ( भयेन, भयेनेव ) स्वयमेव तिरोधीयते ( विलीयते ) इति व्याख्यागर्भोऽन्वयः । ऋतुभेदेन सूर्य्यरश्मीनां भेदो भवति, शरदृतौ सूर्य्यरश्मयो मेघसंघातनाशकाः, ताहशरश्मिमद्दिवससंघस्य समागमेन प्रातरारभ्य तथाविधरश्मिस्थित्या च मेघा अपसृताः इति भावः । रौद्रमुखावभास इत्यत्र समासविग्रहान्तरं अर्थान्तरञ्च मूलस्याधस्ताद्द्रष्टव्यम् ॥ ८ ॥

९। मन्दानिलस्पर्शतरङ्गितानि ( मन्दश्चासौ अनिलो वायुश्चेति मन्दानिलः तस्य स्पर्शः सञ्चारसम्बन्धः तेन तरङ्गितानि तरङ्गवन्ति कृतानि तत्करोत्यादौ णिचि क्तप्रत्ययेन सिद्धम्, नमितानमितान्यपि ) सुपुष्ट-

गर्भाणि (सुपुष्टः शस्ययोगेन स्थूलः गर्भः मध्यभागो येषाम् तानि ) शुकावलिस्निग्धरुचीनि (शुकावलय इव स्निग्धा ममृणहरिता शुकावलिस्निग्धा मृगचपलादिवत् उपमानकर्म्मधारयः, रुचिः कान्तिर्येषां तानि) हैमनानि ( हैमन्तिकानि ) शस्यानि क्षेत्रेषु भान्ति ( शोभन्ते ) । इति व्याख्यागर्भोऽन्वयः ॥ ९ ॥

१० । चन्द्रः शीतो न ( हेमन्तादिकालवत् शैत्यदुःसहो न ) भानुः ( सूर्य्यः ) प्रखरः ( निदाघकालवत् अत्युष्णस्पर्शो ) न, ( यदि चन्द्रो न शीतः तत्किमुष्ण इति च्छलवादिनामाशङ्कानिरासायाह ) चन्द्रः खरः ( उष्णः ) न, ( यदि भानुः प्रखरो न तत् किं शीतलः इति च्छलवादिनामाशङ्कानिरासायाह ) अर्कः ( भानुः ) तुहिनः ( शीतः) न च, शारदयोः शरत्कालीनयोः चन्द्रार्कयोः ( चन्द्रसूर्य्ययोः) स्वरूपे (स्वभावे) तावेव ( शारदचन्द्रसूर्य्यावेव ) मानम् ( उपमानम् ) तदन्यत् ( ताभ्यामन्यत् ) न पुनः ( नैव मानम् ) इति व्याख्यागर्भोऽन्वयः ॥ १० ॥

११ । विशुद्धचामीकरतुल्यभासः (विशुद्ध धात्वन्तरामिश्रित यत् चामीकर सुवर्ण तेन तुल्याः भासः कान्तयो येषा ते शुद्धसुवर्णवर्णाः ) प्रभूतशस्यानतमञ्जरीकाः (प्रभूतानि प्रचुराणि च तानि शस्यानि चेति तैः प्रभूतशस्यैः आनता ईषन्नताः मञ्जर्य्यः मञ्जरयः शस्यवल्लर्य्यो येषा ते, प्रभूतानि शस्यानि यासु ता अतएव नता मञ्जर्य्यो येषा ते इति वा ) वायुविधूननेन ( वायुना विधूनन कम्पन तेन ) झणत्कृतः, ( झणत् इति अव्यक्तानुकरणशब्दः स च पक्वधान्याना मिथोभिघातजनितः त कुर्व्वन्ति इति क्विप् प्रत्ययेन, झणत्कृदिति तस्य प्रथमाबहुवचनान्त )

न्यभेदाः ( शारदशालिविशेषाः ) परा शोभा बिभ्रति (दधति) इति ाल्याणक्योऽन्वयः ॥ ११ ॥

१२। अश्रान्तवृष्टिम् ( अविश्रामवर्षजलधारां ) वपुषा शरीरेण ) वहद्भिः ( दधद्भिः ) कर्दममग्नजङ्घैः ( कर्दमेषु ालकृष्टक्षेत्रजातपङ्केषु मग्ना प्रोथिता जङ्घा जानुनिम्नावयवो येषां तैः ) कृषीवलैः ( कृषिजीविभिः ) यद्रोपणादीनि ( येषां रोपणादीनि–आदि- ादेन तृणान्तरापसारणं कीटादिभ्यो रक्षणादिकं ग्राह्यम्। येषामिति- शेषे षष्ठी तदर्थश्च उद्देश्यत्वसम्बन्धः, सुखस्य यत्न इत्यादिवत् यदु- द्देश्यकानि रोपणादीनि तन्निष्पादकौषधीनामिति शेषः) कृतानि तानि शस्यानि शृद्धानि ( सम्पन्नानि ) अवलोक्य हृष्टं आनन्दितं ( भावे क्तप्रत्ययः ) भवतीति शेषः। यद् ( यस्मात् ) अश्रान्तवृष्टिधारा- धारणादिक्लेशमङ्गीकृत्य रोपणादीनि ओषधीनामिति शेषः। कृतानि तानि शारदतया प्रसिद्धानि शस्यानि सम्पन्नानि विलोक्य तस्मात् कारणात् आनन्दोऽनुभूतः, श्रमसाफल्यादिति भावः। व्रीहिरूपौ- षधिष्वेव कृषिजीविना शस्यत्वबुद्धी रोपणादिषु यत्नाधिक्यादेति तदनु- वादेन शस्यानीति शस्यहेत्वोषधिषु लाक्षणिकम्। ततश्च यद्रोपणादीनि ( येषां व्रीहीनां रोपणादीनि ) कृतानि तानि शस्यानि (व्रीहीन्) शृद्धानि ( सम्पन्नफलानि ) अवलोक्य हृष्टम् इत्यर्थो वा ॥ १२ ॥

१३। सप्तच्छदानां ( सप्तपर्णवृक्षाणां ) कुसुमप्रकाशः ( कुसु- मानां पुष्पाणां प्रकाशः प्रस्फुटनं कृदभिहितो भावो द्रव्यवत् प्रकाशते इति प्रस्फुटितानि कुसुमानि ) रुवतः ( गुञ्जनध्वनिं कुर्वतः ) लुब्धान् ( लोभवतः ) भृङ्गान् ( भ्रमरान् ) करीन्द्रदानमतिमानगन्धैः ( करी-

न्द्राणां गजश्रेष्ठाना मदक्षरणयोग्याना हस्तिनां दानानि मदजलानि तत्प्रतिमानगन्धैः, तदुपमगन्धैः ) आहूय ( आमन्त्र्य ) समीरचलद्दलैः (समीरेण चलन्ति, समीरचलन्ति च तानि दलानि, चेति तैः पवनकम्पित-पत्रैः ) वारयति इव ( प्रतिषेधतीव ) किञ्चित् प्रदानार्थमाहूताः प्रदाना-वसरे, लोभातिशयेन कोलाहल कुर्व्वाणा भिक्षवः क्वचिन्निरस्यन्ते इति दृश्यते, अत्र तयोत्प्रेक्षा । व्याख्यागर्भोऽन्वयः ।

भावार्थस्तु—सप्तच्छदगन्धाकृष्टाः भ्रमराः समीरणचालितकुसुमेषु सविलम्बं निविशमानाः भ्रमन्तो रुवन्तीति ॥ १३ ॥

१४ । निसर्गरम्यम् ( स्वभावसुन्दरम् ) एकम् उद्यानन्तु एवं प्रकृत्या ( एतादृशस्वभावया—एवं एतादृशी प्रकृतिः यस्याः—शरत्काल-मात्रस्य निर्म्मलाकाशत्वादिस्वभावतया, शरद्वर्णने वर्त्तमानकालप्रत्यय-प्रयोगः ) शरदा ( शरदृतुना ) उपगूढम् (आलिङ्गितं सत्) स्वभावकान्त ( प्रकृतिसुन्दर ) वपुः ( शरीरं ) यौवनलीलया ( यौवनस्य लीलया विलासेन, सञ्चारविशेषेण ) इव ( उपगूढ सदिव ) अपूर्वशोभाम् ( अदृष्टपूर्व्वशोभाम् ) अभजत् ( अलभत ) इति व्याख्यागर्भोऽन्वयः । भावार्थस्तु—स्वप्ने यः शरत्कालो दृष्टः तल्लक्षणं यथाप्रतिवर्षं दृश्यते तथैव, किमपि अपूर्व्वत्व नासीत्, इति तत्र वर्त्तमानप्रयोगः । एकम् उद्यानं तु स्वाभाविकरमणीयतया विशेषतः शरत्कालसमागमेन यादृशशोभासम्पन्न दृष्ट तादृशी शोभा अन्यस्मिन् उद्याने पूर्व्वं न दृष्टा । इति ॥ १४ ॥

१५ । प्रफुल्लपुष्पाभरणा ( प्रफुल्लानि पुष्पाणि आभरण-मिव यस्याः ) तदीया ( उद्यानसम्बन्धिनी ) शेफालिका ( शेफा-

लिकातरुः ) स्मरान्धा ( कामोन्मत्ता ) योषित् ( कामिनी ) इव निःशब्दसञ्चारसमेतवात ( निःशब्दसञ्चारं यथा तथा समेतः समागतश्चासौ वातश्चेति तम् ) अज्ञातसङ्गात् ( अविदितसमागमात् सुरभीचकार ( असुरभिं सुरभिं चकार )। वायुसञ्चारस्यापरिज्ञानेऽपि कुसुमविकाशसमये शेफालिकासौरभं दूरगामि भवतीति सर्वानुभूतम्। पत्रकम्पनाद्यभावेन वायोरागमनं न ज्ञायते, अतएव शेफालिकाकुसुमेन तत्सङ्गोऽप्यविदित एव, तथापि सौरभस्य दूरगमनात् वायुसङ्गो जात इति निश्चितमेव। अत्रोपमानभूता स्मरान्धा योषित्, नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि,—इत्युक्तदिशा तया सङ्गो यथा ज्ञातुं न शक्यते, अथच सङ्गेन नायकः सुरभिर्भवति तद्वदिति भावः। इति व्याख्या, भावयुक्तोऽन्वयः ॥ १५ ॥

१६। श्रेणिविशेषभाजः (श्रेणिविशेषान् पङ्क्तिभेदान् भजन्ते ये ते सुविन्यस्ता इत्यर्थः) सुक्लृप्तपुष्पव्रततिप्रतानमल्लीलुपः ( सुक्लृप्ता याः पुष्पव्रततयः सपुष्पजातीयूथीलतास्तासां प्रताना विस्ताराश्च मल्लीलुपाश्च ) द्विरेफान् (भ्रमरान्) इतस्ततः, ( एतत्स्थानमपहाय स्थानान्तरं तच्चापहाय ) सञ्चरतः ( भ्राम्यतः ) विलोक्य पुष्पप्रहासं विदधुः पुष्पप्रकाशच्छलेन हास्यं चक्रुः। वयमेकत्रैव स्थिरीभूय बहुभ्यः सुखं प्रयच्छामः, एते तु स्वसुखमात्रस्य कृते इतस्ततो भ्रमणक्लेशमनुभवन्तीत्युपहासहेतुरिति बोध्यम्। येषां मल्लिकातरूणां शरदि पुष्पविकाशो भवति तएवात्र ग्राह्याः। अथवा स्वप्नदृष्टस्य वास्तवाद् भेदेऽपि न दोषः। इति व्याख्याभावयुक्तोऽन्वयः ॥ १६ ॥

१७। देशीयभाषाप्रसिद्धगुलाबाख्यपुष्प केचित् प्राचीनविद्वांस: स्थलपद्म मेनिरे केचन तन्मत साम्प्रतमप्याद्रियन्ते, तदनुसारेणेद पद्यम्। तत्र ( तस्मिन् उद्याने ) पद्मच्छदीपद्मविलोचनानाम् ( पद्मच्छदेव पञ्च विलोचनानि यासा, लोचनाकृतीनि पञ्चपत्राणि यासामेकैकाग्रशाखाया स्थितानीति भाव: ) सकण्टकाना ( कण्टकयुक्तानाम् ) प्रफुल्लपुष्पोज्ज्वलरागभाजा (प्रफुल्लानि च तानि पुष्पाणि चेति तेषाम् उज्ज्वलरागम् उज्ज्वलवर्णं भजन्ति प्राप्नुवन्ति उज्ज्वलवर्णं प्रफुल्लपुष्पाणामित्यर्थः ) ( अतएव ) भ्रमराकुलानाम् ( पुष्परसलुब्धभ्रमरैर्व्याप्तानाम् ) स्थलपद्मिनीनाम् ( गुलाबाख्यतरूणाम् ) अतिशोभा ( अत्यन्त शोभा ) स्थलपद्मिनीभिरत्यन्त शुशुभे इत्यर्थ:। इति व्याख्यादियुक्तोऽन्वयः ॥ १७ ॥

१८। अपरे (अन्ये) चम्पककेशराद्या: ( चम्पकबकुलप्रभृतय ) समाधवीका. माधवीलतया सह वर्त्तमानाः चूतास्तरवश्च सौन्दर्यसस्पर्द्धितया ( शारदकुसुमतरुलताना सौन्दर्येण सस्पर्द्धितया सह स्पर्द्धावत्तया ) इव लसद्वसन्तोचितपुष्पभूषाः ( वसन्तोचितानि वसन्तकालयोग्यानि पुष्पाणि वसन्तोचितपुष्पाणि तैर्भूषा मण्डन लसन्ती शोभमाना वसन्तोचितपुष्पभूषा वा येषा ते लसद्-वसन्तोचितपुष्पभूषाः सन्तः ) तत्र ( तस्मिन् उद्याने ) रेजुः, शुशुभिरे। वासन्तिकपुष्पवृक्षा अपि तस्मिन् उद्याने विकासतपुष्पा अभूवन्निति भाव:। इति व्याख्याभावयुक्तोऽन्वय ॥ १८ ॥

१९। जवादिपुष्पाणां (जवा जपा इति शब्दौ तुल्यार्थौ) इतरासा ( अन्यासा ) पुष्पावलीना ( कालिकाकालिककुसुमराजीनाम् ) च रुचा

( माला ) चित्रीकृते ( नानावर्णीकृते ) तस्मिन् ( उद्याने ) दृष्टि. ( चक्षुः ) अलीयतेव ( लीनेवाभूत्, विषयान्तरग्रहणासामर्थ्येन तत्रैव लयप्राप्तवाभूत् )। इति व्याख्याभावयुक्तोऽन्वयः ॥ १६ ॥

२०–२१। समन्तात् ( चतुर्दिक्षु ) नयनाभिरामम् ( लोचनानन्दजनन ) रूप ( लतापल्लवपुष्पादिवर्णवैचित्र्य ) मधुस्रवेषु ( मधुक्षरणवत्सु ) प्रसूनेषु ( पुष्पेषु ) रस ( मधुरो रस ) जातीप्रमुखेषु ( जातीयूथ्यशोकाम्बिकादिषु ) पुष्पेषु गन्ध ( सौरभम् ) लतापुष्पनवच्छदेषु ( वल्लीकुसुमकिसलयेषु ) स्पर्श (कोमलत्वम्) भृङ्गविहङ्गसङ्घे ( भ्रमरकुलकलकण्ठविहङ्गसमूहे ) शब्दः –एभि ( विशेष्यभूत प्रथमान्तपदपञ्चकेन निर्दिश्यमाने ) पञ्चभिरेव गुणे ( करणभूतै ) भावान्तरास्तित्वम् ( भावान्तरस्य वस्त्वन्तरस्य अस्तित्व सत्ताम् ) अपह्नुवानम् ( विलुम्पत् ) लीलावनम् (लीलाया विलासस्य वनं कानन तदुद्यानमित्यर्थ ) न्यायनयम् ( न्यायशास्त्रस्य द्रव्यगुणकर्मसामान्य-विशेषसमवायाभावरूपसप्तपदार्थमित प्रमाणप्रमेयादिषोडशपदार्थ-मत वा ) जिगाय निराचकार। एतदुद्यानस्थलतापुष्पादिरूपादि-गुणपञ्चकेन हृतचित्ता लोका न्यायशास्त्रप्रसिद्धम् वस्त्वन्तर न बुबुधिरे, एतेन रूपादीनामत्युत्कर्षो वर्णित, पद्यद्वयेन वाक्यसमाप्त्या युग्मकमेतत्। अस्याय व्याख्यादिगर्भोऽन्वयः ॥ २०–२१ ॥

२२। कल्ये ( स्वप्नदृष्टप्रात काले ) वृत्ता ( गोलाकृति ) मध्यस्फुरत्पुष्पितजातिकुञ्जा ( मध्ये वृत्तस्थानस्य मध्यस्थले स्फुरन् शोभमान पुष्पितजाति कुञ्जो यस्या, पुष्पिता जात्य जातीलता यत्र, स पुष्पितजाति एतेन कुञ्जस्य पुष्पितजातीमयत्व वर्णितम् ) हिमबिन्दु-

मालावतसदूर्व्वामयगर्भभूमि (हिमबिन्दुमाला तुषारकणजालमवतसा. शिरोभूषणानि यस्या ता दूर्व्वा तन्मयी तत्प्रचुरा गर्भभूमि उद्यानमध्यभूमि ) मुक्तामयी ( मुक्ताखचिता ) मारकती (मरकतमणिनिर्मिता) इव ( उत्प्रेक्षा ) रराज ( शुशुभे )। तदुद्यानमध्यस्थले गोलाकारा हिमबिन्दुशार्पदूर्वामयी फुल्लजातीकुञ्जशोभिता भूमि प्रातर्मया दृष्टेति स्वप्नस्यातीतत्वात् अतीतकालप्रयोग । शरत्कालप्रकृतेरतीतानागत वर्त्तमानसाधारणत्वाद् एव प्रकृत्या शरदोपगूढमिति श्लोकात्पूर्वक्रियासु वर्त्तमानप्रयोग , शरदि पुष्पन्ति सप्तच्छदा इति वदिति बोध्यम् । इति व्याख्यादिगर्भोऽन्वय ॥ २२ ॥

२३। तत्र (तस्मिन्) कुञ्जे प्रवालपुष्पाभरणाचिताङ्गी ( प्रवाला किसलयानि पुष्पाणि च तान्येवाभरणानि तेषामाभरणानि वा तै आचिताङ्गी परिवृतावयवा ) पुष्पासना ( पुष्पाण्येव आसन यस्या सा पुष्पमयासनासीना इत्यर्थ ) हेमसरोजरम्या ( स्वर्णकमल वद् रमणीया ) गृहीतमूर्त्ति ( धृतशरीरा ) लावण्यलीला ( लावण्यस्य लीला शोभा विलासो वा ) इव काचन ( कापि नारी ) विराजिता विराजते स्म ॥ २३ ॥

२४। अनवद्यरूपाम् ( अनवद्यम् अनिन्दनीय रूप यस्या सा ता दोषलेशशून्यसौन्दर्याम् , तेजोविशेषेण (प्रभावविशेषेण ज्योतिर्विशेषेण वा उदित प्रकाशित ) पूज्यभावो यस्या ( विजातीयतेजसैव यस्या पूजनीयत्व ज्ञापित ताम् ) ता ( कुञ्जमध्यविराजिताम् ) नारीं वीक्ष्य तत्पद ( तस्याश्चरणम् ) स्वय प्रणामप्रवणेन ( स्वयम् आत्मना प्रणामोन्मुखेन, यत्न विना स्वयमेव नम्रेण ) मूर्ध्ना (शिरसा)

तु' (परिचरितुम्) अभ्यगच्छम्, (अधि आधिक्येन, द्रुत-
: अगच्छम् अगमम्) ॥ २४ ॥'

२५। मम तथा (तादृश्या) विधाया (प्रकारे, तदीयचरण-
गार्थं द्रुतगमनावस्थायाम्) सा देवी तु, सद्यः (तत्क्षणात्)
। (गलद्घर्मा) विवर्णा (अपगतहेमवर्णा) विमुखी, विम्लान-
भरणासना (विम्लानानि म्लानि प्राप्तानि पुष्पाभरणासनानि यस्याः
कराला (भीषणा) तमसि (अन्धकारे) मग्नेव बभूव,
शङ्कितेवासीत् ॥ २५ ॥

२६। निकुञ्जजाती (निकुञ्जस्य जाती पूर्व्ववर्णिता कुञ्जसम्बन्धिनी
लता) सद्यः (तत्क्षणात्, यदैव सा देवी विमुखी जाता तदैव)
त्तमूला (छिन्नशिफा) इव, रसोज्झिता इव (रसवर्जिता इव,
या अन्तःशिराभिः प्रवाहिता या रसधारा सर्व्वाङ्गान्याप्याययति तस्या
पि प्रकारेण रुद्धाया रसोज्झितत्वं भवति) प्रोन्मूलिता (उत्पाटिता)
, उन्मथिता (विदलिता) इव, निष्पीडिता (निष्पेषिता) इव,
नेनशिखाहता (दग्धा) इव, सहसा (अकस्मात्) शुशोष (शुष्का
ता)। प्रकृते छिन्नमूलत्वाद्यभावेऽपि, तत्तद्दशाया लताया यादृशी
ष्कता सम्भाव्यते, अत्र तथैव शुष्कतेति सम्भावनामात्रत्वादुत्प्रेक्षा-
ङ्कारः ॥ २६ ॥

२७। विकाशभाञ्जि (प्रस्फुटितानि विकाशं भजन्त इति ण्विः
भजो ण्विः' इति पाणिनिसूत्रम्) कुञ्जप्रसूनानि (कुञ्जसम्बन्धीनि
पुष्पाणि) मलिनीभवन्ति (म्लानीभूतेत्यर्थः, अमलिनानि मलिनानि
भवन्तीति 'मलिनीभवत्' शब्दस्य क्लीवे प्रथमाया बहुवचनम्) पुण्य-

शेषे ( शुभादृष्टक्षये ) नि.शेषभुक्तोचितदेवलोका. ( नि शेष सम्पूर्ण यथास्यात्तथा भुक्ता उचिताः स्वस्वकर्मयोग्या. देवलोका स्वर्गादयः ये तथाविधा ) ताराविशेषा ( नक्षत्राकारा जीवविशेषा , 'क्षीणे पुण्ये मर्त्यलोक विशन्ति' इति स्मरणात् ) इव, उर्व्यां ( भूमितले ) निपेतुः चस्खलु ) लताया शुष्यमाणाया कुसुमान्यपि म्लानीभूय भूमौ चस्खलु , पतता शुभ्रकुसुमाना स्खलनक्षत्रपुञ्जसादृश्यम् एतेन वर्णितम् ॥ २७ ॥

२८। इदानी कोरकाना दशा वर्ण्यते—प्रेतीभवच्छ्वेतकपोतपोत-मूर्द्धा ( प्रेतीभवता सद्यो मृताना श्वेतकपोतपोताना शुभ्रपारावतशावकाना मूर्द्धा मुण्डम् ) इव, विच्छायताधिक्रियमाणवर्णा ( विच्छायतया कान्तिहीनतया म्लानिम्नेत्यर्थ अधिक्रियमाण आक्रम्यमाण. गृह्यमाण इति भाव वर्ण स्वाभाविक वर्ण श्वेतरूप यस्या तादृशी ) सा सा तदीया कलिका ( जातीलताया कोरकसमूह ) सद्य ( तत्क्षणात् ) वृन्ताग्रभूमौ (वृन्तमूलभाग) लुठति स्म (अधोमुखभावेन ललम्ब इत्यर्थ )। यथा हि सद्यो मृताना श्वेतकपोतशावकाना मुण्डानि गललग्नान्यपि अधोलम्बितानि भवन्ति, तथैव म्लाना जातीकोरका वृन्तभागेषु स्थिता अपि अधोमुखा विलम्बमानाश्च बभूवु ॥ २८ ॥

२९। सा ( प्रागुक्ता ) दूर्वाघनश्यामलवृत्तभूमि. ( दूर्वाभिः घना निबिडा, श्यामला च, दूर्वाघनश्यामलेति तृतीया तत्कृतार्थेन गुणवचनेनेति तृतीया तत्पुरुषसमास ) तादृशी वृत्तभूमि· ( गोलाकारभूखण्ड , यथा पूर्व वर्णितः ) महाविषाणा ( उत्कटविषयुतानाम् ) पन्नगाना ( सर्पाणाम् ) विषश्वाससमीरणेन ( विषमयनिश्वासवायुना ) दग्धा ( ज्वलिता ) इव सद्य ऊषरता ( क्षारभूमिता ) प्रपेदे प्राप्ता ।

श्रूयते हि पूर्वमुर्वरा अपि भूमयः कदाचित् महासर्पाधिकृताः विषज्वलिता मरुतुल्या भवन्तीति ॥२६॥

३० । ३१ । निस्सौरभा ( सौगन्ध्यरहिता ) निर्मकरन्दलेशा ( निर्नास्ति मकरन्दलेशः यस्याम् सा 'मकरन्दः पुष्परसः' इत्यमरः, मधुबिन्दुशून्या इत्यर्थ. ) गतप्रसूना ( विलुप्तपुष्पा ) कलिकाविहीना ( कोरकरहिता ) अपेतभृङ्गा ( भ्रमरवर्जिता ) कलनादशून्या ( भृङ्गविहङ्गकृतमधुरध्वनिविरहिता ) निष्पल्लवा ( किशलयहीना ) शुष्कपलाशवृन्दा ( शुष्कपत्रसमुदायुक्ता ) ( अतएव ) विलोचनक्लेशकरी ( एव दशान्तर प्राप्ता भूमिः दृष्टमात्रस्य अश्रुद्गमहेतुत्वात् नयनदुःखप्रदा ) समन्तात् ( चतुर्दिक्षु ) निःशेषलुप्ताखिलपूर्वभावा ( निःशेष निरवशेष किञ्चिदपि न परित्यज्येत्यर्थः लुप्तः तिरोहितः अखिलः समस्तः पूर्वभावः सौभाग्यदशा यस्याः सा ) सा ( पूर्ववर्णिता उद्यानभूः ) ब्रह्मशापोपहता ( ब्रह्मणः ब्राह्मणस्य शापेन ज्वलिता ) इव सद्यः ( कालविलम्बन विना ) एव ( ईदृक्प्रकारा ) उपाजनिष्ट ( जाता ) ॥ ३०–३१ ॥

३२ । कङ्कालशेषान् ( अस्थिमात्रावशिष्टान् ) बाहुदण्डान् इव शुष्कान् विटपान् ( शाखाः ) प्रसार्य ( विस्तार्य स्थितैरिति शेषः ) प्रेतैः ( भूतयोनिविशेषैः पिशाचैर्वा ) इव अनेकैः ( बहुभिः ) क्षौणिरुहैः ( वृक्षैः क्षौणी रोहन्तीति रुहधातोः क प्रत्यय. इगुपधत्वात्, ) परीता ( व्याप्ता ) सा ( उद्यानभूमिः ) घोरपरेतभूमिः ( भीषणश्मशानतुल्या ) बभूव ( जाता ) ॥ ३२ ॥

३३। विशेषतः (एतस्माद् विलक्षणहेतुतश्च) तेषाम् (वृक्षाणाम्) अनेकेषु लम्बमाना शुष्कलतान्त्रमाला (स्कन्धेषु शाखासु च मालाकारेण वर्त्तमाना शुष्कलता एव अन्त्रमाला नाडीसमूहः ) तरसा ( बलात् ज्ञानान्तर निरस्येत्यर्थः) प्रेतत्वबुद्धिं (पिशाचत्वज्ञान) दधाना (जनयन्ती) तत् आस्पदं ( स्थानं ) घोरतरीचकार ( अधिकतर भयप्रदं चकार)। पिशाचा अन्त्रमाला परिदधति, इति हि किंवदन्ती ॥ ३३ ॥

३४। तरूणां ( तदुद्यानस्थवृक्षाणां ) शुष्कतरा ( शुष्कशाखान्तरापेक्षया शुष्का ) शाखावली सत्र. स्वनद्वायसवासतेयी ( स्वनन्तो रव कुर्वाणाः ये वायसाः काकाः तेषां वासतेयी निवासस्थान यौगिकार्थविवक्षणात् ) वृक्षाश्च शतपत्रनिचञ्चुखनित्रक्षतिरिक्तगर्भाः ( शतपत्रः तन्नामा यः पत्री पक्षी शुष्कवृक्षगात्रविदारकः पक्षिविशेषः तस्य चञ्चूः एव खनित्र खोदनास्त्रं तेन क्षतिः छेदन तया रिक्ताः शून्यीकृताः, गर्भाः अभ्यन्तरभागा येषां एवम्भूताः ) जाताः । उपर्युक्तेन श्लोक त्रयेण महदमङ्गल सूचितम् ॥ ३४ ॥

३५। शरत्सारसशस्यहास्यम् ( शरदः शरदृतोः सारस सरोज शस्य धान्यादिकञ्च तत्तद्रूप हास्य प्रसादचिह्नं ) लुप्त ( विलीन ) शीतनिशीथदौस्थ्य ( शीतस्य शीतऋतोः निशीथस्य रात्रिमध्य भागस्य दौस्थ्य दौर्गत्य ) समागत ( प्राप्तम् ) शीते वृक्षलतादेर्विशीर्णता, पद्मलोप., शस्याना छेदश्च भवन्त्येव, तत्र दिवाभागे सूर्यकरसत्त्वाद् जगत् कथमपि किञ्चित् सुखमनुभवति, रात्रौ तस्याप्यभावः, निशीथे तु शैत्यस्याधिक्यात् जीवाना सर्वथा दुर्दशा भवति , शारदीयसर्वसमृद्धिसम्भृतस्योद्यानस्य तादृगवस्थान्तर शीतरात्रिसाधारणदौर्गत्यरूपमिति भेदेऽप्य-

भेदाध्यवसायादतिशयोक्तिः। दर्पविकाशलीला (आनन्दज्ञापकव्यापार-समूहः) लीना (विलुप्ता) विश्व (जगत्) विषाददास्य (दुःखै-कवश्यत्व) गतमेव ॥ ३५ ॥

३६। तमालनीलः (तमालवत् नीलः तापिञ्छतरुवत् कृष्ण-वर्णः) तमसां समूहः (अन्धकारराशि) शीर्णद्युतिपुष्पवन्तौ (निष्प्रभौ रविशशिनौ, 'पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः) अग्रसिष्ट (ग्रस्तवान्)। अपिच (किंच) द्यावापृथिव्योः (स्वर्गमर्त्ययोः) अन्तराल (मध्यगतम् अवकाश) विलुप्तदृक्शक्तिक (प्रतिहतदृष्टि सामर्थ्यं यथा स्यात् तथा) अध्यकार्षीत् (अधिकृतवान्) ॥ ३६ ॥

३७। सर्वगतः प्रसादः (भुवः प्रसादः सलिलप्रसाद इत्यादिना पूर्वमुक्तं) अस्तगतः (विलुप्तः) कश्चन भीमभावः (अव्यक्तरूप भयङ्करत्वं) समासदत् (आगत) विश्वं (सकल जगत्) विपर्य-स्तदश (विपरीतावस्थ) विलोक्य (दृष्ट्वा, स्वप्ने मानसव्यापारविशेष एव दर्शन) मम (दक्षकृतस्वप्नवर्णनपक्षे ममेति दक्षस्य देवमातृकृत-वर्णने ममेति अदितेः) मनः अति भारखिन्न (गुरुत्वाधिक्यरोधात् खेदयुक्तम्) (आसीत्) अभूत् ॥ ३७ ॥

३८। मम आधारभूमिः (आधारभूमिः आश्रयस्थान, दक्षपक्षे कनखलपुरम्, अदितिपक्षे कश्यपाश्रमः) घूर्णमाना (चक्रवत् परिवर्त्तमाना) मया (दक्षेण, पक्षान्तरे अदित्या) सम (सह) निम्नमुखी (रसातलगामिनी) बभूव। यथा वेगवशीकृतेन (जलवे-गाधीनेन) तृणादिना सम आवर्त्तजलप्रवाह (भ्रमियुक्तजलस्रोतः) निम्नमुखो भवति तद्वत् ॥ ३८ ॥

३६। शरीरे ( देहे ) स्वेदः ( घर्मजल ) वदने ( मुखे ) विशोषः ( शुष्कता ) भिया ( भयेन ) हृदि ( हृत्पिण्डे ) प्रकम्पः (द्रुतस्पन्दन ) निरर्थाः ( निष्फलाः ) उद्धारचेष्टाः ( अधोगति निरस्य ऊर्द्ध्वगतिलाभाय स्वप्नकालीनमानसव्यापाराः) च मम ( दक्षस्य पक्षान्तरे अदितेः ) आशु ( क्षणात् ) भवत् कृपान्तात् ( दक्षपक्षे ब्रह्माणमुद्दिश्य, पक्षान्तरे कश्यपमुद्दिश्य भवत्पदप्रयोगः, भवतः कृपा अन्ते अवसाने यस्य सः तस्मात्, भवत्कृपालाभार्थ गमनावधेः ) स्वप्नात् प्रबोध ( जागरण ) विदधुः।

दुःस्वप्नजनितमानसविकारफल वास्तवदेहादौ स्वेदशोषादयः, तत एव स्वप्नभङ्गः, ब्रह्मणः ( पक्षान्तरे कश्यपस्य ) कृपा लाभाय गम्यते इत्यन्तभागः स्वप्नस्येति भावः ॥ ३६ ॥

४०। हर्यश्वसूनुः ( दक्षः, दक्षस्य हर्यश्वा नाम पुत्रा आसन् इति विष्णुपुराणम् , पक्षान्तरे हर्यश्वः हरिहयः इन्द्रः सूनुर्यस्याः सा अदितिः ) भीतिपरीतचेताः ( भयाक्रान्तमनाः ) इति ( एवम्प्रकारम् ) इष्टविनिपातफल ( इष्टस्य यज्ञस्य विनिपातः नाशः फल परिणामो यस्य त, पक्षान्तरे इष्टस्य प्रियवस्तुन. स्वर्गस्य विनिपातः भ्रशः फल यस्य त ) य ( अष्टात्रिंशता श्लोकैर्वर्णितपूर्व ) स्वप्न प्रजापति (ब्रह्माण , पक्षान्तरे कश्यप) पूर्व बभाषे ( अकथयत् ) तस्य ( स्वप्नस्य ) अलङ्घ्यविधिप्रदिष्टा ( अनतिक्रमणीयदैवप्रेरिता, अशुभा ( अमङ्गलमयी ) परिणतिः ( फल ) क्रमशः ( शनैः ) प्रवृत्ता ( आरब्धा ) ॥४०॥ इति व्याख्यानगर्भोऽन्वयः।

इति चतुर्थसर्गटीका।

## पञ्चमः सर्गः ।

१ । ( शिवलीलापक्षे ) यदा द्विपद् बल भीमवलम् आगतम्, तत्पूर्वत एव सर्वत अशुभस्य सूचक. असौ विपर्ययो बभूव, येन सः नायक ना विचुक्षुभ । ( पक्षान्तरे ) यदा भीमवल द्विपद्वलम् आगतम्, तत्पूर्वत एव सवत अशुभसूचक असौ विपर्यय बभूव, येन स नाकनायक विचुक्षुभ इत्यन्वय ।

( शिव० पक्षे ) वलमिति बलमस्यास्तीति अर्श आदित्वादचि कृते सिद्धम् । तच्च भीमबलमित्यस्य विशेषणम् । नाकनायक इति ना कनायक इत्येव पदच्छेद । क एव नायक दक्ष एव नेता ( यज्ञकर्त्ता ) ना विचुक्षुभे, ना इति नञर्थेऽव्यय, न स्वकार्याद् विचचालेत्यर्थ । पक्षद्वयविशदव्याख्यान मूलश्लोकपादटीकातो द्रष्टव्यम् ॥ १ ॥

२ । ( शिवलीलापक्षे ) सभारते पुण्यलक्षणे यत्र पुर सुरासुरक्षणक्षण अवैक्ष्यत, न रोगशोकौ, न जरापराभव न वा दैन्यविडम्बितो जन अभवत् । ( पक्षान्तरे ) यत्र भारते पुण्यलक्षणे पुरे वा स सुरासुरक्षणक्षण ऐक्ष्यत, न रोगशोकावित्यादि पूर्ववत् । इत्यन्वय ।

( शिव० पक्षे ) पवित्र दक्षपुर ( 'कनखलनामक प्रसिद्ध स्थान ) पूर्वम् धर्ममीमासार्थं परिषदधिवशनयुक्तमासीत् तत्राधिवेशने सुरासुराणा ( दक्षदो हनाणा मिलितानाम् ) उत्सवावसरो दृष्ट, कस्यापि रोगशोकजराधीनत्व दीनत्वविकृतो जनो वा न दृष्ट । इदानीं तु तद्विपर्यय. सूचित इति भावाथ । ( पक्षान्तरे ) पूर्व भारते, पुण्यलक्षणे पुरे वा ( पुण्य लक्षण यस्य तत् तस्मिन् सुकृतैक

गम्ये स्वर्गे च ) सुरासुरक्षणक्षणः देवप्राणरक्षणोत्सवः यज्ञ इत्यर्थः ऐक्ष्यत दृष्टः, यज्ञभुजा देवानां यज्ञ एव प्राणधारक इति यज्ञः सुराणा परमप्रमोदहेतुत्वात् उत्सवस्वरूपः, यज्ञस्थानञ्च केवल भारतभूमिरिति भारते देवाना सम्बन्धः प्रदर्शितः स्वर्गे च सुरासुः अक्षणक्षणः ऐक्ष्यत, अक्षणक्षणः न क्षणवृत्तिः उत्सवः परन्तु सार्वकालिक उत्सवो दृष्टः, तस्य च सुरा एव असवः प्राणभूताः, स्वर्गस्य सुरामयत्वात् देवानाञ्च तत्र मुख्याधिकारात् तथोक्तिः सङ्गच्छते; इदानीन्तु तादृश उत्सवो न दृष्ट इति सूचितम् । अर्थान्तरं विशदव्याख्यानञ्च मूलश्लोकपादटीकातो ज्ञेयम् ॥ २ ॥

३ । ( शिवलीलापक्षे ) लोकाः सदा सुधाधामसुधामहासिनीं नयनाशितम्भवा सतीं सुधाशुधामद्युतिसन्तति अथवा सुधाशुधामद्युतिसन्ततिं सतीं विलोक्य भवस्य न अधीयुः, ( भवस्य ) अधीयु एव वा । ( पक्षान्तरे ) लोकाः सुधाधामसुधामहासिनीं नयनाशितम्भवा सता सुधाशुधामद्युतिसन्तति विलोक्येत्यादिरन्नाऽप्यन्वयः पूर्वं समानः । व्याख्यानञ्च मूलपादटीकातो ज्ञेयम् । सरलार्थस्तु—दक्षपुरे लोकाः चन्द्रतेजोऽधिकतेजःशालिनीं नयनतृप्तिदा वर्त्तमाना सौधावलीकान्तिं दृष्ट्वा अथवा ज्योत्स्नासदृशहास्यशालिनीं नेत्रतृप्तिकरीं सुधाशुधाम्नश्चन्द्रमौलेः शिवस्य द्युतिसन्तति अधिकद्युतिकरीं कान्तिराजिस्वरूपा वा सतीं दाक्षायणीं दृष्ट्वा ससारं न स्मृतवन्तः अथवा शिवमेव स्मृतवन्तः । (पक्षान्तरे) स्वर्गवासिनो लोकाः कर्पूरकान्तिजयिनीं नयनतर्पणीं स्वर्गे विद्यमाना शुक्रादीना शुभ्रा कान्तिसन्ततिं विलोक्य सौन्दर्यातिशयमुग्धाः संसारं विस्मृतवन्तः सादृश्यदर्शनात् शिवं स्मृतवन्तो वा ॥ ३ ॥

४। (पक्षयोः) प्रमोदलीलालहरीविलासिनी परितो विसारिणी सुखस्रवन्ती अवगाहेऽपि निराकुलान्तरा सदा दुःखातपतापहारिणी बभूव, इत्यन्वयः। व्याख्यानञ्च मूलश्लोकस्याधस्ताद् द्रष्टव्यम्। पूर्वं दक्षपुरे ( पक्षान्तरे भारते वा ) सुखकरी नदी सर्व्वतः प्रसृता आनन्दमयक्रीडातुल्यतरङ्गमालारचनाशोभावती गभीरत्वादालोडनेऽप्यविकृता सदा दुःखतापशान्तिकरी स्थिता। स्वर्गपक्षे च तरङ्गमालासदृशानन्दचटुलवयेष्टखेलाविस्तारकारिणी सर्व्वतो विराजमाना नदीस्रोतोधारातुल्यसुखपरम्परा भोगेनापि स्थिरस्वरूपा स्वभावतो रौद्रतापोपमितदुःखहरणपरा स्थितेति सरलार्थः ॥ ४ ॥

५। ( पक्षयोः ) तस्मिन् कियन्ति दिवसानि यावत् अनारतमनिमित्तदर्शनं बभूव, तेन उपायती विपद् विनिश्चिता, उन्मुखश्रिया तडिता प्रवृष्टिः यथा ( विनिश्चिता भवति ) इत्यन्वयः।

अनिमित्तदर्शनं बभूव = दुर्निमित्तलक्षणं प्रकटितम्। उपायती आसन्ना, विनिश्चिता = अनुमिता। ऊर्द्ध्वमुखविद्युत्स्फुरणेन प्रकृष्टा वृष्टिर्भवतीति ज्यौतिषिकाः। पक्षयोः समानोऽर्थः ॥ ५ ॥

६। तडिद्विलासादिकदीपभास्वरे यत्र नक्तन्दिवभेदवेदनं न ( आसीत् ) तत्रैव क्षणे क्षणे अनिश्चितागम महातमोराशिः पदं चकार। पक्षयोः समानोऽन्वयः।

ताडितालोकादिप्रदीपसमुज्ज्वले दक्षपुरे ( पक्षान्तरे भारते च ) पूर्व्वं दिनरात्र्योर्भेदज्ञानमेव नासीत्, सम्प्रति तु तत्र प्रतिक्षणं पुञ्जीभूतं तिमिरं क्षणेक्षणे कुतोऽपि प्रादुर्भवति। इदमत्रावधेयम्—दक्षपुरं कनखलेति प्रसिद्धं भारतस्यैकांशः, तत्र दुर्निमित्तदर्शनमभूदिति पूर्व्व-

श्लोकोक्तिपरामर्शात् कानि च तानि दुर्निमित्तानीति क्रमशः कथ्यन्ते चतुर्दशभिः श्लोकैः। अस्मिन् श्लोके आकस्मिकस्तमःसमागम उक्तः। तदनन्तरं तत्पुरे देवालयपतनं, जनेषु सुरापानासक्तिः, परश्रीकातरता, परदुःखदर्शनसुखिता, पयोमुखविषकुम्भस्वरूपता, सद्भ्योऽसूया प्रशंसा चासताम्, स्वजनाभ्युदयविद्वेषः, निरन्नता सत्वहीनता-भीतिप्रमादपरता आप्तानाप्तभेदज्ञानराहित्यम्, अकारणरोदनध्वनिश्रवणं दिग्दाहः, कबन्धनर्त्तनं, छिन्नमुण्डानामट्टहासाः, अशुभशकुन्तपतनं, कुहेलिकाच्छन्नता, गृहेषु कलहविषादाप्रतियः, धनविद्यायशोहीनता चेति बाह्यान्यान्तराणि च दुर्निमित्तानि कनकजलपतेर्द्वीपस्य सर्व्वनाशाय दृष्टानीति भावः। पक्षान्तरे, यज्ञभूमिर्भारतक्षेत्रं किल देवानामसुरगृहम्। समग्र भारतक्षेत्रे तथाविधानि दुर्निमित्तानि प्रादुरासन् इति देवानामेव सर्व्वनाशसूचकानि तानीति समुदितार्थः। एषोऽर्थः विंशश्लोके स्फुटीभूतः ॥ ६ ॥

७। सुरालयाः दृष्टनिमित्तम् अन्तरा क्रमाद् विलोपलक्षणं अभजन्त। एतत्तु विचित्रम्, (यत्) तदैव तत्र सुरालयोच्चयः उपचितो व्यलोक्यत।

वात्या-भूमिकम्पादिदृष्टकारणं विनैव सुरालयाः (देवप्रासादाः) पतितुमारब्धः। सुरालयोच्चयः सुरायाः आलयाः (मद्योत्पत्तिविक्रयस्थानानि तत्समूहः) वर्द्धितो बभूव, इति सरलार्थः। व्याख्यानं च मूलश्लोकपादटीकातो विस्तरेण ज्ञेयम् ॥ ७ ॥

८। यस्मिन् पुरा परश्रिया हृष्टतमाः दयामयान्तःकरणाः शुचिस्मितोत्फुल्लविलोचनाम्बुजाः सुमनः प्रजा विभान्ति स्म। इत्यन्वयः पद्ययोः समानः। दक्षपुरे भारते च पूर्व्वं परश्रीदर्शनेन सानन्दाः दयार्द्र-

हृदयाः । अविरत शुभ्रहास्योज्ज्वलनयना. मनस्विन्यः प्रजाः आसन् ॥ ८ ॥

९ । तदाश्रिताः ताः तदा परं परद्वेषविसूचितचक्षुषः स्वेतरसम्पदागमे सुखोज्झिताः परोपतापप्रमदाः असदाशयाः हि सदा आसन् । इत्यन्वय. पद्यद्वये समानः ।

दत्तपुराश्रताः ( पक्षान्तरे भारताश्रिता. ) प्रजाः तदा परछिद्रपिशुनहृदयः, पराभ्युदये दुःखिनः, परदुःखे च सुखिनः अतएव दुष्टमतयो जाताः । विनाशकाले विपरीतबुद्धिरिति भावः ॥ ९ ॥

१० । तदा अस्य सन्निधौ परं जुगुप्समानाः, सरित्वमुग्ध तम् अपि इतरेषु ( जुगुप्समानाः ) पयश्छन्नविषान्तरा घटा इव शत्रव एव बन्धवः अभवन् । इत्यन्वयः । तस्मिन् समये तत्र बन्धुसमीपे अपर निन्दन्तः बन्धुश्च तमपरसमीप निन्दन्तः इत्येव प्रकारेण पयोमुखा विषकुम्भा इव हृदयेन शत्रवः एव बहिर्बन्धुरूपेण स्थिताः ॥१०॥

११ । तदा अन्तरं प्राप्य ( अवकाश लब्ध्वा ) परोक्षवर्त्तिना (दृष्टिबहिर्भूताना दूरेऽवास्थतानामित्यर्थ.) सताम् । (साधूनाम्) अलीकम् ( मिथ्या ) अभिशस्तिम ( अपवाद ) अङ्कयन् ( रचयन् ) असद्गणः ( असाधुजनसमूहः ) तथाविधैः ( तादृशचरित्रविशिष्टैः ) परैः ( अन्यैः ) प्रशस्यमानः ( स्तूयमानः ) सद्गणतः ( साधुसमाजात् ) अत्यरिच्यत च ( अधिकमान्यतया गणितो बभूव ) इति व्याख्यानगर्भोऽन्वयः पद्ययो. समानः ॥ ११ ॥

१२ । तत्र असस्तुतानाम् ( अपरिचितानाम् ) अपि सम्पदः ( समृद्धयः ) वरं (कामं सन्तु इति शेषः) सस्तुतानाम् (परिचितानाम्)

न, मित्रमानिना ( आत्मनो बन्धून् मन्यमानाना न च ( सन्तु इति शेषः ) इति ( एवं ) चिन्ताकुलमानसा जनाः क्रमेण अधिकताम् उपगताः ( वृद्धिं प्राप्ताः ) स्म ॥ १२ ॥

१३। तदा निरन्धसः ( निरन्नाः ) सत्त्वमहत्त्ववर्जिताः सत्त्व बलं महत्त्वम् औदार्य्यं ताभ्या वर्जिताः विहीनाः ) भयप्रमादाधिकताधरीकृताः ( भयप्रमादयोः त्रासस्य अनवधानस्य च अधिकतया वृद्धया अधरीकृताः नीचता प्रापिताः ) अनाप्तविश्वस्तभिदाविदः ( आप्तानाप्तभेदज्ञानरहिताः ) प्रजाः ( दक्षस्य पौराः पक्षान्तरे जनाः ) बत ( खेदे ) भवक्लेशकृतः ( स्वजन्मनो दुःखकराः अथवा शिवद्वेषिणः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः, इति क्लेशपदेन द्वेषस्य ग्रहणं, पक्षान्तरे संसारकष्टदायिन्यः ) अभवन् ॥ १३ ॥

१४। क्षणे क्षणे दश दिशः अकारणक्रन्दननादसकुलाः ( अकारणैः आकस्मिकैः क्रन्दननादैः रोदनशब्दैः सकुलाः व्याप्ताः ) शुश्रुविरे ( श्रुता जनैरिति शेषः क्रोष्टून् समशृणोत् क्रूरानितिवत् । ) सुमेरुशृङ्गाधिकपिङ्गभानुभिः ( सुमेरोः स्वर्णमयकूटापेक्षया अधिकपिङ्गशिखैः ) निरिन्धनैः ( काष्ठादिकं विना जातैः ) अनलैः ( वह्निभिः ) आनशिरे ( व्याप्ताः ) च ॥ १४ ॥

१५। करालम् (भयङ्करम्) इत्वरम् ( गतिशीलम्) आलब्धुम् अयोग्यं ( स्प्रष्टुमनर्हम् अस्पृश्यम् ) कबन्धवृन्दम् ( मुण्डहीनशवसमूहः ) अन्तरान्तरा ( मध्ये मध्ये ) ददृशे ( दृष्ट जनैरिति शेषः ) शरीरबन्धोज्झितमुण्डकुण्डगप्रचण्डहासाः ( देहयोगरहितान् मुण्ड-

रुद्, शमुखरद्धादुत्थिताः अट्टहासाः ) पुरः ( जनानां सम्मुखे ) पुस्फुरुः ( प्रकटिताः ) अपि ( च ) ॥ १५ ॥

१६। पत्त्रद्वितयीं वितत्य ( पत्त्रद्वयं विस्तार्य नरशिखित्रयीत्यादिवद् द्वितयीमित्यत्र स्त्रीप्रत्ययो मल्लिनाथोद्धृतेन 'टिड्ढाण' (पा० ४।१।१५) इति सूत्रेण सम्पादनीयः अधोमुखः कृतमण्डलभ्रमिः ( मण्डलाकारेण उड्डीयमानः ) क्रमावतीर्णः ( शनैः निम्नागतः ) मूर्तः उपप्लवः ( साकारः उत्पातः ) इव अतिभापणः पत्री ( गृध्रपक्षी ) सौधमूर्द्धनि ( प्रासादोपरि ) पपात पतितवान् किल ॥ १६ ॥

१७। तदा अम्बरस्थली ( आकाशमेव स्थली प्रदेशः, अथवा 'स्थली अकृत्रिमा भूमि', आकाशस्य नित्यत्वात् अकृत्रिमत्वम् खेचराणामाधारतया भूमित्वारोपः, नभस्तलमित्यर्थः ) अनन्तरोत्पित्सुदुरीक्षकर्म्मणः ( अचिरभाविनः दुःखेन दर्शनीयस्य कार्यस्य ) निरीक्षणे शङ्कया समुचिता इव ( दर्शनाद् भयेन जडिभूता इव, वस्तुतः कुज्झटिकाच्छन्नतया आकाशस्य स्वल्पपरिसरत्वबोधः अतस्तथाविधोत्प्रेक्षा ) सद्य एव कुहेलिकाजालदुकूलसंवृता ( कुज्झटिकानिचयरूपवस्त्रावगुण्ठिता ) अभवत् ॥ १७ ॥

१८। गृहे गृहे ( प्रतिगृहं ) अनिमित्तकः कलहः ( अकारणविवादः ) अभूत्, भृशम् ( अतिशयेन ) विषण्णभावः ( विषादः ) परिसस्तरे ( सर्व्वत्र विततः )। दम्पतिप्रीतिः ( पतिपत्न्योः प्रेम ) अपि न स्थिरा (अचञ्चला) अभवत्, तथा तातपुत्रेषु ( पितृषु तत्तत्पुत्रेषु च ) अनुरागिता (मिथः स्नेहो भक्तिश्च) न, अभवदिति शेषः ॥ १८ ॥

१९। धनं ( कर्तृ ) धनानाम् अधिपं ( धनेश्वरं ), श्रुती

( श्रुतमस्यास्तीति विद्वान् ) श्रुतं ( विद्यां ), महाधीः ( प्राज्ञः ) धियं ( प्रज्ञां ) यशः च ( कीर्त्तिः ) यशस्विन ( कीर्त्तिमन्त ) प्रसह्य (हठात्) तत्याज; इमां दशा मिपन् ( विलोकयन् ) कोऽपि ( दक्षोऽपि पक्षान्तरे कोऽपि जनः ) न वि-स्मयः ( विगतगर्व्वः, गर्व्वं न व्यजहात् ) इति मम विस्मयः ( आश्चर्य्यं प्रतीयत इति कवेरुक्तिः ) ॥ १६ ॥

२० । ( शिवलीलापक्षे ) कपुर न भारतम् ( इति ) ना, तदुद्भवः स विपर्य्ययः किं नु दक्षदेवगम् अनिष्टम् आह इति मत वृथा; ( यतः ) स तया कर्म्मभुवा दैवते मखे अमिलत् ।

( पक्षान्तरे ) नाकपुरं भारत न, तदुद्भवः विपर्य्ययः कि नु सदक्ष-देवगम् अनिष्टम् आह इति मत वृथा, ते मखे सदैव तया कर्म्मभुवा अमिलन् । इत्यन्वयः ।

विशदव्याख्यानन्तु मूलश्लोकस्याधस्तात् टीकायां द्रष्टव्यम् । संक्षिप्तार्थस्तु प्रजापतिर्दक्षो देवस्वरूपादनन्य एव, दुर्निमित्तानि यानि तत्पुरे कनखले सघटितानि, तानि देवस्वरूप तं न स्प्रष्टुमर्हन्ति, यतस्तद्वासिना मर्त्यानामेव किञ्चिन्निमित्तमुचितफलभोगः सम्भवति, एवविधस्तर्को निरर्थक एव, कुतः ? दक्षपुरं भारतान्तर्गतं भारतञ्च कर्म्मभूमिः, तत्र यज्ञानुष्ठान यथा तदनुष्ठातु फलाय कल्पेत, तथा तत्र संघटितं दुर्निमित्त-मप्यनिष्टसूचकं स्यादेव, अतो दक्षेऽपि मर्त्यधर्म्मता स्वीकार्य्या, तच्चानिष्टं तत्पुरस्वामिनमेव सम्बध्नीयादिति । पक्षान्तरे, भारते दृष्टानि दुर्निमित्तानि कथं नाम उत्तमेन्द्रियाणाम् देवानाम् अनिष्टं सूचयेयुः, इत्येव तर्को वृथा, कुतः ? ते देवाः यज्ञान्तर्भावेण यज्ञभूमिभारतेन सह नियतमेव कृतसम्बन्धाः । भारतस्य तादृशे दुर्निमित्ते सूच्यमाने यज्ञादि-

हानिसम्भवेन देवानामन्नाभाव, इति तेषां गुरुतरमनिष्टं सुप्रतीतमेव। भारतादन्यत्र यज्ञा न सम्भवन्तीति भारतमात्राधीनभोगत्वं देवानामिति ॥ २० ॥

२१। अदित्यन श्रीसुरकेतनोपम सुमेरुशृङ्गप्रकृति विचित्ररत्नद्युतिभिः प्रसाधित यस्थितिकान्तगोपुरम् अत्ययाद् विना अभज्यत। इत्यन्वय पद्ययोः समान। व्याख्यानञ्च विशदरूपेण मूलश्लोकाद टीकातो ज्ञेयन्। एतेन दुर्निमित्तान्तर वर्णित दक्षपुरस्य, पक्षान्तरे स्वर्गपुरस्य च पुरद्वारम् अकस्माद् भग्नमिति। विशेषस्त्वेतावान् यत् षष्ठश्लोकादारभ्याष्टादशसंख्यकश्लोकपर्यन्तम् दक्षपुरस्य भारतस्य च दुर्निमित्तानि वर्णितानि, पुनरेकविंशश्लोकात् सप्तविंशश्लोकावधि दक्षपुरस्य स्वर्गस्य च दुर्लक्षणानि वर्ण्यन्ते ॥ २१ ॥

२२। अपि किञ्च सदा तदारामचर. ( तस्य = दक्षपुरस्य, पक्षान्तरे स्वर्गस्य उपवन-सञ्चारी ) मलुब्धभृङ्गावलिसङ्गिरिङ्गिणः (मधुलोलुपभ्रमरसमूहसहचर.) सौरभसारशीकरान् ( सौगन्ध्यमयमकरन्दबिन्दून् ) उपाहरन् ( उपानयन् ) मारुत. वायु यथा पुरा ( पूर्ववत् ) न तृप्तिपर्याप्तिकर. ( प्रचुरसुखप्रद )। शैत्य-मान्द्य सौगन्ध्यविशिष्टोऽपि वायु प्रातिकरो नासादिति विपर्य्यय ॥ २२ ॥

२३। ( शिवलीलापक्षे ) अथ ( प्रत्युत ) धूलिततो. कर्करा: उद्धुनन् करालरूप अनियतरयद स्वनन् पुर्या गुरुभीतिसूचक प्रवृद्धनि श्वास इव स (मारुत ) सदैव अधिक ववौ। पक्षान्तरे-अथ सकर्करा धूलिततो. उद्धुनन् करालरूप. अनियतरयद स्वनन् स. दैव पुर्य्यां गुरुभीतिसूचक प्रवृद्धनि.श्वास इव अधिक ववौ इत्यन्वय.।

विकृतवायुप्रवाहो तन्नगराधिदेवतायाः दीर्घश्वास इव भीतिदो जातः इति भावः। निस्तरस्तु मूलश्लोकपादटीकातो ज्ञेयः॥ २३॥

२४। (शिवलीलापक्षे) तदा सुवर्णपङ्केरुहसद्दतिः स्फुरन्मराललीलानिलयः सुनिर्मला दिव्यदीर्घिका निगूढदुःखादिव चक्रप्रमदैः सम शुशोष। (पक्षान्तरे) तदा सुवर्णपङ्केरुहसद्दतिस्फुरन्मरालीलानिलयः सुनिर्म्मला दिव्यदीर्घिका चक्रप्रमदैः सम निगूढदुःखादिव शुशोष, इत्यन्वयः। पक्षद्वयेऽपि व्याख्यानं विस्तरेण मूलश्लोकपादटीकया ज्ञेयम्। दक्षपुरे अकस्मात् शोभनो जलाशयः शुष्कता गतः स्वर्गे च मन्दाकिनी जलहीनाभवत् इतिसंक्षेपः॥ २४॥

२५। मञ्जुलकुञ्जकूजनाः पिकादयः वर्षादिककालमेलन विनैव नितान्तचिन्ताकुलमानसा इव असस्तुता नीरवताम् उपागताः। इति पद्ययोः समानोऽन्वयः।

मञ्जुलकुञ्जकूजनाः (सुन्दरकुञ्जेषु कलनादकारिणः) पिकादयः (कोकिलमुखाः विहगाः) वर्षादिककालमेलनम् (आदिपदात् हेमन्तशीतयोर्ग्रहणम्, तादृशकालयोग) विना एव नितान्तचिन्ताकुलमानसाः इव (गम्भीरदुश्चिन्ताग्रस्तचित्ताः पुरुषा इव) असस्तुता (अपरिचिताम् अज्ञातपूर्व्वाम् इत्यर्थः) नीरवतां (मौनम्) उपागताः। वसन्तादिकालेऽपि कोकिलादयः कलनादस्वभावं परित्यज्य मौनिनः स्थिताः इत्यपरो निष्कर्षः॥ २५॥

२६। सुचारिनेत्राणि चिरोत्सवानां तदनन्तभावता दिने दिने त्यजन्ति, अयाचकान्यपि सर्व्वस्य विनाशशीलताम् उदीरयामासुः। इति पद्द्वयेऽपि समानोऽन्वयः। व्याख्यानञ्च मूलस्यापरत्वादिवृतेर्ज्ञेयम्।

दक्षपक्षे, नक्षत्राणां सततं स्खलनं, स्वर्गपक्षे च देवानां तेजोहानिरिति दुर्निमित्तम् ॥ २६ ॥

२७। तदा व्योमनि शोणितधारयेव विनिर्म्मिताः सम्मार्जनीवन्धविशीर्णशेषा. दैवदिष्टा नाराचदण्डा इव केतुभेदाः उदिता.। इति पद्यस्य समानोऽन्वयः।

तदा आकाशे रक्तधारयेव रचिता लोहितवर्णा इत्यर्थः धूमकेतव उदिताः। ते पुनः कीदृशा.? सम्मार्जनीवन्धवत् रज्जुबद्धमूलभाग सम्मार्जनीवद् विशीर्णा विकीर्णा. शेषा प्रान्तभागाः येषां ते, दैवदिष्टा विधिना व्यवस्थापिता. नाराचदण्डा. लौहमयबाणविशेषा इव। पक्षद्वयेऽपि तुल्यता। उपप्लवाय लोकानां धूमकेतुरिवाग्नियिन इति रहुधूमकेतूदये उपप्लवस्यानिश्चय सूचित. ॥ २७ ॥

२८। ( शिवलीलापक्षे ) इति चेतनाचेतनानां विविधविकारः अचिरभाव्या विपदं पूर्वं सूचयामास, अथ स्वरवित् स. इततदर्योऽपि अधीशः आसीत्, नियतिविषये जीवजाते न अनुयोग. खलु। (पक्षान्तरे) इति . . . . .सूचयामास, अथ स स्वरधीश अपि आवदिततदयः आसीत्, नियतिविषये .. खलु। इत्यन्वय.।

एवं चेतनगतः अचेतनगतश्च बहुप्रकारो विपर्य्यय सन्निहितां विपदं प्रागुत्तापयामास, अनन्तरं यज्ञीयमन्तरस्य स दक्ष दुर्निमित्तं सतीमरणरूपं प्राप्तोऽपि अबुद्धशिवतत्त्व एवासीत्, एतत्तु अर्थान्तरेण समर्थ्यते —दैवाधीने जन्तुजाते किमपि वक्तव्यं नास्तीति। पक्षान्तरे,—प्रथमांश. शेषांशश्च समान एव, तृतीयचरणार्थस्तु— अनन्तरं स स्वरधीश. स्वर्गपति इन्द्र. समपि अविदितदर्थः

कीदृगनिष्टं भवितेति अवधारयितुमसमर्थः आसीत्। तत्र हेतुस्तु पूर्व्वोक्तप्रकार एव ॥ २८ ॥

२६ । *निमित्तदृष्ट्या विबुधप्रजासु विमनायमानता न आसीत्* ( इति ) न तावत्, पुनः द्विपद्गणे ( द्विपद्बल इति पाठस्तु मुद्राकर-प्रमादजनितः ) स्वस्थलम् आगते भीमविक्रमात् सभीतिचिन्ता अजनि । इति पक्षयोः समानोऽन्वयः ।

विबुधप्रजासु = दक्षपक्षे ज्ञानिप्रजासु, पक्षान्तरे देवस्वरूपप्रजासु । द्विपद्गणे = द्विपत् शत्रुस्वरूप गणः प्रमथसेना तस्मिन्, पक्षान्तरे देवाना शत्रुगणे असुरसमूहे इत्यर्थः । स्वस्थल = दक्षपुरमित्यर्थ., पक्षान्तरे स्वःस्थलं स्वर्गराज्यम् । भीमविक्रमात् = महादेवपराक्रमात् पक्षान्तरे भयङ्कराक्रमणात् इति सक्षिप्तोऽर्थः । विस्तरस्तु पादटीकाया द्रष्टव्यः ॥ २६ ॥

३० । ( शिवलीलापक्षे ) येन पत्या हितवचनविशेषोद्बोधितेन अपि शिवदसवमहिम्ना द्विपदविकलशक्तिः रोध्या इति मत्वा योगयुक्तेन तस्थे । मदमोहे श्रेयसाम् अपि अबोधः भवति हि । ( पक्षान्तरे ) हितवचनविशेषाद्बोधितेन शिवदसवमहिम्ना पत्या द्विपदविकलशक्तिः येन रोध्येति मत्वा योगयुक्तेन तस्थे, *अन्यत् समानम् । इत्यन्वयः ।*

पूर्णं व्याख्यानन्तु मूलश्लोकपादटीकातो ज्ञेयम् ॥ ३० ॥

इति पञ्चमसर्गटीका ॥

---

## षष्ठः सर्गः ।

१। अथ सुरवृन्दवन्द्यः प्रवृत्तमन्युः प्रजापः प्रत्यर्थिनाम आगमनं निशम्य योग्यं स्वारतसैन्यसङ्घं समराय समादिशत् इति पद्यद्वयेऽप्यन्वयः। व्याख्या तु मूलपादटीकातो ज्ञेया ॥ १ ॥

२। सताम् अभीष्टाः ( हे सज्जनप्रियाः ) दुष्टात्मनाम् ( दक्षपक्षे, शिवानुचराणां भूतानाम्; देवपक्षे, दैत्यानाम् ) विक्रमम् (वीर्य्यम्) ईक्षमाणाः ( पश्यन्तः ) मा भैष्ट मा भैष्ट ( न भयं कुरुत; माङ्योगे लुङ्, दाढर्यद्योतनाय द्विरुक्तिः) यत् यस्मात्) युष्मासु समामपरायणेषु ( युद्धनिरतेषु ) एते ( दुष्टात्मानः) सत्यं ( निश्चितम् ) प्रपलायितारः ( द्रुतं पलायिष्यन्ते ) इति पद्यद्वयेऽपि व्यापारगर्भोऽन्वयः ॥ २ ॥

३-४। अममधाम्नि पूष्णि उदीयमाने तामरसप्रसारः न युज्यते, कुबेरदिग्वर्तिमरुत्प्रवृत्तौ तद्घनध्वानपरम्परा अपि न, इनान्तदिग्वर्त्तिनभस्वदाप्तौ नूनं शमेषा जाड्यम् अपयाति, यादःपतौ सन्निहिते अमृतस्थितीनां वारिव्याघातमीनारिते। इति पद्ययोरन्वयः। मूलपादटीकायां विशेषेण व्याख्या द्रष्टव्या ॥ ३--४ ॥

५। शूरसुरासुरधृष्यवृन्दारकाः ( दक्षपक्षे, हे वीरश्रेष्ठाः अप्रधृष्येषु श्रेष्ठाश्च। पक्षान्तरे, हे सुरासुरापराजेयदेवाः, वृन्दारकशब्दः श्रेष्ठार्थः देववाचकश्च, सुरमाद्ये प्रधाने च ) द्रुतं गत्वा अरिगणं ( शत्रुसमूहम् ) धूनयत ( कम्पयत ) वेगबलप्रवृत्तः ( वेगबलेन वेगाधिक्येन प्रवाहितः ) समीरणः ( वायुः ) यथा भस्मरजस्तृणानाम् (भस्मधूलिशुष्कतृणानाम्) चयं ( समूहं ) धूनयतीति शेषः ॥ ५ ॥

६। कृशानुबन्धुः ( दक्षपक्षे, यज्ञाग्निसहायः; पक्षान्तरे, अग्निदेवता बन्धुः सहायो यस्य सः ) एषः अहम् ( इन्द्रः ) अपि सज्जः ( सन्नद्धोऽस्मि) प्राकृतिक ( स्वाभाविक ) विक्रम ( बल ) मा जहीत ( त्यजत अत्र मा इत्यव्ययशब्दः ) अस्य राज्यस्य ( दक्षपक्षे, तदीयराज्यस्य पक्षान्तरे, स्वर्गराज्यस्य ) अशिवत्वम् ( दक्षपक्षे, शिवरहितत्वम्; पक्षान्तरे, अशुभम् ) आहो ( अथवा ) सशिवत्वम् ( शिवसहितत्व; पक्षान्तरे, शुभम् ) युष्मद्भुजदण्डलीला ( वीराणा युष्माक बाहुबलाधीनमिति भावः ) ॥ ६ ॥

७। सुनायकेन एवम् उदितं तद् योधवृन्दारकवृन्दम् वीररसमदातिरेकात् अहितसर्व्वलोकान् तृणाय मत्वा अभ्यमित्रम् बभूव। इति पद्यद्वयेऽप्यन्वयः व्याख्यानन्तु मूलपादटीकातो ज्ञेयम् ॥ ७ ॥

८-११। सेनापतेः आश्रवताम् उपेतम् तूर्य्यस्वनास्फालितवीरघोष सवर्णवर्म्मापिहित निशेषचिह्नेन ससूचितपक्षभेद द्विषता कृतान्तैः त्रिशूलकुन्तै जितवीरवर्गैः नाराचपङ्क्तैः प्रथितावलम्बैः धनुष्कलम्बैः अमेयैः गदाद्यैः अस्त्रैरपि नूनम्, मूलसेकात् तरूणा वृन्दमिव, वीर्य्यारदानोज्ज्वलकीर्त्ति गाथाम् उद्गायता चारणपुङ्गवाना सत्त्वेन अपूर्व्वभाव सञ्चिन्वत्, बल रथोत्कण्ठितनीलकण्ठे रथैः कण्ठीरवग्रासकरैः करीन्द्रैः गलोद्गर्ज्जनतर्जितैरैः गजै अश्वैः पत्तिभिश्च बभौ। इति पद्यद्वयेऽप्यन्वय ।

सेनापतेः आश्रवतां ( 'वचने स्थित आश्रव.' इत्यमरः, आज्ञाधीनताम् ) उपेत ( प्राप्तम् ) तूर्य्यस्वनास्फालितवीरघोषम् ( रणवाद्यध्वनिना वर्द्धित. वीरपुरुषाणा सिंहनादः यस्मिन् तत् तादृशम् ) सवर्ण-

चर्म्मापिहितं ( समानरूपचर्म्मचाच्छादितम् ) विशेषचिह्नेन सम्रचित-पक्षभेदम् ( चिह्नभेदेन ज्ञापितः स्वस्वपक्षविशेषः यत्र तत् तादृशम् ) द्विषता शत्रुणा कृतान्तैः ( यमस्वरूपैः ) त्रिशूलकुन्तैः ( त्रिशूलैः, कुन्तैश्च तत्तन्नामकास्त्रविशेषैः) जितवीरवर्गैः (जिताः पराभूताः वीरवर्गाः शत्रुपक्षीयाः वीरसमूहाः यैः ) नाराचखड्गैः ( वाणविशेषैरसिभिश्च ) प्रथितावलम्बैः ( प्रसिद्धसहायभूतैः ) धनुःकलम्बैः ( धनुर्भिर्बाणैश्च ) अभेद्यैः ( दृढैः ) गदाद्यैः ( गदाप्रभृतिभिः ) अस्त्रैरपि आयुधैश्च धृतम् ( युक्तम् ) वीर्य्यावदानोज्ज्वलकीर्त्तिगाथाम् ( वीर्य्यस्य यत् अवदान वीरत्वपरिचायकं वृत्त कर्म्म तेन उज्ज्वला उद्भासिता या कीर्त्तिगाथा यशोगीतिः ताम् उद्गायता ( उच्चैः सस्वर कीर्त्तयताम् ) चारण-पुङ्गवाना ( स्तुतिपाठकश्रेष्ठानाम् ) सत्त्वेन ( वर्त्तमानत्वेन ) मूल-सेकात् ( मूले जलदानात् ) तरूणा ( वृक्षाणा ) वृन्द ( समूहः ) इव अपूर्व्वभाव ( अभिनवोज्जीवनचिह्न ) सञ्चिन्वत् ( प्राप्नुवत् ) वल ( चतुरङ्गा सेना ) रवोत्कण्ठितनीलकण्ठैः ( रथशब्देन मेघध्वनिभ्रान्त्या उत्सुकीकृताः ऊर्द्ध्वमुखोन्नता वा मयूराः यैः ते तादृशैः ) रथैः कण्ठीरवत्रासकरैः ( सिंहाना भयजनकैः ) करीन्द्रैः ( गजश्रेष्ठैः ) गर्जोद्गर्ज्जनतर्जितहेषै. ( बृंहितैस्तिरस्कारितहेषाशब्दै ) हयैः ( अश्वैः ) अग्र्यैः ( श्रेष्ठैः ) पत्तिभिः (पदातिभिः ) च बभौ (शुशुभे)॥८-११॥

१२। तद् यत्ननैपुण्यविशेषयोगात् सद्यः दुरूहं व्यूह निबध्य, घोरात्ययाद् विस्मृतमाभिमानस्य ( मत् ) पुरः आयतनानिकानि न्यधात् इति पद्यस्यान्वयः। तद् ( वल ) यत्ननैपुण्यविशेषयोगात् (यत्नातिशयं कौशलातिशयं चाश्रित्य ) सद्यः ( तत्क्षणात् ) दुरूहं ( दुर्बोधम्,

दुर्भेद्यमिति भावः ) व्यूहं निबबन्ध ( रचयामास )। घोरात्ययात् ( दक्षपक्षे, घोरस्य शिवस्य अत्ययात् अतिक्रमात्; पक्षान्तरे, घोरः भयानकः अत्ययः दोषः दुर्वासोऽवमाननारूपः तस्मात् ) विस्मृतमान्त्रिकास्त्रं ( तदानीं अस्त्रप्रयोगमन्त्राणां स्मरणं नैवाभूदिति भावः ) पुरः ( व्यूहस्य अग्रभागे ) आयतनालिकानि ( दीर्घनालिकास्त्राणि ) न्यधात् ( स्थापयामास )। दक्षपक्षे, शिवातिक्रमणजन्यपापवशात् अशुचित्वेन शुचिमात्रैकस्मरणीयमन्त्रमयास्त्राणां प्रयोगशक्त्यभावात् बाह्यास्त्राणां मध्ये परमशक्तिशालिबृहन्नालिकास्त्राणां स्थापनं दक्षबलेन कृतम्। ( इन्द्रपक्षे ) दुर्वासोऽवमाननारूपभयानकावैधकर्म्मजनितदुष्कृतवशादशौचप्राप्त्या पवित्रपुरुषकर्त्तृकमन्त्रपाठपूर्वकप्रयोगार्हाणामस्त्राणां प्रयोगो नैवाभवदतो बृहन्नालिकास्त्ररूपबाह्यास्त्रविशेषव्यवस्थापनं देवबलेन कृतमिति तात्पर्यम् ॥ १२ ॥

१३। शोकाङ्कशङ्काचकिताः ( शिव० पक्षे, शोकः सतीमरणजन्यशोकः स एव अङ्कः लक्षणं यासां ताः शोकाङ्काः शोकग्रस्ताः शङ्काचकिताश्च ताः शिवगणात् शङ्का भयं तया ग्रस्ताः, पक्षान्तरे, युद्धस्य भयङ्करपरिणामं शोचन्त्यः भीताः ) दिव्यस्त्रियः अश्विन्यादि दक्षस्त्र्यादयो देव्यः विमानोच्छ्रितकक्षरूढाः ( विमानस्य व्योमयानस्य उच्छ्रितः उन्नतः यः कक्षः क्षुद्रगृहं तत्र ) रूढाः ( कृतारोहाः ) काश्चित् गवाक्षान्तरिताः ( वातायनान्तराले स्थिताः ) काश्चित् च यथेच्छं ( इच्छावशात् यत्रकुत्र स्थित्वा इत्यर्थः ) महाजिसज्जाम् ( महारणोद्योगम् ) ऐक्षन्त ( दृष्टवत्यः ) ॥ १३ ॥

१४। दितिभूतिवित्तं तत् भीमसैन्यं अदितिजन्मसेनां प्राप्तां

विलोक्य हसेन रोषेण तथा परीत' ( सत् ) स्वबाहुलीलां प्रकटीच इति पद्येऽन्वय: ।

( शिवलीलापक्षे ) सत् ( दिति: खण्डन भूति: भस्म ते वित्तं धनं यस्य तत् अरिखण्डनपरायणं भस्मलेपनयुक्त ) भीमसे ( शिवस्य सैन्यम् ) अदितेर्जन्म यस्मात् स: अदितिजन्मा दक्ष: त सेना प्राणाम् आगता विलोक्य हासेन समरप्रियतया समरसम्भावन आनन्दद्योतकहास्येन, अथवा प्रतिपक्षं प्रति उपहासेन रो क्रोधेन च परीतं युक्त सत् क्रीडारूप निजभुजविक्रम प्रकाश म्) ( पक्षान्तरे ) दितेरपत्यतया प्रसिद्धं तत् भयङ्करं दैत्यसै देवसेनाम् आगता दृष्ट्वा अट्टहासेन क्रोधेन च युक्तं सत् निजभु विनमत्पत्नीडा प्रकटयामासेत्यर्थ: ॥ १४ ॥

१५ ) शिवलीलापक्षे उग्रसेना ( उग्र: शिव: तस्य सेना सेन पतिरपि तत्सैन्य इति सेनापतिसहितसेना, इत्यर्थ:, पक्षान्तरे, उ येपना दैत्यसेना, सेनापतेरपि राजसेनात्य वर्त्तते इति तत्समद: *निष्कान्तिनादघातदर्पवज्राम् ( बृहन्नालिकारन्ध्र स्वलल्लौहपिण्डनिष्क्र* मसमये महान् शब्दो भवति अतएव निष्क्रान्तौ निर्गमणकाले ये नाद: तेन हतदर्पं हतगर्व वज्र यया तादृशीं ) द्विषा ( शत्रूणा बृहन्नालिकरन्ध्रमुक्तानलोज्ज्वलाम् ( बृहन्नालिकपदेन 'कामान' इ प्रसिद्धमाग्नेयास्त्र बोद्धव्यम्, बृहन्नालिकस्य रन्ध्रात् छिद्रात् मुक्त बहिर्निर्गत: यो अनल: अग्नि: तेन उज्ज्वला दीप्ताम् ) आयस पिण्डकोटि' ( आयसपिण्डानां 'गोले'ति येषां प्रसिद्धि:, तेषां कोटि

असंख्यलौहपिण्डान् इत्यर्थः ) उपेक्षमाणा ( अविगणय्य ) अग्रम् इता ( अग्रेसरीबभूव ) ॥ १५ ॥

१६ । परिज्वलच्चूर्णविशेषगर्भान् ( परिज्वलन्तः अग्निना दीप्यमानाः चूर्णविशेषाः दाह्यक्षोदाः, गर्भे अभ्यन्तरे येषां तान् ) चलन्महोल्का इव ( चलन्त्यः पतन्त्यः महोल्काः महत्यः बृहत्यः उल्का आकाशाग्नयः ता इव ) ऋद्धवेगान् ( ऋद्धः प्रवृद्धो वेगो येषां तान् ) छिद्रवतः ( प्रज्वलद्दाह्यचूर्णवर्षिबहुरन्ध्रयुक्तान् ) अयोगुडान् ( लौहपिण्डान्—गोला इति ख्यातान्, प्रागुक्तनालिकरन्ध्रमुक्तान् ) विलङ्घ्य ( अतिक्रम्य, शिवगणानाम् तद्घातेनापि मरणाभावादिति शिवलीलापक्षे ; हन्यमानेष्वपि बहुषु अवशिष्टा भटा इति दैत्यपक्षे; अग्रेसरीभूय ) तदस्त्ररन्ध्राणि ( तेषामस्त्राणां रन्ध्राणि चूर्णपूरणद्वाराणि ) कीलैः ( लौहशङ्कुभिः ) रुरोध ॥ १६ ॥

१७ । एवं नालिकास्त्रलौहपिण्डवर्षणे निवारिते, उभयपक्षयोः शस्त्राशस्त्रि युद्धं वर्णयति ।

क्षणात् ( अनतिचिरेण ) कृपाणेषु (परस्परखड्गेषु) तडिद्विलासः ( विद्युत्स्फुरणम् कृपाणानां नैर्मल्यात् तत्रालोकसम्पातेन द्रुतसञ्चालनाच्च विद्युत्प्रकाशवत् प्रभा बभूवेति भावः ) । क्षणात् ( क्षणमध्ये ) झनत्काररवातिरेकः ( पक्षद्वयस्य खाड्गिकयोधानां निपात्यमानेषु खड्गेषु परखड्गाभिघातेन झनदित्याकारकरवस्यातिरेकः आधिक्यं जातम् )।

क्षणात् ( तत्क्षण एव ) अग्निकणावभासः ( अग्निकणानाम् अवभासः उद्गमः ) क्षणात् ( क्षणमध्ये ) भङ्गः ( योधद्वयकृपाणेषु खण्डितत्वं ) क्षणात् ( क्षणमध्ये ) रुधिरौघमग्नः ( एकस्य

कृपाणे भग्ने, अन्यो भग्नकृपाणं प्रतिपक्षं जघान एवं बहूनां योधानां कृपाणेषु, रुधिरौघैः शोणितप्रवाहैः सङ्गः प्लावनं बभूव ) प्रथमं खाङ्गिकाः स्वस्वकृपाणमुत्तोलयामासुः, ततः स्वस्मिन् परकृतकृपाण-घातप्रतिरोधाय तत्कृपाणे स्वकृपाणप्रयोगेणाभिघातात् झनत्कारध्वनिः, ततस्तस्माद् वह्न्युद्गमः, ततश्च द्वयोरेव कृपाणयोर्भङ्गो वा एकस्य कृपाणे भग्ने अन्येन भग्नकृपाणस्य शत्रोः शिरश्छेदो वेति सरलार्थः। द्वयोः पद्ययोः समानः। कार्पाणिकानां बहुत्वात् कृपाणेष्वित्यत्र बहुवचनम् ॥ १७ ॥

१८। कश्चित् ( कोऽपि खाङ्गिकः ) सम्माननार्हं ( सम्मानने उद्यममात्रेण शत्रूणां सस्तम्भने, सम्यग् जाड्यापादने अर्हं योग्यम् प्राचां मते चुरादि 'मन'धातोः स्तम्भार्थत्वात्; 'कर्त्तुमुपेत्य माननां' इति माघ-प्रयोगदर्शनात् सम्माननायां हि सारूप्यं पादटीकायां लिखितम् ) विमलाबभासं ( निर्म्मलप्रभं, कलङ्कवालिमशून्यतया चाकचिक्ययुक्तम् ) कृपाणधारामणिहारसारम् ( कृपाणधारा, कृपाणस्य खड्गस्य धारा छेद-नसाधनतीक्ष्णप्रान्तभागः, स एव मणिहारसारः श्रेष्ठो मणिमयहार, मणिहारेषु सारः इति समासः त ) दृढं ( प्रगाढं ) सञ्जयितुं ( सङ्गती-कर्त्तुं ) परस्य ( शत्रोः ) कण्ठोपकण्ठोपनतं ( कण्ठस्य उपकण्ठे समीपे उपनतम् उपस्थितम् ) चकार। मणिहारसारोऽपि सम्माननार्हः आद-रणीयः, विमलावभासः निर्म्मलद्युतिः, अशिथिलभावेन परिधापयितुं परस्य प्रधानस्य कण्ठसमीपवर्त्ती क्रियते। विशेषणश्लेषेण समुज्ज्वलता साम्येन च रूपकमिदं सम्पादितम् ॥ १८ ॥

१९। कश्चित् ( कार्पाणिकः ) दृढोपरुद्धासरुमुष्टिवृष्टस्वेदाम्बुभिः

दृढोपरुद्धत्सरणा मुष्टिना वृष्टैः पातितैः स्वेदाम्बुभिर्घर्मजलैः ) दन्तुरितम् ( दन्तुरवत् कृत विन्दुभिर्विगलद्भिः दन्तवत् लम्बमानैरुपलक्षितमित्यर्थः ) द्विषः ( शत्रोरुच्चतुरङ्गारूढस्येति भावः ) असि ( स्वमस्तके पात्यमान खड्ग ) कृपाणसंचालनकौशलेन ( कृपाणस्य स्वीयखड्गस्य संचालन तत्र कौशलेन, नैपुण्येन ) विफलप्रयोग ( विफलः व्यर्थः प्रयोगः पातनकर्मो यस्य तम्, स्वकृपाणभ्रामणेन शत्रुखड्गपाननिवारणेनेति भावः ) चकार ॥ १६ ॥

२० । द्वन्द्वयुद्ध वर्णयति । भटेषु ( पक्षप्रतिपक्षसैनिकेषु मध्ये ) द्वौ द्वौ ( एकस्य पक्षस्य एकः अपरपक्षस्य एक इति द्वौ, एवमन्यौ द्वौ परौ द्वौ इत्यादि रूपं द्वन्द्वम् ) प्रोद्दण्डकोदण्डादिभिः उल्वणमल्लयुद्धैश्च ( उल्वणानि व्यक्तानि गुप्ताक्रमणरहितानि मल्लयुद्धानि तैश्च ) प्राणापहाराय ( मिथो जीवनहरणाय ) विकराललीलाम् ( अति भीषणरणम् अत्रान्यत्र च युद्धस्य लीला शब्देन ग्रहणं योधाना युद्धप्रीति सूचनाय । ) व्यधत्ता चक्रतुः ॥ २० ॥

२१ । विच्छिद्यमानस्य ( विशेषेणच्छिद्यमानस्य कृत्यमानस्य ) पदातिसादितुरङ्गमातङ्गगणस्य ( पदातयः पत्तयः, सादिनः अश्वारोहाः, तुरङ्गाः अश्वाः, मातङ्गाः हस्तिनः, तेषा गणः समूहस्तस्य) प्राणावसानक्षणलब्धजन्मा ( प्राणानामवसान अन्तः, तस्य क्षणः समयः तस्मिन् लब्धं जन्म येन सः, मरणसमयोत्पन्न इत्यर्थः ) नादः ( आर्त्तध्वनिः ) संग्रामभूमि ( रणक्षेत्र ) स्थगयाञ्चकार ( आच्छादयामास ) कृपाणविदीर्य्यमाणपदातिप्रभृतीना मृत्युकालोत्पन्नार्त्तध्वनिभिः संग्रामक्षेत्र माच्छादितमभूदिति सरलार्थः । ( शिव॰ पक्षे ) दक्षसैन्यानामेवं

हानिर्जाता, ( पक्षान्तरे द्वयोरेव ) सेनयोरेवमार्त्तनादो जात इति निरोध. ॥ २१ ॥

२२। एकः ( कश्चिद् योध ) विभिन्दन् ( शत्रु छिन्दन् ) अपरः ( अन्य· ) विभिन्न ( छिन्न ) पर. ( ताभ्यामितर· ) विभिन्दन् ( स्वय छिन्दन् ) अपि भिद्यमान·, ( स्वकर्त्तृकछेदनसमय एव परेण च्छिद्यमान , ) एव (इति प्रकारेण) समस्ता ( शस्त्राशस्त्रिनिरता. सर्वे योधा. ) रणस्थलीं ( समरभूमि ) समम् ( युगपत् ) एव शोणितपूरमग्नाम् ( शोणितप्रवाहाप्लुताम् ) चक्रु ॥ २२ ॥

२३। आजिभूमि ( युद्धक्षम् ) कृत्तोत्तमाङ्गै (छिन्नमस्तकै ) अवलुप्तकायै ( छिन्नदेहै , शिरोमात्रावशेषैः ) छिन्नाङ्‌घ्रिभि ( छिन्न पादै ) कृत्तभुजै ( द्विखण्डितबाहुभि ) प्राणैर्विहीनै ( गतप्राणै ) हीयमानै ( प्राणैः परित्यज्यमानै म्रियमाणैरित्यर्थ ) अहीयमानै ( प्राणैरत्यज्यमानै , कण्ठागतप्राणैरित्यर्थ. ) योधै ( योद्धृभि ) वृता ( वभ्रे )॥ २३ ॥

२४। ( शिवलीलापक्षे ) रक्तप्रवाहव्यपदेशभागी ( रक्तप्रवाहस्य यो व्यपदेश. छल तद्भागी, तच्छलविशिष्ट ) रौद्रप्रताप ( रुद्रस्य शिवस्यायं रौद्र प्रताप प्रभाव ) दितिसुतभर्त्तु ( दितिसुते दितिजनन्या. प्रसूतेर्भर्त्तु दक्षस्य ) स्वरन्न ( स्वगवत् अन्त मनोहर ) पुर दृगुपेयतन्वा ( दृशा चक्षुषा उपेया ग्राह्या तनु , तया, प्रतापस्यादृश्यत्वेऽपि रक्तप्रवाहच्छलेन चक्षुर्ग्राह्यवपुषा ) वलात् ( बलेन ) आकुलयाञ्चकार (आकुलनं पलायमानजनसम्मर्द तद्युक्तचकार, व्याप्त वा चकार) मन्ये इत्यहमुत्प्रेक्षे । ( पक्षान्तरे ) दितिसुतिभर्त्तु ( दिते सूति. प्रसवो

येषा ते दितिसुतयो दैत्याः तेषां भर्त्तुः पत्युः असुरराजस्य ) रौद्रप्रतापः ( दारुणः प्रतापः ) दृगुपेयतन्वा ( चक्षुर्ग्राह्यस्वरूपेण ) रक्तप्रवाह-व्यपदेशभागी ( रक्तप्रवाह इति या व्यपदेशः संज्ञा तद्भागी ) स्वरन्तं ( स्वर्गस्वरूप ) पुरं ( नगरं ) आकुलयाञ्चकार ( इति मन्ये ) ॥ २४ ॥

२५। ( शिवलोलापक्षे ) अथ ( अनन्तरं द्वन्द्वयुद्धानन्तर ) अदितिजन्मयोधाः ( अदितेर्ज्जन्म यस्मात् सः दक्षः तस्य योधाः, तदीया योद्धारः ) द्विषदुग्रपक्षात् ( द्विषन् शत्रुः य उग्रपक्षः उग्रस्य शिवस्य पक्षः वर्गः प्रमथसमूहः तस्मात् ) क्षणेन ( अत्यल्पकालेन, अपवर्गे तृतीया ) हीनसत्त्वाः ( हीनं न्यूनं सत्त्वं पराक्रमो युद्धोत्साहो वा येषां ते हीनसत्त्वाः सन्तः ) यावत् (यत्कालमध्ये) पश्चात्पदाः ( पराङ्मुखाः ) कृशानुतृप्तेः ( कृशानोः अग्नेः तृप्तिर्यस्मात् यज्ञेन जनिताग्निप्रीतेः ) अधिपात् ( प्रजापतेः दक्षात् यज्ञदोर्नित्यसम्बन्धात् तावत्, तत्कालमध्ये ) अभीतिवाद ( मा भैष्ट इति वादम् अभयवचनम् ) अशृण्वन् ( आकर्णितवन्तः शृणोति तस्मादपि यः सपापभागित्यादा-विवापादाने पञ्चमी ( पक्षान्तरे) अदितिजन्मानो देवाः (त एव योधाः इति कर्म्मधारयः ) द्विषदुग्रपक्षात् ( द्विषत्सु ये उग्राः दारुणाः दुर्द्धर्षा इति यावत्, तेषां पक्ष वर्गः तं प्राप्य, ल्यब्लोपे पञ्चमी ) हीनसत्त्वाः ( त्यक्तधैर्य्याः, युद्धे स्थातुमसमर्था इति यावत् ) यावत्पश्चात्पदाः ( तावत् ) कृशानुतृप्तेः ( कृशानुना अग्निना दिक्पालेन तृप्तिर्यस्य, तस्मात् ससैन्यस्याग्नेर्युद्धार्थमुपस्थित्या तृप्तिं प्राप्तादिति भावः अधिपात् ( सुरपतेः ) अभीतिवादमशृण्वन् इत्यादिकं पूर्ववत् ॥ २५ ॥

२६। (शिव०पक्षे) तदा (अभीतिवादश्रवणकाले) अग्निदत्ताः (आहुतिमन्त्रप्रभावेण परितुष्टात्मनो यज्ञाग्नेरुत्थिता इत्यग्निदत्ता इत्युक्तम्) असह्यवीर्याः (न सह्यं परैः सोढुं शक्यं न भवति यत् तद्वीर्य्यं पराक्रमो येषां ते) द्विषामभावाय (शत्रूणां विनाशाय विताडनाय वा) समुद्यतास्त्राः (सम्यक् उद्यतायुधाः) बहुसंख्ययोधाः (बह्वयः संख्या येषां, ते योधाः, बहुयोधाः इत्येतन्मात्रमनुक्त्वा बहुसंख्ययोधा इति कथनं योधानामसंख्यत्वसूचनाय) परिभूतसेनाः (पराजितदक्षसैन्यानि) प्रोत्साहयन्तः (प्रकर्षेण उत्साहयुक्ताः कुर्वन्तः सन्तः) समं (युगपत्) समापेतुः (रणस्थलं समाजग्मुः)। (पक्षान्तरे) *अग्निदत्ताः (अग्निना दिक्पालेन प्रदत्ताः) द्विषां (शत्रूणामसुराणाम्)* अभावाय (उन्मूलनाय) इति विशेषः। समानमन्यत्॥ २६॥

२७। (शिव०पक्षे) सा (अग्निसमुत्थितयोद्धृसमूहपूर्णा) वाहिनी (दक्षसेना) अन्याभिः (अग्निसमुत्थितातिरिक्ताभिः पराजितातिरिक्ताभिश्च देवतासेनाभिरिति यावत्) अपि (च) प्रवृद्धा (*प्रकर्षेण वृद्धा बहुलीभूता सती) प्रावृषि (वर्षाकाले) कुल्यागिरिग्राम*पुराद्युपैतैः (कुल्याः 'खाल' इति वङ्गभाषाख्याताः, कृत्रिमा अल्पपरिसराः सरितः, ताश्च गिरयश्च पर्व्वताश्च ग्रामाश्च पुराणि च आदिपदात् प्रणाल्यादिपरिग्रहः तेभ्यः उपेतैः उपागतैः) वर्षाम्बुभिः (वृष्टिजलैः) निम्नगा (अकृत्रिमा नदी) इव पूर्णतमा (अतिशयेन पूर्णा, *अतिविशाला*) बभूव। (पक्षान्तरे) सा (अग्निप्रदत्तसेनापूर्णा) वाहिनी (देवताचमूः) अन्याभिः (नवीनाभिः) सेनाभिः (इन्द्रनियुक्ताभिरित्यर्थात्) इति विशेषः। समानमन्यत्॥ २७॥

२८। (शिव०पक्षे) ततः (दक्षसेनायाः पूर्वं तमत्वप्राप्त्यनन्तरम्) इतरेतरजयैषिणोः (परस्परं जिगीषतोः) सैन्ययोः (सेनयोः) पुनरपि (भूयोऽपि) सकलविश्वविस्मापनः (त्रिभुवनविस्मयजनकः) तुमुलः (सङ्कीर्णः) रणः (युद्धं) बभूव (यद्यपि तुमुलशब्दस्यैव सङ्कीर्णरणपरत्वं त्रिकाण्डशेषे दृश्यते, तथापि करकङ्कणवत्सम्भेदे नान्यतरवैयर्थ्यमिति न्यायेन रणशब्दस्य पृथक् प्रयोगः प्रचण्डताधिक्यसूचनाय)। सः (पुनःप्रवृत्तः) जन्ययोगः (युद्धेन योगः सम्बन्धः तत्र चित्तैकाग्रता वा) तथा (तेन प्रकारेण) दक्षसुरपक्षभाक् (दक्षश्च सुराश्च तेषां पक्षः बलं, वर्गो वा तं भजते आश्रयति; इति दक्षसुरपक्षभाक्) अजनि (जातः) यथा (येन प्रकारेण) अरिगणविक्रमः (अरयः शत्रुभूता ये गणाः प्रमथाः शिवभटास्तेषां विक्रमः पराक्रमः) क्षणम् (किञ्चित्कालं व्याप्य) क्षीणताम् (लाघवम्) उपागमत् (प्राप्तवान्) गणविक्रमापेक्षया दक्षदेववाहिनीविक्रमोऽधिको बभूवेति भावः। (पक्षान्तरे) सैन्ययोः (देवसेनाया असुरसेनायाश्च)। सदक्षसुरपक्षभागित्येकं पदम् (सन्ति सत्त्वप्रधानानि रजस्तमोऽभिभवशून्यानीत्यर्थः, अक्षाणि इन्द्रियाणि येषां ते सदक्षा ये सुराः, एतेनासुराणामसदक्षत्वसूचनेन तद्विजयो महानिष्टकरो भविष्यतीति व्यञ्जितम्) जन्ययोगः (युद्धेन योगः मूलपादटीकालिखितार्थोऽत्र द्रष्टव्यः, जन्ययोगः जन्यमेव युद्धमेव योगः समाधिः, सदक्षस्य शमदमवत्त्वं योगोपयोगीति सदक्षत्वेन सुरा विशेषिता इति वा) अरिगणस्य (शत्रुसमूहस्य—असुरवाहिन्याः) इति विशेषः। अन्वयादयः प्राग्वत्, केवलं सदक्षेत्यस्यैकपदत्वात् स इति तत्र न गृह्यते ॥ २८ ॥

२६-३० । ( शिव०पक्षे ) तदुग्रगणनायकः ( तेषां क्षीणविक्रमाणाम् उग्रगणानां नायको वीरभद्रः ) तदा ( तस्मिन् काले, गणविक्रमक्षयकाले ) विक्रमं प्रकटयन् ( स्वविक्रमं प्रकाशयन् ) रविप्रभृति-देवतानां ( भगपूषादिदेवतानां ) जयी ( विजेता सन्, ता विजित्य ) स्वपक्षदृढतां ( स्वपक्षाणां उग्रगणानां दृढतां परविक्रमसम्पादितशैथिल्य-दूरीकरणेन दुर्जयतां ) तथा ( तेनैव प्रकारेण ) परचमूसमुत्सादनम् ( शत्रुसैन्यनिपातनं ) विदधत् ( कुर्व्वन्, वर्त्तमानसामीप्ये लट् अव्यवहितानन्तरत्वद्योतनाय ) रिपुप्रियवितानविध्वसने ( रिपोर्दक्षस्य प्रियो यो वितानः यज्ञः तस्य विध्वसने विनाशे ) प्रवत्तृते ( प्रवृत्तिमान् बभूव ) । ( पक्षान्तरे ) तेषामुग्राणां गणनायकः ( तेषामुग्रगणानां नायक इति वा असुरराज इत्यर्थः ) रविप्रभृतीनां देवतानाम् ( युद्धार्थमुपस्थितानां सूर्य्यादिदेवानाम् ) जयी ( जेता सन् ) रिपुप्रियाणां देवभक्तानां वितानविध्वसने, सेनाः प्रेष्य ताभियज्ञं विघ्न सयितुं प्रवत्तृते प्रवृत्तः ( यज्ञविघाताय भारते सेनाः प्रेषितवान् इत्यर्थः ) अनयोः श्लोकयोर्शेषान्तरं मूलपादटीकायां द्रष्टव्यम् ॥ २६-३० ॥

३१ । ( शिव०पक्षे ) तेन ( वीरभद्रेण ) तु पुनः प्रकटित-प्रचुरस्मयोष्मा ( प्रकटितः प्रकाशितः प्रचुरः प्रभूतः स्मयोष्मा स्मयस्य गर्व्वस्य उष्मा तापः येन स. ) सक्रोधपरुषवचनमेव गर्व्वोष्मेति भावः । ख्यातिप्रियः ( ख्यातिरिति भृगुपत्न्या नामेति विष्णुपुराणम्, तस्याः प्रियः पतिः भृगुरित्यर्थः ) तूलीकृतः ( तूलवल्लघुकृतः लघूकृतः श्मश्रूत्पाटनेन निगृहीतः ) । च ( चकारात्प्रकटितप्रचुरस्मयोष्मेति विशेषणस्य तूलीकृत इति विधेयस्य च लाभः ) अदितिगुतिपतिः ( अदितिजननी-

भर्त्ता दक्ष·, द्वयोः स्त्रीपूर्व्वकपरिचयः वीरभद्राद्वीर्य्याल्पत्वसूचनाय, दक्षस्य तत्परिचये हेत्वन्तरं पादटीकायामुक्तम्। अर्थान्तरन्यासेनेद समर्थ्यते,—प्रायः ( बाहुल्येन ) अतितापात् ( तापाधिक्यात् ) गुरोरपि गुरुत्ववतोऽपि, (गुरुत्वम् आचार्य्यत्वम्—पूज्यत्वम्, अथ च पतनहेतुगुण विशेषो भार इति प्रसिद्धः ) लघुता ( सम्मानहानिः, अथ च तौलेन न्यूनता ) भवेत्, अत्र दृष्टान्तः, तापयति ( अग्न्यादितप्ते ) वारिणि (जले) वाष्पभावः (वाष्परूपेण परिणतिः) जले गुरुत्व वाष्पे लघुत्वञ्च पतनादुत्पतनाच्च सिद्धम्, मानं ( प्रमाणं, मानशब्दस्याजहल्लिङ्गत्वात् क्लीवत्वम्, वेदाः प्रमाणमितिवत्), तापशब्दश्लेषमूलकोऽय सदृष्टान्तार्थान्तरन्यासः। यद्यपि वीरभद्रो दक्षनिग्रहाय तत्समीप प्रथममुपगतस्तथापि, गर्व्वाधिक्यप्रकाशात् प्रथमं भृगुरेव निगृहीतः पश्चाद्दक्ष आक्रान्त इति भाव. तु-शब्दप्रयोगाल्लभ्यते। (पक्षान्तरे) तेन (वीरेण, असुरराजेन ) तु ( किन्तु, यद्यपि हुताशनसाहित्यमासीद्वेराजस्य, तथापि हुताशनमुपेक्ष्य ) ख्यातिप्रियः ( प्रशसानुरक्तः स्तुतिप्रिय इति यावत् ) अदितिसूतिपतिः ( अदितिसूतीना अदितिपुत्राणा देवाना पतिः चकारोऽवधारणे ; अन्यैरसुरैरन्येषा देवाना लघूकरणद्योतनाय समुच्चये वा ) अन्यत्सर्व्वं पूर्व्ववत् ॥ ३१ ॥

३२। ( शिवलीलापक्षे ) अथ ( अनन्तर सन्निकर्षानन्तरमिति पादटीकायामुक्तम्। दक्षसमीपे तदृत्विजो भृगोर्निग्रहेणैव तस्य लघूकरण, दक्षनिग्रहस्त्वनेनोच्यत इत्याशयेन ) यद्वा अथ ( भृगुदक्षयोस्तूलीकरणानन्तरम् ) इति (एवम्प्रकारेण अनन्तरोक्तप्रकारेण) खितबल ( खण्डितसैन्यं ) दक्ष ( दक्षप्रजापतिम् ) द्विषत् ( विद्विषत् ) ईश्वरस्य

( शिवस्य ) बलं ( वीरभद्रप्रमुखं सैन्यम् ) स्वरापसवनान्तं कान्तं कृत्वा, दम्भानुबन्धनविलङ्घितपूज्यपूजाः किं फलं भुञ्जते इति ( तत्फल-स्वरूपम् ) प्रथयाम्बभूव ( प्रकटयामास ) । सर्वपूज्यमहेश्वरहेलनात् प्रजापतेरपि दक्षस्य स्वजननिग्रहो यज्ञश्च सो जीवनान्तश्चेति फलं जातमिति सर्वेषां प्रतीतिरभूदिति भावः । पद्यद्वयस्य व्याख्यानं मूल-पादटीकाया द्रष्टव्यम् ॥ २२ ॥

इति षष्ठसर्गटीका ।

---

सप्तमसर्गस्याष्टमसर्गदशमश्लोकपर्य्यन्तस्य यथापेक्षं व्याख्यानं मूलपादटीकायां द्रष्टव्यम् । अष्टमसर्गस्यैकादशश्लोकमारभ्य ये तथाव्याख्याताः श्लोकास्तेऽत्र तथा व्याख्यायन्ते—

## अष्टमः सर्गः ।

११ । कुलशैलेनोमारमयोः रूपं वर्णयति, स्थूलेति । स्थूल मूलं यासां ताः स्थूलमूलाः क्रमेण क्षीणाः मूलादनन्तरमनन्तरमारम्भपर्वानुसृत्या न्यूनस्थौल्याः समवृत्ताः समौ योग्यौ रक्तः रक्तवर्णौ यासां, ताः नखे, अङ्गुल्यग्रे तलदेशे चोचितरक्तवर्णाः अङ्गुलयो ययोः तौ अतएव चाम्पेयकलिकाजालगुम्फितौ पल्लवाविव पदौ इत्यस्य पिप्रतीत्यूनत्रिंश-श्लोकस्थपदेनान्वयः, एवमुत्तरश्लोकस्थमपि विशेषणवाचिनां विशेष्य-वाचकपदमर्थतनामपि । चाम्पेयेति—चाम्पेयानां चम्पककुसुमानां कलिकाः चाम्पेयकलिकाः, तासां जालं समूहः तेन गुम्फितौ मिश्रितौ ।

तत्संसृष्टौ। चम्पककलिकाना स्थूलमूलकमक्षीणत्वात् स्वभावरक्तपल्लवसम्बन्धेन रक्तत्वाच्च, तथोत्प्रेक्षितम्। उत्तरार्द्धस्य पूर्वं योजनयान्वयः पर्य्यवस्यति। पल्लवस्य चरणांशे उपमानत्वसम्भवेऽपि विशिष्टस्य वस्तुनः प्रसिद्धिविरहेणेयमुत्प्रेक्षा। इदञ्च रूपवर्णनम् उमाया रमायाश्च तुल्यम्। अत एकेनवार्थेन पद्यद्वयसंग्रहो वेदितव्यः। यद्यपि स्त्रीपक्षे शिर आरभ्य रूपवर्णनं प्रसिद्धं तथापि देवताभावे पादादिवर्णनस्य भुवनेश्वरीस्तवादौ दर्शनात् तथा वर्णितमिति ध्येयम् ॥ ११ ॥

१२। सुसंहताकारा लावण्यामृतवर्षिणीं पुष्पस्तवकविन्यासविशेष रचितामिव जङ्घा ( बिभ्रती ) इत्यन्वयः। सुसंहतं शोभन यथा स्यात् तथा संहतः सम्बद्धः ह्रस्वत्वदैर्घ्यादिदोषरहित आकारः स्वरूप यस्याः ताम्। लावण्यमेवामृत तद्वर्षिणीम्, ततो लावण्यामृतं पुनःपुनः क्षरतीव द्रष्टुर्नयनतृप्तिहेतुत्वात्, पुष्पस्तवकस्य पुष्पगुच्छस्य यो विन्यासविशेष =स्थापनप्रकारभेदः, तेन रचितामिव निर्म्मितामिव ॥ १२ ॥

१३। वह्नीति। वह्निशौच = वह्निशुद्धम् हिरण्मयमित्यर्थः, उपसव्यानम् (परिधानवस्त्रम्) तस्य अन्तरालात् अभ्यन्तरात् उल्लसिता ( उच्चैर्विराजिता ) प्रभा शोभा यस्य तत्। कान्तिः कमनीयता च कोमलता मार्द्दवं च तयोर्लीलास्थलम्—क्रीडास्थानं कान्तिः कोमलता च द्वे एव तत्र स्थिते, तदूरुयुगादिक ( बिभ्रती ) आदिपदेन जानुप्रभृतिपरिग्रहः ॥ १३ ॥

१४। मणिकाञ्चीति। मणीनां काञ्ची, मणिराजिरचितमेखला, तस्या द्युतिभिः प्रभाभिः छन्नाम् आवृताम्, वसनप्रान्तयन्त्रिता वस्त्रप्रान्तेन परिधानवस्त्रस्य पार्श्वभागेन दशांशेन च यन्त्रिता बद्धाम् अतएव

स्वलावण्यप्रकाशस्य योऽभावो वाधस्तेन यः खेदः तज्जनित यद्दु तस्मादिवेति प्रतीयमानोत्प्रेक्षा क्षीणा कृशा कटिम् ( बिभ्रती ) ॥१४॥

१५। मज्जदिति। स्तननिर्जितम् (स्तनेन पराजितम्) श्रीफल (बिल्वफलम्) नाभिसरोगर्भे (नाभिरेव सरः सरसी तस्य गर्भे मध्ये) मज्ज ( मग्नीभवत् ) यान् भङ्गान् ( तरङ्गान् ) उदस्थापयत् ( उत्थापयामास तदात्मकम् (ते एव आत्मा, स्वरूप यस्य तत्)वलित्रयम् (त्रिवलि बिभ्रतं उमाया रमायाश्च उदरे यद्वलित्रय स्थित तन्नाभिसरोवरस्य तरङ्गत्रयः तरङ्गोत्थानञ्च स्थिरजले गुरुवस्तुपतनाद्भवति, श्रीफल गुरुवस्तु तत्तस्य स्तनेन पराजित' काठिन्येन आकारशोभया च पराभूतम् अभिमानवशा मरणाय तत्सरोवरजले निपतत् तरङ्गानुत्थापयामासेति समुदिततात्पर्य्यम् एतेन नाभित्रिवलिस्तनवर्णन' सम्पादितम् ॥ १५ ॥

१६। शिरेति। ( शिराः धमन्यः कङ्कालसन्धानम् अस्थिसम्मे लन' तेषां व्यक्तिः स्पष्टता तया शून्या रहिताम् ) एतेन उद्रिक्तपेशिक त्वाभावोऽविकृतत्वाभावश्चोक्तः, कृशत्वमतिस्थूलत्वञ्च निरस्तिनुमाह सुवर्त्तु'लां ( शोभनवृत्ता ) पेयमलत्वमुखस्पर्शत्वज्ञापनायाह नवनीतेति, नवनीतञ्च मृणाल्यश्च ताभिः निर्म्मितामिव रचितामिव दोर्द्वयीं बाहु- द्वयीं। ( बिभ्रती ) ॥ १६ ॥

१७। बिम्बोष्ठमिति। सुधाकरः चन्द्रः, यद् बन्धुताबन्धेन यस्मिन् बन्धुतायाः सादरस्य बन्धेन सम्बन्धेन, श्लाघ्यमानी आत्मान' श्लाघ्य प्रशंसनीयं मन्यते यः सादरो भवति, यत्तदोर्नित्यसम्बन्धात् तत् बिम्बोष्ठम् ( बिम्बमिव पक्वबिम्बफलमिव ओष्ठो यत्र ) उपसम ( उप-

नासिकम् ) कान्तकपोलम् ( सुन्दरगण्डस्थलम् ) कमलेक्षणम् ( पद्म-लोचनम् ) मुखं ( विभ्रती ) ॥ १७ ॥

१८। ललाटेति। प्रान्तक्रान्तकुञ्चितकुन्तलम् ( प्रान्तेन ऊर्द्ध्वपार्श्वसीमदेशेन क्रान्ताः प्राप्ताः कुञ्चितकुन्तला यस्य, प्रान्ते क्रान्ताः मिलिताः कुञ्चितकुन्तला यस्येति वा कुञ्चिताः स्वभावकुटिलाश्च ते कुन्तलाश्चेति समासः; सीमादेशस्थितालकशोभितम्, अतएव) मेघाच्छन्नार्द्धविम्बेन्दुसुन्दरम् ( मेघाच्छन्नं मेघावृतम् अर्द्धविम्बम् विम्बस्य मण्डलस्यार्द्धम् यस्य स चासौ इन्दुश्चेति तद्वत् सुन्दरः तम् ) कान्तिमन्दिरम् ( कान्तेर्लावण्यस्य मन्दिरं गृहं ) ललाटफलकं ( ललाट एव फलकः पट्टः तम् ) ( विभ्रती ) ॥ १८ ॥

१९-२१। बिभ्रतीति ( उमापक्षे ) सुरम्यान् ( निकाम रमणीयान् ) अन्यदुर्लभान् ( अन्यत्र, अन्येन वा दुर्लभान् लब्धुमनर्हान् ) अवयवान् ( कण्ठग्रीवापृष्ठादीन् देहांशान् ) बिभ्रती ( दधती ) मूर्त्तामूर्त्तिमती ) श्रीः ( शोभा ) इव स्थिता सदानन्दतृप्तिसम्पादनी ( सदानन्दस्य शिवस्य तृप्तेः सम्पादयित्री ) खञ्जनगञ्जनं (खञ्जनपक्षिणो गञ्जनं निन्दाहेतुभूत खञ्जनादपि रमणीयमिति व्यतिरेकालङ्कारः ) चक्षुः भावतरलं ( भावेन सात्त्विकभावोदयेन तरलं चञ्चलं यथा स्यात् तथा ) पतिलोचनयोः (पत्युः शिवस्य दक्षिणवामनयनयोः ललाटनयनस्य मदनदाहकत्वात् तत्परिहारादिति भावः) न्यस्य (विन्यस्य,—एतेन विवाहकालीनो वरवध्वोर्दृष्टिविनिमयो वर्णितः ) महीतलं प्रेक्षमाणा ( भूतलं पश्यन्ती लज्जानम्रमुखीति यावत् ) ऐशरागारुणमुखी ( ईशस्य शिवस्यायम् ऐशः शिवसम्बन्धी, सम्बन्धश्च विषय-

विपर्यभावः शिवविषयक इत्यर्थः ) रागः ( अनुरागः ) तेन अरुणमुखी ( आरक्तवदना ) जातरोमाञ्चकञ्चुका (रोमाञ्चरूपेण कञ्चुकेन युक्तेत्यर्थः ) सा शिवा ( उमा ) प्रीतिप्रफुल्लैः ( प्रीत्या हर्षेण प्रफुल्लैः विकसितवदनैः ) देवाद्यैः, आदिपदात् प्रमथादिपरिग्रहः। पतिसङ्गता ( पत्या शिवेन सङ्गता मिलिता ) ददृशे ( दृष्टा )। श्लोकत्रयस्य व्याख्यागर्भमिलितान्वयः। एकादशभिः श्लोकैर्वाक्यार्थसमाप्त्यानुलकम्। ( रमापक्षे ) सदानन्दतृप्तिसम्पादनी ( सतां देवादीनाम्, आनन्दस्य हर्षस्य, तृप्तेः, उद्वेगशान्तेश्च, सम्पादनी णिजन्तात् सपूर्व-'पद'धातोः कर्त्तरि ल्युट् सम्पादयित्री); शिवा ( कल्याणदायिनी ) मूर्त्ता ( प्रकटितशरीरा, पूर्वं सागरगर्भे लीनासीदिति शरीरस्याप्राकट्यं स्थितमित्याशयः ) ऐशरागः ( ईशः श्रीपतिः, ईः लक्ष्मीः तस्याः ईशः पतिः तस्यायम् ऐशो रागः यद्यपि लक्ष्म्या विवाहात् पूर्वं तस्य श्रीपतित्व नासीत् तथापि कल्पान्तरलीलया तन्नामकत्वस्य विष्णौ सिद्धत्वान्न दोषः। विष्णुं प्रति रागो विष्णुप्रेमेत्यर्थः ) तेनारुणमुखी श्रीः लक्ष्मीः, देवाद्यैः देवताभिः महर्षिप्रभृतिभिश्च, पतिसङ्गता पत्या विष्णुना सङ्गता, ददृशे। श्रीः स्वयमेव विष्णुं वृतवतीति भावः। अत्र पद्ये मूर्त्तेव इत्येवकारतदर्थादिविवरणं पादटीकायां द्रष्टव्यम्। इत्यं विशेषः, अन्यत्र पूर्व्वपद्यसाम्यं बोध्यम् ॥ १६-२१ ॥

२२। ( शिवलीलापक्षे ) यतः ( संयमी ) विभुः ( क्षित्याद्यष्टमूर्त्तिभिः सर्व्वगतः ) अविभुरिति प्रश्लिष्टाकारं पदं वा, ( नास्ति विभुः प्रभुर्यस्य सः अविभुः महेश्वर इत्यर्थः ) अनन्यलभ्यां (अन्यलभ्या या न भवति तां ) तां शिवां लब्ध्वा परिणीय भावान्वितः

( भावेन अभिप्रायविशेषेण लीलया ,ससारेण वा अन्वितः युक्तः ) तेन सर्व्वे वृन्दारकाः (देवाः श्रेष्ठपुरुषाश्च) प्राप्तकामाः प्रजज्ञिरे ( प्रकर्षेण जाताः ) सतीदेहत्यागाद् भगवान् महेश्वरः दाम्पत्यलीला *ससारिवदवस्थितिं वा विहाय स्वात्मरतो बभूव, उमाविवाहानन्तर* तस्य महेश्वरस्य तादृशाभिप्रायेण विवाहलीलया वा देवाना नन्द्यादीना शिवानुचरश्रेष्ठाना चेष्टसिद्धिरासीदिति सरलार्थः। देवपक्षे प्राप्तकामा इत्यस्यार्थान्तर मूलपादटीकाया द्रष्टव्यम्। ( पक्षान्तरे ) विभुः विष्णुः ( विभुत्वं सर्व्वगतत्वमिति नैयायिकाः, विष्णुशब्दप्रकृते'वि'ष' धातोर्व्याप्त्यर्थकत्वात् सर्व्वव्यापको विष्णुः अतएव तस्य विभुत्वम्, प्रभुरिति वा यथाश्रुतोऽर्थः ) अनन्यलभ्या ( अनन्येन अभिन्नेन लभ्या शक्तिमतैव शक्तेर्लभ्यत्वात् शक्तिमतः शक्तेश्चानन्यत्वात् विष्णुशक्तेर्लक्ष्म्याः विष्णुसम्मेलनमुचितमिति भावः ) तां प्रकटितशरीरा लक्ष्मीम् ) लब्ध्वा ( तत्कृतस्वयंवरणेन लोकदृष्ट्या स्वीकृत्य ) यतः ( यस्मात् समुद्रमन्थनात् ) भावान्वितः ( भावेन सत्तया श्रीपतिरूपेण सत्तयेति यावत् लीलया वा अन्वितः ) तेन ( समुद्रमन्थनेन ) सर्व्वे वृन्दारका. ( देवाः ) प्राप्तकामा. ( लब्धमनोरथाः ) प्रजज्ञिरे ( प्रकर्षेण जाताः )। मूलस्याधस्ताट्टीकायां किञ्चिदधिकं शेषम्, तन्न्यूनत्वञ्चात्र पूरितम् ॥ २२ ॥

२३। ऋतभुजः ( ऋतं सत्य भुञ्जन्ति रक्षन्ति ऋतभुजः सत्यपालकाः, सत्त्वगुणप्रधानतया स्वस्वाधिष्ठितेषु इन्द्रियादिषु सत्यानुरूप स्थापयन्ति, अभ्यधिदैविके हि वागिन्द्रिये—सत्यभाषणं देवपारिकत्वात्, अगरवमारणञ्चागुरगम्भादिपरावरणसम्बन्धादियुक्तं द्वान्रो-

ग्योपनिषदादौ नयनेङ्गितेनापि मिथ्यासाहायकाननुष्ठानं चक्षुरिन्द्रिये सत्यानुकूलत्वम्, मिथ्याश्रवणाविवृत्तिः श्रवणेन्द्रिये सत्यानुकूलत्वम्, चक्षुरधिदेवः सूर्यः, श्रवणस्य वायुरित्येवं सत्यपालकत्वं देवानाम् अथवा ऋतं सत्यं स्थिरं कर्म्मफलं भुञ्जते, पूर्व्वकल्पकृतकर्म्मफलेन वर्त्तमानसृष्टौ देवत्वलाभात् ) देवाः, अतिक्रमाः ( अत्यर्थगतयः द्रुतगतयः सन्तः ) विष्णुमाया शिवा सभवं धाम ( कैलासम् ) ऊहुः ( प्रापयामासुः ) यस्य (धामप्रापणस्य) फलं परपराभवः इत्यन्वयः। (पक्षान्तरे) विष्णुमायामतिक्रमाः देवाः शिवामृतभुजः सन्तः धाम ( तेजः ) ऊहुः ( धृतवन्तः ) यस्य ( धामधारणस्य ) फलं परपराभव इत्यन्वयः। अवशिष्टः पद्यद्वयार्थो मूलपादटीकायां द्रष्टव्यः ॥ २३ ॥

२४। ( शिव०पक्षे ) वृषप्रभृतयः ( शिववाहनादयः ) सर्वे ( कैलासनिलयाः ) मातरम् ( अम्बिकाम् ) चिरात् (बहुकालमतिक्रम्य) आगताम् ( स्वधामप्राप्ताम् ) अवलोक्य प्रमोदाश्रुधारासु ( आनन्दाश्रुजलसम्पातेषु ) अवजगाहिरे ( स्नातवन्तः )। ( पक्षान्तरे ) वृषप्रभृतयः ( वृषा इन्द्रः तत्प्रभृतयः तत्प्रमुखाः ) सर्वे मातरं (लोकमातरं लक्ष्मीम् ) चिरात् ( बहुकालेन ) आगताम् ( सागरगर्भतिरोधानमपहाय उपस्थिताम् ) अवलोक्येत्यादिकं पूर्व्ववदित्युभयोः पद्ययोरायरपकटीकागर्भोऽन्वयः ॥ २४ ॥

२५। ( शिव०पक्षे ) सनातनी ( नित्या ) भक्तवत्सला सा च ( शिवा च ) तान् ( वृषप्रभृतीन् ) पुत्रभावेन प्रतिनन्द्य ( निजानन्देन तान् अभिनन्द्य ) भक्तानाम् ( भक्तिमताम् ) आकाङ्क्षां ( मातृस्नेहलाभकामनाम् ) पूरयामास। इति विस्मयपदार्थप्रतिपादनगर्भो-

ऽन्वयः । ( पक्षान्तरे ) सा लक्ष्मीः तान् इन्द्रादिदेवान् इति विशेषः । समानमन्यत् ॥ २५ ॥

२६ । मन्दारगन्धसंपृक्तः ( मन्दारकुसुमसौरभयुक्तः ) प्राणिना ( जीवाना ) क्लमनाशनः ( क्लान्तिहरः ) अपूर्व्वसस्पर्शः ( पूर्व्वानुभूतसुखस्पर्शादधिकसुखस्पर्शः ) समीरणः ( वायुः ) मन्दमन्दं ( धीरगत्या ) ववौ । इति पद्यद्वयेऽन्वयः ॥ २६ ॥

२७ । कुतस्त्याः (अनिर्णीतोद्भवस्थानाः) कोमलाः ( मृदुलाः ) मधुराः ( स्वरमाधुर्य्योपेताः ) स्निग्धाः ( तीक्ष्णतारहिताः ) निनदाः ( ध्वनयः ) शरीरिणः ( सर्व्वान् प्राणिनः ) प्रीणयन्तः ( प्रीतियुक्तान् कुर्व्वन्तः ) सर्व्वतः ( सर्व्वत्र जगति ) सञ्चरन्ति स्म ( भ्रान्तवन्तः ) इति पद्ययोः सार्थोऽन्वयः ॥ २७ ॥

२८ । सर्व्वतः (सर्व्वत्र) उत्सवः (आनन्दप्रकाशकानुष्ठानधारा च) समचीयत (अवर्द्धत) प्रमोदः (इष्टप्राप्तिसुखम् च) ( चकारेण समचीयतेत्यनुकृष्यते उभयोरेव प्राधान्यसूचनाय चकारद्वयम् ) असौ निरुत्सवनिरानन्ददशा ( उत्सवहीना आनन्दशून्या च दशा अवस्था या इयन्तं कालमवस्थिता सा ) च अलीयत ( लुप्ता ) क्रियासमुच्चयद्योतकोऽत्र चकारः । यद्यपि प्राणिना सुखानि दुःखानि च व्यक्तिभेदभिन्नानि चक्रवत्परिवर्त्तन्ते, तथापि पार्व्वतीकैलासगमनसमये ( पक्षान्तरे ) लक्ष्मीनारायणप्रथममेलनकाले सर्व्वेषामेव शरीरिणा सुखमेवाभूत् न तु दुःखलेशोऽपीति भावः । अन्वयादिक पद्ययोः समानम् ॥ २८ ॥

२९ । सुगमः श्लोकः ।

३० । ( पक्षयोः ) तदा ( तस्मिन् काले ) विस्मृताखिल-

वृत्तीना ( विस्मृताः अखिलवृत्तयो यैः तेषाम्, वृत्तिः चित्तधर्म्मः, प्रमोदमयवृत्तिभिन्नसकलवृत्तिरहितानामित्यर्थः ) प्रमोदाक्षिप्तचेतसाम् ( प्रमोदैराक्षिप्तम्, अन्यस्मात् समाकृष्ट चेतो मनो येषा तैः ) ससम्भ्रमाणा ( प्रमोदजनितत्वरायुक्तानाम् ) सिद्धानाम् (स्वनामप्रसिद्धदेवयोनिविशेषाणाम् ) इति ( वक्ष्यमाणप्रकाराः ) वाचः ( तिङ्सुबन्तवाक्यानि ) श्रुताः (अश्रूयन्त, सर्व्वेषा श्रुतिविषयता प्राप्ताः ) इत्यर्थः ॥ ३० ॥

३१। ( पक्षयोः ) हे शान्ते, चेतनाना ( प्राणिनाम् ) चेतसि ( हृदये ) चिराय ( चिरकाल ) चर ( विचर, तत्परित्यागावसरस्ते माभूत् ) आनन्दसान्द्रतरता ( आनन्दस्य सान्द्रतरता, निविडतरत्वम् ) विवृद्ध्यै ( विशेषेण वृद्ध्यै निविडतमत्वप्राप्त्यै ) त्वरता ( त्वरिता भवतु ) सापायाया आनन्दधाराया मध्ये अतीतदुःखस्मरणेऽपि दुःखानुत्पादेन आनन्दस्य निविडता भवति,—तन्मध्ये अतीतदुःखस्मरणस्याप्यभावे निविडतरता भवति, तादृशानन्दधाराया अनपायित्वे निविडतमता भवति–अतीतदुःखस्मरणविरहितानन्दधारा सत्वरम् अनपायिरूपेणावतिष्ठतामित्यर्थः। रे खेद, सम्प्रति (इदानीम्) महाप्रयाण ( महायात्रा ) विधेहि ( कुरु, या त्वया यात्रा कृता सैव पुनरनागमनाय भवतु )। अत्र हेतुमाह—त्रिलोकजननी भूयः शिवसर्गयुक्ता। ( शिव०पक्षे ) त्रिलोकजननी ( जगदम्बा दुर्गा ) शिवसर्गयुक्ता ( शिवसङ्गप्राप्ता)। ( पक्षान्तरे ) त्रिलोकजननी ( लक्ष्मीः ) शिवसर्गयुक्ता ( कल्याणजननाय तत्परा ) इति विशेषः। अन्यत् मूलपादटीकाया द्रष्टव्यम् ॥ ३१ ॥

इत्यष्टमसर्गटीका।

## नवमः सर्गः ।

१। यदिति। (शिव०पक्षे) यत् अखिलेशपुरम् (अखिलः सर्व्वः क्षित्यादिसकलवस्तुरूपः यः ईशः शिवः तस्य पुरं कैलासः, सर्व्वात्मकस्य सर्व्वत्रैव पुरत्वसम्भवेऽपि तस्य शिवरूपतायां यत्पुरं तस्यैवात्र ग्रहणात्, सर्व्वात्मकस्यापि पुरान्तरापेक्षया तत्र प्रीतिसूचनाय, अखिलेति ईशेति च पदद्वयम्) श्रिया रहितं (शोभाशून्यम्) अभवत् (अभूत् सतीदेहत्यागादित्याशयः) अथ (उमाया आगमनानन्तरम्) तत् (पुरम्) सुमहोज्ज्वलम् (सुष्ठुना महेन उत्सवेन उज्ज्वलं दीप्रम्) विविधवाद्यरवैः (बहुविधवाद्यध्वनिभि.) जयादिभिः (जयाविजयाप्रभृतिभिर्योगिनीभिः) च अभिपूरितं (परिपूर्णम्। अजनि (जातम्) विविधवाद्यध्वनिरानन्दमुखरयोगिनीनाञ्च सम्मर्दस्तत्रासीदित्यर्थः। श्लिष्टोऽर्थो मूलसप्तमश्लोकस्याधस्ताद् द्रष्टव्यः। (पक्षान्तरे) अखिलेशः (त्रिलोकेशः विष्णुः, तस्य पुरं वैकुण्ठधाम) श्रिया (लक्ष्म्या) रहितं (विहीनम्) अभवत् (आसीत्)। अथ (लक्ष्मीस्वयंवरणानन्तर) यैमलचरणकमलं कठिनस्थल्या पीडितं माभूदिति कठिनस्थलं स्मृत्वा हलहलेतिरवं कुर्व्वद्भिः जयादिभिः जयविजयप्रभृतिभिः किङ्करगणैः। इति विशेषः। समानमन्यत् ॥ १ ॥

२। (पक्षयोः) शुकपिकादिकमुखरपक्षिणः (शुकपिका आदयो येषां ते शुकपिकादिकाः शुकपिकादिशब्दाद्बहुव्रीहौ वैकल्पिकसमासान्तात् शुकपिकादिकाः मुखरपक्षिणः मधुरस्वराः पक्षिणः विहङ्गाः) शुभस्तवगायनाः (श्रेयस्करस्तुतिगीतिरताः) मुनिगणाश्च नवनवप्रमदैः (नवनवैः प्रतिक्षणनूतनैः—आनुपूर्व्ये द्विर्वचनम्) प्रमदैः (हर्षैः) नरतां

गतम् ( नवत्वं, नवावस्था प्राप्तम् ) अदःपुरं ( शिव०पक्षे कैलासम्, पक्षान्तरे वैकुण्ठम् ) क्षणात् ( तत्कालमध्ये, क्षण उत्सवः त प्राप्येति वा ) मुखरं विदधुः ( वाचालं चक्रुः ) वाद्यादिनिवृत्त्यनन्तरं शुक-पिकादिध्वनिभिर्मुनिगणकृतस्तवगीतिभिश्च श्रोतारो मेनिरे स्वयं पुरमेव मुखरं वाग्विन्यासं करोतीति भावः ॥ २ ॥

३ । (पक्षयोः) अनुजीविनः (अनुजीविनः किङ्कराश्च अनुजीविन्यः किङ्कर्यश्च एकशेषात् ते अनुजीविनः) निजधामगौ (शिव०पक्षे कैलास-गतौ ; पक्षान्तरे वैकुण्ठगतौ ) त्रिजगतां पितरौ ( असंख्यानां त्रिजगतां अनादिसृष्टौ—स्वर्गमर्त्त्यपातालरूपं जगत्त्रयम् असंख्यम्, एकस्य नाशा-नन्तरमपरस्योत्पत्तिरेवं क्रमस्यानादित्वात्—पितरौ मातापितरौ, शिव०-पक्षे, पार्व्वतीपरमेश्वरौ ; पक्षान्तरे, लक्ष्मीनारायणौ) मणिमये महासने (रत्नमये श्रेष्ठासने) विनिवेश्य (उपवेश्य) विमलचन्दनकुङ्कुमचन्द्र-मोमृगमदैः (विमलाः स्वच्छाः चन्दनकुङ्कुमचन्द्रमोमृगमदाः, चन्दनञ्च कुङ्कुमञ्च चन्द्रमाः कर्पूरश्च, मृगमदः कस्तूरी च ते, तैः ) अलिपन् ( लिप्तवन्तः ) चन्दनादिभिरनुलिलिपुरित्यर्थः ॥ ३ ॥

४ । ( पक्षयोः ) कतिपये (कियन्तः अनुजीविनः) नलिनेक्षणौ ( कमलनयनौ त्रिजगतां पितरावित्यनुवर्त्तते ) नलिनैः ( पद्मैः ) सुरभि-पुष्पमयैः ( सुगन्धिपुष्पप्रचुरैः ) दामभिः ( माल्यैः ) साधु ( उत्कृष्ट यथा स्यात् तथा ) अलमकुर्व्वत ( भूषितवन्तः ) तथापि ( साध्वलङ्कर-णेऽपि ) परां परितृप्तिम् ( साध्वलङ्करणं कृतमिति परमां प्रीतिम् ) न उपागमन् ( प्राप्ताः ) इतोऽपि साध्वलङ्करणं कथं भवेदिति चिन्तया पुनःपुनर्योजयतां तेषां परमपरितृप्तेरभावावगमादित्याशयः ॥ ४ ॥

५। (पक्षयोः) कतिपये इति। जननीतनुवेदना (जनन्याः, शिव०पक्षे उमायाः; पक्षान्तरे लक्ष्म्याः, तनुवेदना शरीरव्यथा) चेत् (यदि) कमलकैरवमालिकयापि (पद्मकुमुदमाल्येनापि स्यादिति शेषः) पुनः (किन्तु) इय स्रक् (मालिका) नयनयोरमृतम् (अस्माकं नयनद्वयस्य अमृतवत् तृप्तिदायिका) इह (अस्यामवस्थायाम्) किं कार्य्यम् (कर्त्तव्यं किम्) कतिपये (अन्ये केचित्) इदं (इति) समशेरत (संशयाकुला आसन्) मालेयं नवनीतकोमलाया मातुः कण्ठ-देशेऽर्पिता तदीयतनुं यदि स्वीयकठिनस्पर्शेन व्यथयेत् तत् किम् नार्पयामः, किन्तु सुदृश्या मालिकेयम् अस्या एव योग्या, तत् किम् अर्पयामः? इति सन्देहमूढाः केचिदनुजीविनोऽभवन्निति सरलार्थः॥ ५॥

६। समयेङ्गितवेदिनः (समयः अवसरः इङ्गितमभिप्रायसूचक-दृष्टिविशेषादि तद्वेदिनः, तदभिज्ञाः) कतिपये (तदन्ये केचित्) तद्गतचेतसा (अनन्यमनसा) शिशिरशीत-सुवासित-वारिणा (हिम-शीतलकुङ्कुमादिसुरभीकृतजलेन) रुचिर-चामरजेन (मनोज्ञचामर-सञ्चालनसम्भूतेन) वायुना (वातेन, प्रकरणात् ताविति गम्यते) चिरम् (दीर्घकालम्) उपासत (असेवन्त)॥ ६॥

७। (पक्षयोः) कतिपये (कियन्तोऽनुजीविनः) चरणचारण-कौशलयोगतः (चरणचारणकौशलेन पादसंवाहननैपुण्येन योगः सम्बन्धो यस्य तस्मात्, आद्यादिभ्य उपसंख्यानमिति सार्व्वविभक्तिकः पञ्चम्या-स्तसिः यद्वा चरणचारणकौशलयोगं तायते पालयति इति तायधातोः क्विपि पञ्चम्येकवचनेन सिद्धम्, एतच्च सुवासनादिरयनेनान्वेति। विविधधूपेति (विविधाना धूपाना यद्विधानसुवासनं विधानेन गन्धयुक्ति-

शास्त्रानुसारेण मुष्टुशासनं सौरभसाधनं तस्मात् तत् सम्पाद्येति ल्यब्लोपे पञ्चमी ) आत्मनश्चिराद्दृहितं ( स्वस्य चिराभिलषितम् ) प्रभुसेवनम् (शिव० पक्षे, प्रभ्वोः उमामहेश्वरयोः ; पक्षान्तरे, लक्ष्मीनारायणयोः सेवन ) अञ्जसा ( द्रुतं ) व्यदधत ( अकुर्वत ) ॥ ७ ॥

८। (शिव०पक्षे) कतिपये, बलिवन्दितौ ( नायमात्मा बलहीनेन लभ्यः इति श्रुतेः, बलिभिः योगबलवद्भिः वन्दितौ ) परमौ ( परा श्रेष्ठा मा मितिः ज्ञानं ययोः तौ सर्व्वज्ञौ) प्रभुवरौ ( उमामहेश्वरौ—प्रभुश्वरश्च प्रभुवरा च तौ ) बहुविधैः बलिभिः ( पूजोपचारैः ) परं ( प्रकृष्टं यथा स्यात् ) आर्च्चयन् (पूजयामासुः) अपरे च गतक्रियाः ( विगतशारीर-व्यापाराः ) कृपणाः ( कदर्य्याः ) धनमिव ददृशुरेव ( केवल दृष्टवन्तः ) कृपणा धनं न भुञ्जते न ददति केवलं दृष्ट्वैव तृप्यन्ति तथा अन्येऽनु-जीविनः केवलं तद्दर्शनसुखमात्रमन्वभूवन्निति भावः। (पक्षान्तरे विशेष.) बलिवन्दितौ (बलिना दैत्यराजेन वन्दितौ नमस्कृतौ अथवा बलेर्व्वन्दिता बद्धत्वं याभ्यां तौ, लक्ष्म्याः स्वागाद् नारायणस्य मायया च बलेर्वन्दित्व-मभूदिति पुराणम्) अपरमौ इत्यकारः प्रश्लिष्टः, न परा अपरा अनन्या मा लक्ष्मीर्ययोः शक्तिशक्तिमतोरभेदेन नारायणादनन्यत्व लक्ष्म्या, तादात्म्याच्च स्वतोऽनन्यत्वमित्यपरमौ। प्रभुवरौ (लक्ष्मीनारायणौ) ॥८॥

९-१६। अनन्तरश्लोका मूलपादटीकाश्च व्याख्यानप्रायाः। अव्याख्याताश्चास्तु सुगमाः ॥ ९-१६ ॥

इति नवमसर्गटीका।

समाप्तश्चायं काव्यटीकाग्रन्थः।

# शुद्धि-पत्रपरिशेपः ( मूलकाव्यस्य )

| अशुद्धम् | शुद्धम् | सर्गे | श्लोके |
|---|---|---|---|
| *शिभिये शिवम्* | *शिभियेशिवम्* | १ | ११ |
| सेनयोः | सैन्ययोः | ६ | २८ |
| मयेतिकृत्वा | मयेति कृत्वा | ६ | ३२ |
| प्रान्तकान्त | प्रान्तकान्त | ८ | १८ |

## ( टीकायाः )

| | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| स्तुत्ययाह स्तवनीय-वाहो | स्तुत्यवाह वाहन-भूतवृपस्य धर्मरूपतया स्तवनीयत्वात्, यद्वा वकारवकारयोर्भेदेऽपि पूर्वैः श्लेपाभ्युपगमेन स्तवनीय-वाहो | १६३ | ११-१२ |

दत्तेपु द्रुतबोधाय कमाद्याख्येपु लक्ष्मसु ।
प्रतीक्ष्येपु प्रमादो नः क्षम्यो भावबुधैर्बुधैः ॥

परायत्तमुद्राक्षरन्यासदोपा-
दशुद्धेर्यथादर्शनं शोधनेऽपि ।
यदीहावशेपो भवेत् तत्स्वरूप
बुधैर्ज्ञापनीयोऽस्म्यहं सानुकम्पैः ॥

श्रीश्रीजीवन्यायतीर्थभट्टाचार्य्यः,
...ङ्गमूर्त्ति २४ प्रगणाविभागे भट्टपल्लीग्रामे ।
...Bh...tr... r... 24 Pe...rs. (Be...l)